# THE KAVYA PRAKASA,

OR

## A TREATISE ON SANSKRITA RHETORIC,

BY

MAMMATA BHATTA,

WITH

**EXPLANATORY AND ILLUSTRATIVE NOTES.**

BY

MAHESA CHANDRA NYAYARATNA,

*Professor of Rhetoric in the Calcutta Sanskrit College.*

---

BY ORDER OF

E. B. COWELL, Esq., M. A.

CALCUTTA:

Printed at the Kavya Prakasa Press.

1866.

272 - C.

Digitized by Google

# काव्यप्रकाशः।

अलङ्कारसन्दर्भः।

## मम्मटभट्ट-विरचितः।

कलिकाता-संस्कृतविद्यालयालङ्कारशास्त्राध्यापक-

श्रीमहेशचन्द्रन्यायरत्न-

सङ्कलित-तात्पर्य्यविवरणान्वितः।

तेन च

संशोधितः

श्रीमद् इ० वि० काउएल साहेवस्य

अनुमत्या

---

कलिकाता-राजधान्यां

काव्यप्रकाशयन्त्रे मुद्रितः।

संवत् १९२३।

खृष्टाब्दः १८६६।

Digitized by Google

# PREFACE.

Of all the Hindu treatises on Rhetoric there is none which can be compared for originality and vigour with the Kávya Prakásá. Unfortunately its style is so terse that it is not unfrequently very obscure, and hence it is one of those books which lose half their value, if they are printed without a commentary. But in order that a commentary should be useful, it must be easier than the text which it is to explain;—this is by no means the case with the one which I have seen, the Kávya Prakaásádarsá of Mahéswara.

My friend and teacher, Pandit Mohesh Chandra Nyáratna, undertook, at my request, to prepare a commentary suitable for the students of the Sanskrit College; and I had hoped to have read the sheets with him as they were printed. Before the work, however, was half done, I was obliged from ill-health to leave India; but he has carried on the printing during my absence; and I feel confident that his commentary will contain all that can be required to understand the original text.

Edw. B. Cowell.

London,
*The 28th June*, 1866.

Digitized by Google

# विज्ञापनम् ।



काव्यप्रकाशोऽयमलङ्कारशास्त्रेष्वेकतमो निबन्धः। यस्मिन् खल्ववगते काव्यस्य निर्माणे स्वरूपदोषगुणालङ्कारादीनामवधारणे च शक्तिरुन्मिषति, तदलङ्कारशास्त्रम्। यथा च व्याकरणम् भाषायां व्युत्पत्त्यै अपेक्ष्यते, तथा अलङ्कारशास्त्रमपि काव्ये नैपुण्यायेति(१) एतदप्यवश्यमध्येतव्यश्रेण्यामन्तर्भावमर्हति ।

यत्तु, अलङ्कारशास्त्रमश्लीलतया नोपदेशार्हमित्यर्वाचीनानां भ्रमः, तत्र केचन नवीना अलङ्कारनिबन्धकृतएव मूलम्,

---

(१) न केवलमलङ्कारशास्त्रं विना काव्ये नैपुण्यमेव न भवति, अपितु वाक्यदोषादोषदृष्टिरपि न जायते। यो हि अलङ्कारशास्त्रं न जानाति केवलं व्याकरणकोषादिकञ्च जानाति, स कथं जानीयात् 'चिन्तारत्नमिव च्युतोऽसि करतः' इति 'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः' इति चानयोः तुल्येऽपि उपमानोपमेययोर्लिङ्गभेदे पूर्व्वं दुष्टं न परमिति ? एवं जघनकाञ्चीकर्णावतंसपदयोरविशिष्टेऽपि पौनरुक्त्ये पूर्व्वं दुष्टं परमदुष्टमिति ? यथाच पूर्व्वयोर्दुष्टत्वं न परयोः, तथा क्रमेण २६२ पृष्ठायां १८४ पृष्ठायाञ्च प्रकाशकृता प्रतिपादितम् ।

Digitized by Google

ते हि काव्यमात्रनिरूपणाय प्रवृत्तेऽप्यलङ्कारशास्त्रे, प्रसङ्गात् सविस्तरं शृङ्गाररसमपि निर्णिन्युः, उदाजहुश्च प्रायशः शृङ्गारविषयकाण्येव काव्यानीति। वामनदण्डिप्रभृतीनामन्तूर्द्धतनानामालङ्कारिकाणां नैतादृशी रीतिः। तैर्हि अलङ्कारनिबन्धेषु शृङ्गाररसादयो न निरूपिताः, नापि चातीवाश्लीलानि उदाहरणानि प्रदर्शितानि। वस्तुतः प्रायः संस्कृतकवीनामेष महान् दोषः, यत् सर्वत्रैव शृङ्गाररसेनैव व्यवहर्तुमीहन्ते स्म, किमधिकम्, मङ्गलमाचरन्तोऽपि देवविषयकमपि शृङ्गाररसमवर्णयन्(२), आनयंश्चाप्रासङ्गिकेष्वपि विषयेषु (अन्ततः दृष्टान्तविधयापि) शृङ्गाररसम्(३)।

अलङ्कारशास्त्रं कदा केन प्रथममाविष्कृतमिति निर्णेतुं न शक्यमस्माभिः। परन्तु, प्रसिद्धेषु सर्वेष्वेव अलङ्कारसन्दर्भेषु कालिदासकृतेरुल्लेखात् कालिदासादुत्तरकालमेवास्य बाहुल्येन चर्चाऽजनीति सम्भाव्यते।

सत्यप्यस्मिन् दोषगुणादीनामपि निरूपणीयत्वे अलङ्कारनाम्नैव व्यपदेशबीजं वयं तत्त्वतो न विद्मः। परन्तु, अलङ्क्रियतेऽनेनेतिकरणव्युत्पत्तिनिष्पन्नो यमकोपमादिबोधको

---

(२) दृश्यताम्, 'वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि दृष्ट्वा दशाननकृतागमनभ्रमेण। भयोऽपि शैलपरिवर्त्तभयेन गाढमालिङ्गितो गिरिजया गिरिशः पुनातु' इति 'मानापनोदनविनोदनते गिरीशे ......' इत्यादि च।

(३) दृश्यताम्, 'चकोर्य्यएव चतुराश्चन्द्रिकापानकर्म्मणि।
विनाऽवन्तीर्न निपुणाः सुदृशो रतनर्म्मणि' इति॥

नायमलङ्कारशब्दः, किन्तु अलङ्कृतिरलङ्कार इतिभावव्युत्पन्नो दोषापगमगुणालङ्कारसम्वलनकृतसौन्दर्य्यपरः, तत्प्रतिपादकत्वादेव अस्यालङ्कारनाम्ना व्यपदेश इत्युन्नयामः। अत्र साधकञ्च वामनसन्दर्भमत्र उदाहरामः, "काव्यं ग्राह्यमलङ्कारात्।१।......। सौन्दर्य्यमलङ्कारः।२। अलङ्कृतिरलङ्कारः। करणव्युत्पत्त्या पुनरलङ्कारशब्दो यमकोपमादिषु वर्त्तते। स दोषगुणालङ्कारहानादानाभ्याम्।३। स खलु अलङ्कारो दोषहानात् गुणालङ्कारयोरादानाच्च सम्पाद्यः कवेः" इति।

अलङ्कारनिबन्धाश्च बहवो विद्यन्ते,तेषु अस्मदवलोकितानां शौद्धोदनिसूत्र-वाभटालङ्कार-वामनसूत्रवृत्ति-दण्डिकृत-काव्यादर्श--भोजदेवकृतसरस्वतीकण्ठाभरण--महिमभट्टकृत-व्यक्तिविवेकाभिनवगुप्तकृतालोचनग्रन्थानाम्(४) अधस्तनः, पीयूषवर्षकृतचन्द्रालोकाप्यदीक्षितकृतचित्रमीमांसा-तत्कृतकुवलयानन्द-विश्वनाथकृतसाहित्यदर्पण-गोविन्दठक्कुरकृत-काव्यप्रदीप--जगन्नाथकृतरसगङ्गाधर-केशवमिश्रकृतालङ्कारशेखर-प्रभाकरकृतालङ्काररहस्यानामूर्द्ध्वतनोऽयं काव्यप्रकाशः।

---

(४) व्यक्तिविवेकालोचनग्रन्थौ अत्र खण्डितावेव स्तः इति न तौ सम्पूर्णौ दृष्टौ। भट्टलोल्लटादीनां निबन्धा नास्माभिरधिगता इति नात्र तेषामुल्लेखः कृतः। दशरूपादयश्च अभिनेयकाव्यमात्रप्रतिपादकाः, रसतरङ्गिणीप्रभृतयश्च रसादिप्रतिपादकाः, नैते अलङ्कारनाम्ना व्यपदेशमर्हन्तीति न तेऽप्यत्रोल्लिखिताः।

सर्व्वेषामेवालङ्कारशास्त्राणां काव्यमेव प्रतिपाद्यमिति तदुपयोगितया सर्व्वत्रैव (कुवलयानन्दं विहाय, तत्रालङ्कार एव निरूपितः) दोषगुणालङ्काराः(५) निरूपिताः, रसादयस्तु क्वचित् निरूपिताः क्वचिन्न न। तथाहि वाग्भटालङ्कारादौ रसो निरूपितः, वामनवृत्त्यादौ न। वामनवृत्तौ काव्यसमयशब्दशुद्धी(६) निरूपिते अन्यत्र न। वाग्भटालङ्कारे काव्यकरणप्रणाली लिखिता, नान्यत्र। चन्द्रालोके काव्यधर्म्मो लक्षणं(७) न्यरूपि नान्यत्र। काव्यप्रकाशादौ अभिधालक्षणाव्यञ्जनारूपाः शब्दवृत्तयः (८) निरूपिताः, न

---

(५) रीतिरपि सर्व्वत्र निरूपिता; किन्तु क्वचित् स्वातन्त्र्येण क्वचित्तु गुणालङ्कारयोरन्तरिति तस्याः न स्वातन्त्र्येणोल्लेखः कृतः।

(६) 'नैकं पदं द्विःप्रयोज्यं प्रायेण' इत्यादिनियमः काव्यसमयः। स च मम्मटादिमते अनवीकृतत्वदोषाभावादौ पर्य्यवस्यति। 'रूद्रावित्येकशेषो नेयः' इत्यादिवैयाकरणसिद्धान्तः शब्दशुद्धिः। सा च व्याकरणशास्त्रविषयतया मम्मटादिभिरुपेक्षिता।

(७) 'अल्पाक्षरा विचित्रार्थख्यातिरक्षरसंहतिः।
उपाकान्तेनानुगतः शूरः शौरिरयं पुनः' इत्यादिरूपम्।
अक्षरसंहतिर्नाम लक्षणन्तु वामनादिमते व्यासरूपे अर्थगुणे ओजसि अन्तर्भूतम्। मम्मटमते वैचित्र्यमात्रं तत् न स्वतन्त्राभिधानार्हम्।

(८) शब्दवृत्तीनां विचारोऽतिप्राचीनेषु वामनवाग्भटदण्डिभोजदेवादिनिबन्धेषु न दृश्यते। तेषामधस्तनैरेव एष विचारः प्रावर्त्ति।

वाभटालङ्कारादौ। साहित्यदर्पणे दृश्यकाव्यनाटकादिन्यरूपि, नान्यत्र कुत्रचित्। एवमन्यदपि ज्ञेयम्। दोषगुणालङ्काराश्च सर्व्व एव न सर्व्वत्र समानाः, वामनभोजादिमते अलङ्कारदोषाः स्वतन्त्राः सन्ति, विधेयाविमर्शनामानः केचन दोषाः स्वतन्त्रा न सन्ति। मम्मटादिमते तद्वैपरीत्यम्। दण्डिमते दोषा दशैव, भोजमते पदवाक्यवाक्यार्थगताः दोषाः प्रत्येकं षोड़श, अन्यमते चान्यसंख्यकाः। वामनमते गुणाः शब्दगता अर्थगताश्च प्रत्येकं दश। भोजमते चतुर्विंशतिः, एवं दोषाभावरूपा वैशेषिकनामानो बहवः। मम्मटादिमते न शब्दार्थगताः गुणाः किन्तु रसगतास्त्रयएव। दण्डिभोजादिमते प्रहेलिकादयः अलङ्काराः न वक्रोक्त्यादयः,वामनमम्मटादिमते तु वैपरीत्यम्।

एवं काव्यलक्षणेऽपि परस्परं मतद्वैधं विद्यते, गुणालङ्कारयुक्तौ शब्दार्थौ काव्यमिति वामनमतम्। अदोषावित्यधिकविशेषणयुक्तौ तौ इति मम्मटमतम्। एवमेव प्रभाकरमतम्। निर्दोषं गुणालङ्काररसवत् काव्यमिति भोजमतम्। गुणालङ्काररीतिरसोपेतः साधुशब्दार्थसन्दर्भः काव्यमिति वाभटमतम्। निर्दोषं गुणालङ्कारलक्षणरीतिदृष्टिमत् वाक्यं काव्यमिति पीयूषवर्षमतम्। रसादिमद्वाक्यं काव्यमिति शौद्धोदनिमतम्। एवमेव विश्वनाथादिमतम्। इष्टार्थोपेता पदावली काव्यमिति दण्डिमतम्। 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति जगन्नाथमतम्। ध्वन्यात्मकं वाक्यं

काव्यमिति महिमभट्टमतम् । रसालङ्कारयुक्तं सुखविशेष-साधनं वा काव्यमिति केशवमिश्रमतम् । एवमन्यमतेऽप्यन्य-विधम्(८) ।

अलङ्कारनिबन्धानां रचनाप्रणाल्योऽपि विविधाः । वामनसूत्रादौ दोषगुणालङ्काराः क्रमेण निरूपिताः । काव्यादर्शादौ तु प्रथमं गुणः ततोऽलङ्कारः ततश्च दोष इति, (किन्तु सर्व्वत्रैव प्रथमं काव्यलक्षणमभ्यधायि) । वामनेन दर्शनशास्त्र-सूत्ररीत्या सूत्राणि प्रणीय(१०) तेषां वृत्तिरकारि, उदाहृत-ञ्चान्यकृतं काव्यम् । वाभटदण्डिप्रभृतिभिः पद्येनैव लक्षण-मुदाहरणं लक्षणसमन्वयविचारादिकञ्च सर्व्वं प्रादर्शि(११) ।

(८) 'काव्यशब्दोऽयं गुणालङ्कारयुक्तयोः शब्दार्थयोर्वर्त्तते' इति वामनवृत्तिः । 'निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतं रसान्वितं कविः कुर्व्वन् कीर्त्तिं प्रीतिञ्च विन्दति' इति सरस्वतीकण्ठाभरणम् । 'साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितं स्फुटरीतिरसोपेतं काव्यं कुर्व्वीत कीर्त्तये' इति वाभटालङ्कारः । 'निर्दोषा लक्षणवती सरीतिर्गुणभूषिता । सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक्' इति चन्द्रालोकः । 'काव्यं रसादिमत् वाक्यं श्रुतं सुखविशेषकृत्' इति शौद्धोदनिसूत्रम् । 'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' इति काव्यादर्शः । 'आदिपदेन अलङ्कारपरिग्रहः, तथाच तदुभयान्यतरवत्त्वं सुखविशेषसाधनत्वं वा लक्षणम्' इति अलङ्कारशेखरः ।

(१०) सूत्रं वामनकृतमन्यकृतं वेति वामनवृत्तितो न ज्ञायते, किन्तु 'यत्तु वामनेन उक्तम् रीतिरात्मा काव्यस्येति' इति साहित्यदर्पणादिदर्शनात् वामनकृतं सूत्रमिति व्यवह्रियते । रीतिरात्मा काव्यस्येति हि सूत्रम् ।

(११) प्रसादवत् प्रसिद्धार्थम् (लक्षणम्) इन्दोरिन्दीवरद्युति । लक्ष्म लक्ष्मीं तनोतीति (उदाहरणम्) प्रतीतिसुभगं वचः (समन्वयः)' इतिदण्डी ।

Digitized by Google

एषैव पीयूषवर्षादीनां रीतिः। भोजदेवादिभिः लक्षणादिकं पद्येन,विचारादिकं गद्येनाकारि। मम्मटादिभिर्वक्तव्यविषयः कारिकया संक्षेपेण प्रदर्श्य वृत्त्या विस्तारितः, उदाहारि च अन्यप्रणीतमेव काव्यम्। जगन्नाथादिभिस्तु उदाहरणादन्यत् सर्व्वं गद्येनालेखि, व्यरचि च पद्येन सर्व्वमेव नूतनमुदाहरणम्(१२)। इत्येवं बहुशो विभिन्नरूपत्वेऽप्यलङ्कारनिबन्धानां मुख्यफलांशे प्रायस्तुल्यतैव, यस्य-कस्यचिदेव हि निबन्धस्य पाठात् स्थूलतः काव्यतत्त्वावगतिर्भवत्येवेति।

प्राचीनतराणां वामनवाभटदण्डिभोजदेवादीनां निबन्धाः अतीव प्रसन्नाः प्रायो विचारविहीनाश्च, स्थूलतः प्रकृतविषयप्रतिपादनार्थमेव हि ते प्रवृत्ताः, इति तदंशे तेषां निर्व्विवादएवोत्कर्षः। युक्त्या स्वोक्तिमुपपादयतां सूक्ष्मञ्च विषयमाविष्कुर्व्वतां पुनर्मम्मटादीनां कठिना अपि निबन्धाः प्रतिपाद्यांशे नितराम् उत्कर्षमाश्रयन्ते।

प्राचीनेषु अलङ्कारनिबन्धेषु (अस्मदवलोकितेषु) वामनवृत्तिरेव उत्कृष्टा, तस्यां हि क्वापि क्वापि स्वोक्तौ समीचीना युक्तिरुद्भाविता, (शब्दशुद्धिं विना) अप्रासङ्गिकविषयो नावर्णि, नापि च शृङ्गाररसः, यदनुषङ्गात् अश्लीलतादोषस्य सम्भवः, अतएव नास्ति तत्राश्लीलता-दोषः, नापि चेयं

---

(१२) 'निर्माय नूतनमुदाहरणानुरूपं काव्यं मयाऽत्र निहितं न परस्य किञ्चित्। किं सेव्यते सुमनसां मनसापि गन्धः कस्तूरिकाजननशक्तिभृता मृगेण' इति रसगङ्गाधरः।

वृत्तिरतीव विस्तृता। प्रसिद्धेषु तावदलङ्कारनिबन्धेषु बालानां प्रथमपाठोपयोगिनी एषैवेति मन्यामहे।

नवीनेषु निबन्धेषु रसगङ्गाधरएव प्रधानम्। अत्र हि नैकोऽपि विषयः (प्रायः) निर्युक्तिक उक्तः, प्रत्युत सर्व्व एव ते अतीव सूक्ष्मानुसन्धानेन निर्णीताः, (नवीनत्वेऽपि) नातीवाश्लीलतादोषः, नापिच रचनायाः काठिन्यं, (यच्च क्वापि क्वापि काठिन्यं दृश्यते, तत् प्रतिपाद्यविषयाणां दोषः, न ग्रन्थकर्त्तुः)। यानि नवीनानि उदाहरणानि प्रणीतानि, तानि अतीव मनोहरणानि (ततश्च अस्यावलोकने प्रसङ्गादभिनवकाव्यावगतिरपि भवति)। इत्येवमस्य बहवो गुणाः विद्यन्ते, केवलमेको दोषः, यदनेकत्र नैयायिकसमयानुसारितर्केण दूषणभूषणादिकरणमिति(१३)। फलतः अलङ्कारशास्त्रे व्युत्पित्सूनामेतदध्ययनमतीवावश्यकम्।

काव्यप्रकाशोऽपि नापकृष्टः, अत्र हि अश्लीलार्थः कोऽपि (दर्पणइव) न प्रतिपादितः, (केवलमुदाहरणान्येव कानिचिदश्लीलानि), नापिच लक्षणायाः अलङ्काराणाञ्च (दर्पण इव) निरर्थमचमत्कारिणः बहवः भेदाः प्रदर्शिताः, वामनवाभटाद्यनालोचिता व्यञ्जना वृत्तिः व्यङ्ग्यार्थश्च सोपपत्ति

(१३) 'अपिच काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तं, प्रत्येकपर्य्याप्तं वा ?' इत्यादि। एतच्च नालङ्कारशास्त्रीयविचारार्हम्, यदुक्तम् 'कठोरतार्किकालापैरलङ्कारपरिष्क्रिया। वासीकुठारकुद्दालैर्नासाभरणरञ्जनम्' इति।

Digitized by Google

सविस्तरञ्चान्यदपि। दोषाश्च वामनदण्डिवाभटभोजदेवादिकृताननेकनिबन्धानपेक्ष्य अत्र समीचीनतया निरूपिताः, वामनोक्तदशगुणानां स्वाभिमतगुणदोषाभावयोरन्तर्भावाय सुष्ठु युक्तिकौशलं प्रादर्शि। प्रायशः उत्कृष्टा एवालङ्कारा निरूपिताः, अनेकत्र लिपेः सारवत्तापि विद्यते। इत्थमेवमत्र यथा बहवो गुणा विद्यन्ते, तथा दोषा अपि केचन। तथाहि काव्यानुपयोगी, सङ्केतः कुत्र गृह्यते? गौर्वाहीक इत्यत्र कुत्र लक्षणा? इत्यादेर्विचारः, अनुप्रासोपमादीनलङ्कारान् अनिरूप्यैव तद्घटितध्वनिप्रभेदप्रदर्शनम्, यो हि अनुप्रासोपमादिकं न जानाति, स कथं तन्मूलकं ध्वनिप्रभेदमवबुध्येत, अन्योदाहरणसम्भवेऽपि शृङ्गारोदाहरणप्रदर्शनेन निरर्थमश्लीलीकरणम्, तथा उपमालङ्कारस्य (वैयाकरणरीत्या) क्यच्क्यङादिभेदेन अचमत्कारितया विभजनम्। सन्त्वेवमादयो दोषाः बहुनिबन्धसाधारणाः, किन्त्वयमेको महान् दोषः, यत् कस्यचित्कस्यचिदंशस्य(१४) अभिप्रायो दुरधिगम इति, यं कृतधियोऽपि कृतिनस्तत्त्वतोऽधिगन्तुं नार्हन्ति। किमधिकम् एकेन यदंशस्य(१५) योऽभिप्रायोऽवधारि, अन्येन तदंशस्यैव तद्विपरीतइति। अतएवास्य बह्वाष्टीकाः विद्यन्ते। (सम्भावयामः) काव्यप्रकाशस्य पण्डितसमाजे समादरणीयतायां काठिन्यमप्येको हेतुः, प्रायो हि पण्डिताः समीचीन-

---

(१४) 'अनयोर्लक्ष्यस्य लक्षकस्य च' (१५ पृष्ठा) इत्यादेः।

(१५) श्लेषविचारादेः (२४० पृष्ठा)।

Digitized by Google

विषयमपि प्रसादगुणवन्तं सन्दर्भं नाद्रियन्ते, निःसारमपि दुर्बोधमेव बहुमन्यन्ते। आस्तां काठिन्यं, तथाप्ययोऽप्यवश्यं पाठ्यो ग्रन्थः, साहित्यदर्पणाद्यपेक्षया सारवत्तयोत्कृष्टश्चेत्य-वश्यमङ्गीकुर्म्मः।

काव्यप्रकाशस्य द्व्यंशौ कारिका वृत्तिश्चेति, 'भरतमुनि-प्रणीता कारिका या अलङ्कारसूत्रनाम्ना व्यवह्रियते। मम्मट-प्रणीता तु वृत्तिः सैव काव्यप्रकाशनामभाक्' इति वङ्गीयानां प्रवादः। एनमेव प्रवादमवलम्ब्य काव्यप्रकाशादर्शनामटीका-कृता महेश्वरेणालेखि, 'सुकुमारान् राजकुमारान् स्वादु-प्रवृत्तिद्वारा गहने तर्कादिशास्त्रे प्रवर्त्तयितुमग्निपुराणा-दिभ्य उद्धृत्य काव्यरसास्वादकारणमलङ्कारशास्त्रं भरतमुनिः कारिकाभिः संक्षिप्य प्रणिनाय। ...... मम्मटस्तु ताः कारि-काः सोदाहरणं व्याख्यातुं कारिकाग्रन्थादिभूतां नियति-कृतनियमरहितामिति आदिकारिकां व्याख्यातुमुपन्यस्यति ग्रन्थारम्भे इति', इति।

अविचारविजृम्भित एवायं प्रवादः, यदि कारिकाकृदेव भरतमुनिः स्यात् तदा चतुर्थोल्लासे [३८ पृष्ठे] कारिकया उक्तस्यार्थस्य प्रमाणतया 'उक्तं हि भरतेन' इत्यादिना भरतोक्तिरुद्धृता न स्यात्। कः खल्वनुमन्तास्तदुक्तावेव तदुक्तिं प्रमाणतया उपन्यस्यति। अपि च नाट्यसूत्रकृदेव(१६)

(१६) 'यं नाट्यवेदं वेदेभ्यः सारमादाय ब्रह्मा कृतवान्, यत्सम्बद्धमभि-नयं भरतश्चकार' इतिदशरूपम् । पृ० ।

भरतः प्रसङ्गात् रसादिविषयकाण्यपि सूत्राण्येव प्रणिनाय, नत्वलङ्कारसूत्राण्यपि। अतएव नाट्याचार्य्यतयैव तस्य प्रसिद्धिः(१७)। अलङ्कारसूत्रतया प्रसिद्धं द्वयमेवाधिगतमस्माभिः, एकं शौद्धोदनिकृतम्, अपरं वामनकृतम्(१८)। किन्तु शौद्धोदनिसूत्रोक्तकाव्यलक्षणविलक्षणं काव्यलक्षणमाविष्कुर्व्वन् वामनसूत्रञ्च [२१४ पृष्ठा] दूषयन् मम्मटो नानयोः प्रामाण्यमङ्गीकार।

ततश्च 'वृत्तिकृन्मम्मट एव कारिकामपि प्रणिनाय' इति पाश्चात्यानां प्रवाद एव साधीयान्। कारिकया अनुक्ताया अपि वृत्त्युपदर्शितमालोपमायाः दृष्टान्ततामुद्भावयन्ती 'माला तु पूर्व्ववत्' [२८३ पृष्ठा] इति कारिकैवास्य प्रवादस्य प्रामाण्यं व्यवस्थापयति, एषा हि 'पूर्व्ववत्' इत्यनेन मालोपमायाः पूर्व्वोक्ततां व्यनक्ति, न च मालोपमा कारिकया पूर्व्वमुक्ता, किन्तु वृत्त्यैवेति। अत्रानुकूलानि च बहूनि ग्रन्थकृल्लिखनानि सन्ति। तथाहि "यत्तु येनाप्यभ्युदितेन ......

---

(१७) '...... भरतमुख्यादिकृतिनं नाट्याचार्य्यं नमस्कुर्म्मः' इति नाट्यप्रकाशः।

(१८) 'अलङ्कारविद्यायाः सूत्रकारो भगवान् शौद्धोदनिः ..... काव्यस्य स्वरूपमाह काव्यं रसादिमत् वाक्यम्' इति अलङ्कारशेखरः। '...... काव्यालङ्कारसूत्राणां स्वस्य वृत्तिर्विधीयते' इति वामनवृत्तिः।

Digitized by Google

इत्यत्र समासोक्तिरनुग्राहिकेति मम्मटभट्टैरुक्तम्, तत्र विचार्य्यते, अत्र विशेषणसाम्यमहिम्ना प्रतीयमानः कापुरुषवृत्तान्तः किं प्रस्तुतः, आहोस्विदप्रस्तुतः ? आद्ये समासोक्तेर्विषय एव नास्ति, 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति समासोक्तेर्लक्षणस्य तैरेवोक्तत्वात्" इति रसगङ्गाधरः। 'प्रथमं कारणं विवक्षुः सावतरणिकां(१८) कारिकामाह, 'अस्य कारणमाह शक्तिर्निपुणता ...... इति' इति निदर्शनम्(२०)। 'दुरितशान्तये ग्रन्थकृत् संस्तौति, नियतिकृत इति' इति—काव्यप्रदीपव्याख्यानावसरे 'ग्रन्थकृत् मम्मटः'

---

(१८) अवतरणिका तु वृत्तिरूपा, तथाच येनैव वृत्तिरकारि तेनैव कारिकेत्यायाति, वृत्तिकृत्तु मम्मटः।

(२०) अत्रत्ये निदर्शनग्रन्थे ग्रन्थकृतो नामानुल्लेखात् कोऽसौ निदर्शनकृत् ? इति वयं न जानीमः, हल्साहेबस्तु वासवदत्ताविज्ञापने ( १६ पृष्ठा ) 'पण्डिताः किंवदन्त्यनुसारिणः असमीक्ष्यकारिणश्चेति कथयन् अनुपदमेव 'निदर्शनं शितिकण्ठकृतम्' इति कथमवधृत्य लिलेखेति वयं न जानीमः। निदर्शनकारो हि स्वनामानुल्लिख्य 'प्रणम्य शारदां काव्यप्रकाशो बोधसिद्धये। पदार्थविवृतिद्वारा शितिकण्ठस्य दर्श्यते' इति प्रतिज्ञाय शितिकण्ठस्य (शिवस्य) आगमप्रसिद्धान् षट्त्रिंशत्तत्त्वरूपान् पदार्थान् प्रदर्श्य काव्यप्रकाशं व्याचख्यौ। प्रथमोल्लाससमाप्तौ च 'इति श्रीकाव्यप्रकाशे शितिकण्ठविबोधने काव्योद्देशप्रदर्शनं प्रथमम्' इति लिलेख। अन्तेऽपि च स्वनाम नोल्लिलेख। कथं वा हल्साहेबोक्तिमात्रादेव व्याकरणमवजानन्तः प्रतिज्ञाश्लोकस्य—'शितिकण्ठस्य'-इत्यत्र षष्ठीविभक्तिः कर्त्तरि विहितेति स्वीकुर्म्मः।

Digitized by Google

इति उद्द्योतः। 'तच्च तददोषौ शब्दार्थौ ......' इति प्रकाशकारेण(२१) उक्तम्' इति रसप्रदीपः।

सत्यं मम्मट एव कारिकाकृत्, किन्तु नासौ सर्व्वा अभिनवाः कारिकाश्चकार, क्वचिदविकलां क्वचिच्च अंशतो विकलां कृत्वा अन्यकृतिमपि (तत्तत्कृतिनां नामान्यनुल्लिख्यैव), स्वकृतावन्तर्भावयामास, तथाहि रसतरङ्गिण्यां भानुदेवधृतं 'शृङ्गारहास्य ......' इति भरतसूत्रं 'रतिर्हासश्च ......' इति च तत्सूत्रं, वामनवृत्तिस्थं 'कर्णावतंसादिपदे ......' इति श्लोकश्च अविकलमेव [यथाक्रमं ५२ पृष्ठायां, ५७ पृष्ठायां, १८४ पृष्ठायाञ्च] स्वकृतेः कारिकायाः अन्तश्चिक्षेप, तथा 'प्रयान्ति रसरूपताम्' इत्यन्त्यमंशं 'समाख्यातास्तु नामतः' इत्यन्यथाकृत्य व्यभिचारिभावविभाजकानि 'निर्व्वेदग्लानि ....' इत्यादीनि भानुदेवधृतानि भरतसूत्राण्यपि [५७ पृष्ठा] इति।

मम्मटेन वामनप्रदर्शिता एव शब्दार्थगुणा अलङ्कारदोषाश्च उद्धृत्य दूषिताः। काव्यस्य स्वरूपं कारणञ्च वामनोक्तप्रतिकृतिरूपमेव(२२) प्रदर्शितमिति (सम्भावयामः)

---

(२१) वृत्तेः प्रकाशरूपत्वे सर्व्वेषामैकमत्येन न तत्प्रामाण्याय यतामहे।

(२२) तददोषौ शब्दार्थौ सगुणाविति स्वरूपाभिधायिका कारिका, 'काव्यं ग्राह्यमलङ्कारात्। स दोषगुणालङ्कारहानादानाभ्याम्' इति वामनसूत्रद्वयमनुवदति। तथा शक्तिर्निपुणतेति कारणाभिधायिका कारिका, 'लोको विद्या प्रकीर्णञ्च काव्याङ्गानि। लोको लोकवृत्तम्। लोकः स्थावरजङ्गमात्मा तस्य वर्त्तनं वृत्तिरिति' इत्यारभ्य, 'कवित्वबीजं प्रतिभानं। कवित्वस्य बीजं प्रति-

Digitized by Google

मम्मटस्य काव्यप्रकाशनिर्म्माणार्थमवलम्बनीयेषु निबन्धेषु एकतमो वामननिबन्ध इति।

काव्यप्रकाशस्य उल्लासाभिधेयाः दश विभागाः। तत्र प्रथमे विभागे क्रमेण काव्यस्य फलं कारणं स्वरूपम् उत्तम-मध्यमाधमरूप-त्रिविधप्रभेदश्च न्यरूपि। द्वितीये शब्दार्थ-विभागः,आर्थी व्यञ्जना,वाचकशब्दः, मतभेदेन सङ्केतितार्थः, लक्षणा, लक्षणामूला व्यञ्जना, अभिधामूला च सा। तृतीये अर्थस्य व्यञ्जकता। चतुर्थे ध्वनिकाव्यप्रभेदाः रसभावादयः। पञ्चमे मध्यमकाव्यप्रभेदाः व्यञ्जनावृत्तिसंस्थापनयुक्तिश्च। षष्ठे अधमकाव्यप्रभेदयोः स्वरूपम्। सप्तमे दोषाः, कुत्रचित् तेषामदोषता च। अष्टमे गुणालङ्कारयोर्लक्षणम्, त्रयो गुणाः, वामनोक्तदशगुणानाञ्च स्वोक्तेष्वन्तर्भावः। नवमे रीतिसहितशब्दालङ्काराः। दशमे अर्थालङ्काराः वामनो-क्तानामलङ्कारदोषाणां स्वोक्तेष्वन्तर्भावश्च न्यरूपि।

काव्यप्रकाशकृतो मम्मटस्येतिवृत्तं न किमप्यासादित-मस्माभिः, केवलं निदर्शनग्रन्थात्(२३) एतदवगम्यते, यत्

---

मानं जन्मान्तरागतसंस्कारः, यस्मात् विना काव्यं न निष्पद्यते, निष्पन्नं वा हास्यायतनं स्यात्' इत्यनं वामनसन्दर्भमनुवदति। वाभटस्तु 'प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम्। भृशोत्पत्तिकृदभ्यासः एवं काव्य-भवस्थितिः' इति प्राह।

(२३) ······ 'इति शिवागमप्रसिद्ध्या षड्विंशत्तत्त्वदीक्षाक्षपितसकल-मलपटलः प्रकटितसत्स्वरूपचिदानन्दघनः मजानककुलको मम्मटनामा दैशिकवरः' इति।

शैवोऽयमासीदिति(२४)। मम्मटः कं देशं जन्मना अल-ञ्चकारेति निर्णयप्रवृत्तः, कदाचित् 'काश्मीरदेशीयः' इति सम्भावयामः, यदस्य मम्मटेतिनाम देशान्तरासुलभेन काश्मीरेतिहासराजतरङ्गिणी—सप्तमतरङ्ग-१०४१श्लोकाद्युल्लि-खितधम्मटेत्यादिनाम्नः सादृश्यमनुभवति। कदाचित्तु मिथि-लातिप्रसिद्धेन भट्टेत्युपनाम्ना 'मैथिलः' इति। किन्तु तत्त्वतः किमपि निर्णेतुं न शक्नुमः। एवं कदा अनेन काव्यप्रकाशो निरमायीत्यपि दुर्निरूप्यम्।

कश्चित्तु रत्नावलीनाटिकासमयावधारणपरम् अध्यापकव-रस्य ह्वोरेस् ह्विम्यान् उइलसन् साहेवस्य सिद्धान्तं संस्मरन् काव्यप्रकाशे रत्नावलीमुद्धृतामालोक्य खृष्टीयात् १११३ परि-मिताब्दात् उत्तरकालमेषः सन्दर्भो मम्मटेन निरमायीति निरधारयत्। अध्यापकवर उइलसन्साहेवोहि कल्हण-कृते राजतरङ्गिणीनामनि काश्मीरेतिहासनिबन्धे, हर्षनृपतेः

'सोऽशेषदेशभाषाज्ञः सर्व्वभाषासु सत्कविः।
कृतस्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि'॥

(७म६११ श्लोकः)

इतिविशेषणं पश्यन्नेव (सम्भावयामः) रत्नावलीप्रस्ताव-

---

(२४) वस्तुतः मम्मटः शैव एवेति निश्चयो नास्ति। निदर्शनकृता तु अत्र शैवागमप्रदर्शनार्थमेव मम्मटस्य शैवत्वमारोप्य, इतिशिवागमप्रसिद्धेरित्यादि विशेषणं दत्तमिति सम्भावयामः।

Digitized by Google

नायां, श्रीहर्षो निपुणः कविरितिश्लोकस्थितस्य श्रीहर्षपदस्य श्रिया (श्रीयुक्तः) हर्षः (हर्षनामा) इति व्युत्पत्तिं मनसि कल्पयन् काश्मीराधिपतेर्हर्षस्यैव कृतीरत्नावलीति समादधे(२६)। निश्चिकाय च काश्मीरेतिहासदर्शनेन, खृ० १११३ संख्यकाब्दे हर्षः काश्मीरराजसिंहासनमारुरोहेति।

परन्तु राजतरङ्गिण्यां सविस्तरं वर्णितेऽपि हर्षदेवचरिते रत्नावल्या अनुल्लेखात्, श्रीहर्षेतिसमुदितपदस्यैव (न तु हर्षेत्येतावन्मात्रस्य) रत्नावलीकृन्नामतया ग्रन्थकृद्भिः(२५) उक्तत्वाच्च, न केवलं साधारणविशेषणमवलम्ब्य रत्नावली हर्षकृतिरित्यङ्गीकर्त्तुमुत्सहामहे।

वस्तुतः काश्मीराधिपतेर्हर्षदेवस्य पूर्व्वमपि रत्नावली आसीदित्यनुपदमेव प्रतिपादयिष्यते, ततः स कथं तां निबबन्ध?

---

(२५) IN HIS HINDU THEATRE.

(२६) 'श्रीहर्षादेर्धावकादीनामिव धनम्' इति काव्यप्रकाशांशव्याख्यानावसरे, 'श्रीहर्षो राजा। धावकेन रत्नावलीं नाटिकां तन्नाम्ना कृत्वा बहुधनं लब्धम्' इति प्रकाशादर्शे महेश्वरः। 'धावकः कविः। स हि श्रीहर्षनाम्ना रत्नावलीं कृत्वा बहुधनं लब्धवान्' इति उद्द्योते नागेशभट्टः। 'श्रीहर्षाख्यस्य राज्ञो नाम्ना रत्नावलीनाटिकां कृत्वा धावकाख्यकविर्बहुधनं लब्धवान् इति प्रसिद्धम्' इति प्रकाशप्रभायां वैद्यनाथः। तथा 'धावकनामा कविः स्वकृतां रत्नावलीं नाम नाटिकां विक्रीय श्रीहर्षनाम्नो नृपात् बहुधनं प्रापेति पुरावृत्तम्' इति प्रकाशतिलके जयरामः।

Digitized by Google

मालवाधिपतिर्भोजः सरस्वतीकण्ठाभरणो(२७) बहुशो रत्नावलीम् ददार। भोजदेवश्च ३-दिनोत्तर- ७-मासाधिक- ५५-मितवर्षाण्येव(२८) राज्यम् प्रत्यपालयत्। यदा च हर्ष- देवपितामहोऽनन्तदेवः काश्मीरं प्रतिपालयामास, तदैव भोजो मालवम्(२९)। अनन्तदेवस्य खृ० १०६५ मिताब्दस्या- भ्यन्तरे राजा आसीदिति(३०) भोजदेवस्यापि स एव राज्य- काल इति निर्णीयते। इममेव किञ्चिन्न्यूनाधिकं भोजदेव-

---

(२७) मालवाधिपतेर्भोजदेवस्य कृतिः सरस्वतीकण्ठाभरणमिति उद्दलसन्साहेबोऽपि मेने, नात्यत्र कस्यापि वैमत्यं दृश्यते। लिखितञ्च पञ्चलक्ष्मिस्तथैव।

(२८) 'पञ्चाशत्पञ्चवर्षाणि सप्त मासा दिनत्रयम्।
भोजराजेन भोक्तव्यम् सगौडं दक्षिणापथम्' इति भोजप्रबन्धः।
एवमेव भोजचरितादयः, ततश्च नात्रांशे भोजप्रबन्धस्याप्रामाण्यशङ्का कार्या।

(२९) 'मालवाधिपतिर्भोजः प्रहितैः रत्नसञ्चयैः।
अकारयत् येन कुण्डयोजनं कटकेश्वरे॥'
इति अनन्तदेवेतिहासवर्णनावसरे कल्हणराजतरङ्गिणीसप्तमतरङ्गस्य १९० श्लोकः।

(३०) अनन्तदेवो हि अनन्तरं प्रतिपादयिष्यमानात् हर्षदेवराज्य- कालात् खृ० १०९१-मिताब्दात् २६-मितवर्षपूर्वं काश्मीरनृपतिरासीदिति। एतच्च क० रा० त० ७ त० पाठात् किंवा ७ तरङ्गस्य १२५ मितश्लोकावधि- २३५ मितश्लोकपर्यन्तादेवं ७२४ मितश्लोकाच्चावगम्यते।

राज्यकालतया सर्व्वएव (इंलण्डीयानिंलण्डीयाः) इतिहास-वेत्तारो मेनिरे(२१)। उइल्‌सन्‌साहेवेन दशकुमारविज्ञापने, '१०००-मितवर्षाभ्यन्तर एव भोजराज्यकालः' इति जनश्रुतिमवलम्ब्य दण्डाचार्य्यस्य समयोऽवाधारि। ततश्च उइल्‌सन्‌साहेवनिर्णीतात् हर्षदेवस्य राज्याधिकारसमयात् १११३-मिताब्दात् पूर्व्वमेव राज्यमधिकुर्व्वता भोजदेवेन धृततया रत्नावली (हर्षदेवात्) प्राचीनेति प्रतिभाति।

अपिच धनिकापरनामा धनञ्जयो दशरूपनिबन्धे बहुशो रत्नावलीमुदाजहार। धनञ्जयश्च मुञ्जनृपतेः सभ्य आसीत्(२२)। मुञ्जश्च भोजदेवस्य पूर्व्वं मालवराजसिंहासनमलञ्चकार(२३)। अतएव इतिहासवेत्तारः खृ० १०३०-मिताब्दाभ्यन्तर एव मुञ्जस्य राज्यकाल इति निर्णयञ्च-

(२१) See Asiatic Society's Journal of 1863, Vol. xxxii., Page 91.

(२२) विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः।

आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत्' इति दशरूपशेषांशः।

(२३) भोजप्रबन्धभोजचरितादिषु एवमेव लिखितमस्ति; इतिहासविदामप्येतत् सम्मतम्। उइल्‌सन्‌साहेवस्यापि नात्र विप्रतिपत्तिः। सरस्वतीकण्ठाभरणाद्धृतात् 'सौजन्याम्बुनिधे बुधप्रिय गुणप्राकार धर्म्मद्रुम ०००० श्रीमन्मुञ्ज किमित्यमुं जनमुपप्रष्टुं दशा नार्हसि' इति श्लोकादपि अवधार्य्यते, यत् भोजदेवात् पूर्व्वं मुञ्ज आसीदिति।

Digitized by Google

क्रुः(२४)। ततश्च मुञ्जराजराज्यकाले हर्षदेवस्य जन्मापि नासीत् किन्तु तत्कृतीरत्नावली आसीदित्यतीव कौतुकम्।

यदि च 'श्रीहर्षादेर्धावकादीनामिव धनम्' इत्येव काव्यप्रकाशपाठः(२५) स्यात्, तस्य च 'श्रीहर्षाख्यस्य राज्ञो नाम्ना रत्नावलीं कृत्वा धावकाख्यकविर्बहुधनं लेभे' इत्येवार्थः स्यात्, एवं मालविकाग्निमित्रप्रस्तावनयां, 'प्रथितयशसां धावक-

---

(२४) एतच्च हिन्दुनाटकाभिधानपरे सन्दर्भे भवभूतिसमयावधारणावेलायाम् उइलसनसाहेबोक्त्यापि संवदति।

(२५) 'काव्यप्रकाशनिदर्शने श्रीहर्षादेर्बाणादीनामिव धनम्' इति पाठः। वासवदत्ताविज्ञापने श्रीमता हलसाहेबेन एनमेव पाठं मूलीकृत्य युक्त्यन्तरप्रदर्शनेन 'रत्नावली बाणकृता' इति निरधारि। वस्तुतस्तत्प्रदर्शिता युक्तयः संशयमेवोत्थापयितुं क्षमन्ते, न तु निर्णयमिति। एषा हि तस्य बलवती युक्तिः, यत् रत्नावलीस्थः 'दीपात्००००' इति श्लोकः बाणकृते हर्षचरितेऽप्यस्तीति उभयोरेक एव कवयितेति। अत्रेदं ब्रूमः, अविशेषेण स्ववक्तव्यमर्थं प्रतिपादयन्त्या अन्यकृतेरपि स्वकृतावन्तर्भावणाम् संस्कृतकाव्यकृतामप्यनुमतम्। दृष्टो हि विभिन्नकविविरचितयोरपि शिवपुराणकुमारसम्भवयोः 'तदिच्छामि विभो०००००' इत्यादिश्लोकः एकरूप एवेति एवमन्यत्रापि। कथञ्च हलसाहेबेन स्वोक्तिं समर्थयितुं 'अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः। श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः' इति शार्ङ्गधरपद्धतिस्थश्लोकात् 'बाणः श्रीहर्षस्यान्यतमः सभ्य आसीत्' इति निर्णीतम्, तदपि न जानीमः, वयन्तु उक्तश्लोकात् बाणमयूरयोस्तुल्यः (न तु सहितः) मातङ्गदिवाकरः श्रीहर्षस्य सभ्योऽभवदित्येवावगच्छामः।

Digitized by Google

सौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ किंकृतो बहुमानः' इत्येव पाठः(३६) स्यात्, तदुक्त एव च धावकः रत्नावलीकारः स्यात् ; तदा हर्षदेवो दूरे आस्तां, कालिदासविक्रमादित्यादेरपि पूर्व्वं (समकालं वा) रत्नावली निरमायीत्यसंशयं वक्तुमुत्सहामहे ।

कथञ्च अध्यापकवरेण उइल्सन्साहेवेन कश्मीरेतिहासदर्शनात्, '१११३-मिताब्दे हर्षदेवो कश्मीरराजसिंहासनमारुरोह' इति निरधारि, तदपि वयं न जानीमः। वयन्तु कह्लणकृत--कश्मीरेतिहास--राजतरङ्गिण्यनुसारेण 'हर्षदेवो खृ० १०८१-मितब्दादुत्तरं १०८७-मिताब्दाच्च पूर्व्वं कश्मीरराज्यमधिचकार' इत्येव निरूपयामः। तथाहि कह्लणनामा कविः १०७०-मितशकाब्दे ११४८ मिते खृष्टाब्दे २४-चतुर्विंशे लौकिकाब्दे(३७), राजतरङ्गिणीमारभमानः २५ पञ्चविंशलौकिकाब्दीयमपि(३८) जयसिंहराजवृत्तान्तं

---

(३६) 'अत्रत्यसंस्कृतविद्यालयस्थहस्तलिखितपुस्तकद्वये 'धावकः' इत्यत्र 'भासकः' इति पाठोऽस्ति ।

(३७) 'लौकिकेऽब्दे चतुर्विंशे शककालस्य साम्प्रतम् ।
सप्तत्याभ्यधिकं जातं सहस्रं १०७० परिवत्सराः' इति रा० त० १त० ५२ श्लोकः ।

(३८) 'तावत्येवास्य राज्यस्य पञ्चविंशतिवत्सरे' इति रा० त० ८म त० ३५०५ श्लोकः ।

वर्णयन् जयसिंहनृपतिराज्यकाले(३९) एव तां समापयामास। अतश्च २४ चतुर्विंशलौकिकाब्दशब्देन, यस्याः १०० शताब्द्याः ६५ पञ्चषष्टाब्दादुत्तरं ७१ एकसप्ततितमाब्दमध्ये हर्षदेवो कश्मीराधिपत्यमाससाद, तदनन्तर-१०० शताब्द्याः २४ चतुर्विंशाब्दो ग्राह्यः(४०)। ततश्च हर्षदेवराज्यारम्भकाल-राजतरङ्गिणीनिर्म्मितिकालयोरन्तरा ५२ द्विपञ्चाशत् वर्षाणि गतानीति सिध्यति, ततश्च इमं राजतरङ्गिणीनिर्म्मिति-समयं ५२ द्विपञ्चाशता हीनीकृत्य यः समय आयाति, तस्मात् पूर्व्वं, यश्च तं समयं, ५८ अष्टापञ्चाशता हीनीकृत्य समय आयाति, तस्मादनन्तरं हर्षदेवराज्यारम्भकाल इति निर्णीयते, तथैव च यथोक्तसङ्ख्या सम्पनीपद्यते इत्यलमत्राधिकावेशेन।

---

(३९) 'सुतः सुस्सलभूभर्त्तुः समस्त्यप्रतिमक्रमः।
नन्दयन् मेदिनीमास्ते जयसिंहमहीपतिः' इति रा० त० ८म त० ३५५० शेषश्लोकः।

(४०) एतच्च राजतरङ्गिणीदर्शनात् किंवा तस्याः सप्तमतरङ्गस्य १२७। २२२। २६३। ४५७। ५८८। ६७७। ७२४। १०४१। १२२१। १२६६-श्लोकानाम् एवं अष्टमतरङ्गस्य २४४। ६३६। ६६८। ८२१। ९४६। १०५५। ११५६। १३५०। १९४५। २१८६। २३१०। २७४२। ३२८०। ३५०५-श्लोकानाञ्च दर्शनादपि स्फुटं प्रतीयते।

Digitized by Google

'मम्मटेन कदा काव्यप्रकाशो निरमायि?' इति प्रश्नस्यो-त्तरतया खृ० १३३५ मिताब्दात् पूर्व्वमेव निरमायीत्येता-वन्मात्रमवधृत्य उच्यते, यतः उक्तमिताब्दकालीनेन माध-वाचार्य्येण सर्व्वदर्शनसङ्ग्रहे पातञ्जलदर्शनप्रस्तावे 'तदुक्तं काव्यप्रकाशे' इत्यादिना काव्यप्रकाशोऽधारि(४१) इति ।

एवं यदि काव्यप्रकाश-(३१८ पृष्ठा)-धृत— '...... भोज-नृपतेस्तत्त्यागलीलायितम्' इति श्लोकोक्तभोजएव पूर्व्वोक्त-मालवाधिपतिरासीदिति स्यात्, एवं काव्यप्रकाशधृतानि भोजप्रबन्धीयानि 'यदेतत् चन्द्रान्तर् ......' इत्यादीनि पद्यानि मालवाधिपतिभोजराजसमकालीनकवेः भोजप्रबन्ध-रचयितुरेव वा स्युः, तदा पूर्व्वोक्तात् भोजराज्यकालात् १०६५-मिताब्दात् परमेव काव्यप्रकाशो निरमायीत्यपि वक्तुं शक्यते । भोजराजसम्बन्धिनामेषां पद्यानां भोजदेवात् पूर्व्वमसम्भवादिति(४२) ।

आस्तामेतत् प्रकृतमनुसरामः । काव्यप्रकाशस्यास्य गूढ़ाभिप्रायमाकलय्य अतत्यभूतपूर्व्वसंस्कृतविद्यालयाध्यक्षेण महता श्रीमता इ० वि० काउएलसाहेबेन कठिनतरेषु

---

(४१) १३३५-मिताब्दे माधवाचार्य्य आसीदित्यत्र सर्व्वेषामैकमत्य-मस्ति ।

(४२) सम्भावयाम्येतदेव तत्त्वम् । तथापि भोजप्रबन्धस्य निःसारतया तत्रत्यपद्यानामन्यत आहृतत्वसम्भावनया ससंशयमेवमुक्तम् ।

Digitized by Google

केषुचित् केषुचित् स्थानेषु प्रदीपाद्यनुसारेण संक्षेपतस्तात्पर्य्यमात्रप्रकाशनपुरःसरं काव्यप्रकाशमुद्रणायाहमन्वरुध्ये। तदनुरोधवशंवदेन च मया तथैवात्‌तृतीयं, पुस्तकचतुष्टयम् (एकं पूर्व्वमुद्रितम्, द्वितीयं हस्तलिखितं संस्कृतविद्यालयस्थम्, तृतीयं श्रीमतां तारानाथतर्कवाचस्पतीनां हस्तलिखितम्, चतुर्थं क्रीतं काशीप्रदेशीयम्) अवलोक्यास्य मुद्रणमकारि। तथापि सर्व्वतः काठिन्यानपगममालोच्य विज्ञाप्य च श्रीमन्तम् इ॰ वि॰ काउएल्साहेवं, सर्व्वत्रैव विवरणसहे स्थाने शब्दार्थविवरणसहाभिप्रायप्रकाशनायाऽहमयते। न जाने किं फलमजनि।

अस्मिंश्च तात्पर्य्यविवरणाभिधे व्याख्याने क्वचित् पूर्व्वेषां व्याख्याकर्तां सन्दर्भा अविकला एवोद्धृताः, क्वचिच्च शब्दान्तरेण तेषामभिप्रायाः अनूदिताः। यत्र च तेषां व्याख्यानं नास्मभ्यमरोचत, तत्रैव स्वाभिप्रायेण व्याख्याऽकारि। प्रायः पूर्व्वेषां व्याख्यानं न्यायादिभाषया लिखितमिति बालानां दुर्बोधम्; मया तु बालानाम् बोधोपयोगिकरणार्थमेव विशेषो यत्नोऽकारि।

अस्य सदसद्विवेचने संशोधने च अध्येपितैर्मद्गुरूणामन्यतमैरद्देवगुरुभिरप्यनेकभद्देवगुरुभिः श्रीमद्भिस्तारानाथतर्कवाचस्पतिभिराद्योपान्तमलोकि समशोधि च, ततश्च तैः सविशेषमनुगृहीतोऽस्मीति।

एतच्चतीव दुःखाकरोति, यद् यस्य महात्मनः प्रयत्नात् इदं सम्पन्नम्, सोऽयं श्रीमान् इ० वि० काउएलसाहेवो-ऽधुना अत्र नास्तीति ।

उत्साहवारि परितोऽर्पयतः प्रयत्नात्
यस्यालमङ्कुरित एष तरुः फलाय ।
सोऽयं चिराय निजदेशनिवासमिच्छन्
हा हन्त! सम्प्रति जहाविममेव देशम् ॥

श्रीमहेशचन्द्रशर्म्मा ।

कलिकाता-संस्कृतविद्यालयः ।
संवत १९२३ । खृष्टाब्दः १८६६ ।

Digitized by Google

# निर्द्देशानुसारि सूचीपत्रम् ।




| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| **प्रथमस्य उल्लासस्य काव्यप्रयोजनकारण-स्वरूपविशेषनिर्णये तात्पर्य्यम्** | | |
| तत्र प्रथमोल्लासारम्भः | १ | १ |
| मङ्गलाचरणम् | १ | ३ |
| काव्यस्य प्रयोजनम् | २ | २ |
| „ कारणम् | ३ | ६ |
| „ स्वरूपम् | ४ | २ |
| उत्तम-(ध्वनि)-काव्यम् | ५ | २ |
| मध्यम-(गुणीभूतव्यङ्ग्य)-काव्यम् | ५ | १५ |
| अधम-(चित्र)काव्यम् | ६ | ६ |
| प्रथमोल्लाससमाप्तिः | ६ | १६ |

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| **द्वितीयस्य उल्लासस्य शब्दार्थनिर्णये तात्पर्य्यम्** | | |
| तत्र द्वितीयोल्लासारम्भः | ७ | १ |
| शब्दभेदाः | ७ | २ |
| अर्थभेदाः | ७ | ४ |
| तात्पर्य्यार्थः | ७ | ६ |
| अर्थव्यञ्जकता | ८ | १ |
| वाचकशब्दः | ६ | ८ |
| वाच्यार्थनिर्णयः | ६ | १३ |
| अभिधाविचारः | १० | १ |
| लक्षणा | १२ | ६ |
| उपादानलक्षणा | १२ | ८ |
| लक्षण-लक्षणा | १२ | ६ |
| आक्षेपार्थापत्तिस्थले न लक्षणा | १४ | ४ |
| लक्षणायां प्रयोजनप्रतीतिः | १५ | ४ |

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| सारोपा लक्षणा | १६ | १ |
| साध्यवसाना „ | १६ | ५ |
| गौणी „ | १७ | १ |
| शुद्धा „ | १७ | १ |
| गौर्वाहीक इत्यत्र लक्ष्यार्थ-निर्णयः | १७ | ५ |
| लक्षणायाः षड्विधत्वम् | १९ | ९ |
| गूढव्यङ्ग्यम् | २० | ३ |
| लक्षणायाः त्रैविध्यम् | २० | १२ |
| लाक्षणिकशब्दः | २० | १४ |
| लक्षणामूलव्यञ्जनाव्यव-स्थापनम् | २१ | २ |
| अभिधामूला व्यञ्जना | २४ | ८ |
| संयोगादिनैकार्थनियमनम् | २५ | १ |
| व्यञ्जकशब्दः | २६ | १० |
| शब्दस्य व्यञ्जकतायामर्थस्य सहकारिता | २६ | १२ |
| द्वितीयोल्लाससमाप्तिः | २६ | १५ |
| **तृतीयस्य उल्लासस्य आर्थव्यञ्जकतायां तात्पर्य्यम्** | | |
| तत्र तृतीयोल्लासारम्भः | २७ | १ |
| आर्थी व्यञ्जना | २७ | ४ |
| वक्त्रादीनां वैशिष्ट्ये व्यञ्जनस्योदा-हरणम् | २८ | २ |
| अर्थव्यञ्जकतायां शब्दस्य साहाय्यम् | ३२ | १ |
| तृतीयोल्लाससमाप्तिः | ३२ | ६ |
| **चतुर्थस्य उल्लासस्य रसादिनिरूपणस-हितध्वनिकाव्यप्रभे-दनिरूपणे तात्-पर्य्यम्** | | |
| तत्र चतुर्थोल्लासारम्भः | ३४ | १ |
| अविवक्षितवाच्यध्वनिः | ३४ | ५ |
| अर्थान्तरसंक्रमितवाच्य-ध्वनिः | ३४ | ६ |
| अत्यन्ततिरस्कृतवाच्य-ध्वनिः | ३४ | ६ |
| विवक्षितान्यपरवाच्यध्वनिः | ३६ | ९ |
| अलक्ष्यक्रमव्यङ्ग्यध्वनिः | ३७ | ७ |
| विभावानुभावव्यभिचारिणः | ३८ | ७ |
| रसस्वरूपम् | ३८ | १३ |
| रसनिष्पत्तिः भट्टलो-ल्लटादिसम्मता | ३९ | २ |
| „ श्रीशङ्कुकसम्मता | ४० | १ |
| „ भट्टनायकसम्मता | ४२ | ६ |
| „ अभिनवगुप्तसम्मता | ४४ | १ |
| रसविभागः | ५२ | ४ |
| सम्भोगः | ५२ | ८ |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| रसानामुदाहरणानि | ५३ | १ |
| विप्रलम्भः | ५३ | ११ |
| स्थायिभावाः | ५७ | ६ |
| व्यभिचारिभावाः | ४७ | १२ |
| शान्तरसः | ५९ | १ |
| भावः | ५९ | ८ |
| रसाभासभावाभासौ | ६१ | २ |
| भावस्य शान्तिरुदयः सन्धिः शबलता च | ६२ | ८ |
| भावशान्त्यादीनां क्वचित् प्राधान्यम् | ६४ | ९ |
| संलक्ष्यक्रमव्यङ्ग्यध्वनिः | ६५ | १ |
| शब्दशक्त्युत्थध्वनिः | ६५ | ८ |
| शब्दशक्त्युत्थालङ्कारध्वनेरुदाहरणम् | ६६ | १ |
| शब्दशक्त्युत्थवस्तुध्वनेरुदाहरणम् | ६८ | २ |
| अर्थशक्त्युत्थध्वनिविभागः | ६९ | २ |
| अर्थशक्त्युत्थध्वनिप्रभेदानाम् उदाहरणानि | ७० | २ |
| शब्दार्थोभयशक्त्युत्थध्वनिः | ७५ | ११ |
| शब्दशक्त्युत्थार्थशक्त्युत्थध्वनीनां पदगतत्वम् | ७७ | ६ |
| अर्थशक्त्युत्थध्वनीनां प्रबन्धगतत्वम् | ८६ | १ |
| रसादेः पदैकदेशरचनावर्णगतत्वम् | ८७ | १ |
| रसादेः प्रबन्धगतत्वम् | ९४ | ८ |
| ध्वनेः शुद्धभेदसङ्कलनम् | ९५ | १ |
| ध्वनेः संसृष्टिसङ्करौ | ९५ | २ |
| ध्वनेः संसृष्टिसङ्कराधीना संख्या | ९६ | १ |
| ध्वनेर्भेदसमष्टिः | ९७ | १ |
| चतुर्थोल्लाससमाप्तिः | ९९ | २ |


---

पञ्चमस्य उल्लासस्य गुणीभूतव्यङ्ग्यकाव्यभेदप्रदर्शनव्यञ्जनावृत्तिसंस्थापनसहितध्वनिगुणीभूतव्यङ्ग्यकाव्यसङ्कीर्णभेदनिर्णये तात्पर्य्यम्


| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| तत्र पञ्चमोल्लासारम्भः | १०० | १ |
| गुणीभूतव्यङ्ग्यकाव्यप्रभेदाः | १०० | २ |
| अगूढव्यङ्ग्यम् | १०० | ७ |
| अपराङ्गव्यङ्ग्यम् | १०१ | १२ |
| वाच्यसिद्ध्यङ्गव्यङ्ग्यम् | १०७ | ५ |
| अस्फुटव्यङ्ग्यम् | १०६ | १० |
| सन्दिग्धप्राधान्यव्यङ्ग्यम् | १०७ | ५ |

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| काकाक्षिप्तव्यङ्ग्यम् | १०७ | १० |
| असुन्दरव्यङ्ग्यम् | १०७ | १७ |
| गुणीभूतव्यङ्ग्यस्य ध्वनिवत् प्रभेदः | १०८ | ५ |
| वस्तुव्यङ्ग्यालङ्कारस्य न गुणीभूतव्यङ्ग्यता | १०८ | ६ |
| ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करः | १०९ | १ |
| प्रकारान्तरेण ध्वनेस्त्रैविध्यम् | ११० | ३ |
| व्यञ्जनावृत्तिसंस्थापनम् | ११० | ६ |
| पञ्चमोल्लाससमाप्तिः | १२७ | १२ |

## षष्ठस्य उल्लासस्य अधम-(चित्र)-काव्य-निर्णये तात्पर्य्यम्

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| तत्र षष्ठोल्लासारम्भः | १२८ | २ |
| शब्दचित्रार्थचित्रयोः स्वरूपम् | १२८ | २ |
| शब्दार्थचित्रयोः क्रमेण उदाहरणे | १२८ | ४ |
| शब्दार्थचित्रयोः बहुभेदता | १२९ | १३ |
| षष्ठोल्लाससमापनम् | १२९ | १५ |

## सप्तमस्य उल्लासस्य काव्यदोषनिर्णये तात्पर्य्यम्

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| तत्र सप्तमोल्लासारम्भः | १३० | १ |
| दोषलक्षणम् | १३० | २ |
| पददोषविभागः | १३१ | १ |
| श्रुतिकटुता | १३१ | ९ |
| च्युतसंस्कारः | १३१ | १२ |
| अप्रयुक्तत्वम् | १३२ | ८ |
| असमर्थत्वम् | १३२ | १३ |
| निहतार्थत्वम् | १३३ | ३ |
| अनुचितार्थता | १३३ | ८ |
| निरर्थकता | १३३ | १४ |
| अवाचकता | १३३ | १७ |
| अश्लीलता | १३५ | १ |
| सन्दिग्धता | १३५ | १४ |
| अप्रतीतत्वम् | १३६ | २ |
| ग्राम्यत्वम् | १३६ | ६ |
| नेयार्थत्वम् | १३६ | ९ |
| क्लिष्टत्वम् | १३७ | २ |
| विधेयाविमर्षः | १३७ | २ |
| विरुद्धमतिकारिता | १३९ | ५ |
| पददोषाणां केषाञ्चित् वाक्यपदांशगतत्वम् | १४० | ६ |
| वाक्यगतपददोषाणामुदाहरणानि | १४० | ८ |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| यत्तच्छब्दयोः साकाङ्क्षनिराकाङ्क्षताविचारः | १४५ | १ |
| पदांशगतदोषाणामुदाहरणानि | १४८ | १३ |
| अप्रयुक्ततादीनामसामर्थ्यरूपत्वेऽपि पृथगुक्तिबीजम् | १५२ | १२ |
| वाक्यदोषाः | १५३ | १ |
| प्रतिकूलवर्णता | १५३ | ११ |
| उपहतविसर्गता | १५४ | १० |
| सन्धावश्लीलता | १५५ | १३ |
| विसन्धिः | १५४ | १३ |
| हतवृत्तता | १५६ | ३ |
| न्यूनपदत्वम् | १५८ | १ |
| अधिकपदत्वम् | १५८ | ७ |
| कथितपदत्वम् | १५९ | ८ |
| पतत्प्रकर्षः | १५९ | १३ |
| समाप्तपुनरात्तता | १६० | ३ |
| अर्द्धान्तरैकवाचकता | १६० | ८ |
| अभवन्मतयोगः | १६१ | १ |
| अनभिहितवाच्यता | १६१ | ११ |
| अस्थानस्थपदता | १६५ | १० |
| अस्थानस्थसमासता | १६६ | ४ |
| सङ्कीर्णता | १६६ | १० |
| गर्भितता | १६६ | १७ |
| विरुद्धमतिकारिता | १६७ | १० |
| प्रसिद्धिहतता | १६७ | १३ |
| भग्नप्रक्रमता | १६८ | २ |

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| उद्देश्यप्रतिनिर्देश्यभावस्थले कथितपदस्य गुणता | १६८ | ८ |
| अक्रमता | १७१ | १४ |
| अमतपरार्थता | १७२ | १० |
| अर्थदोषाः | १७३ | १ |
| अपुष्टार्थता | १७३ | १६ |
| कष्टार्थता | १७४ | १ |
| व्याहतार्थत्वम् | १७५ | १ |
| पुनरुक्तत्वम् | १७५ | ९ |
| दुष्क्रमत्वम् | १७५ | १५ |
| ग्राम्यार्थता | १७६ | १ |
| सन्दिग्धार्थता | १७६ | ६ |
| निर्हेतुता | १७६ | १३ |
| प्रसिद्धिविरोधः | १७६ | १४ |
| प्रसिद्धिविरोधस्य कविसमयासिद्धत्वे न दोषः | १७७ | ५ |
| विद्याविरोधः | १७७ | ११ |
| अनवीकृतता | १७८ | ११ |
| सनियमेऽनियमः | १७९ | ४ |
| अनियमे सनियमः | १७९ | १० |
| विशेषेऽविशेषः | १८० | १ |
| अविशेषे विशेषः | १८० | ६ |
| साकाङ्क्षता | १८१ | १ |
| अपदयुक्तता | १८१ | ७ |
| सहचरभिन्नता | १८२ | १ |
| प्रकाशितविरुद्धता | १८२ | ७ |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| विध्ययुक्तता | १८२ | ८ |
| अनुवादायुक्तता | १८३ | ४ |
| त्यक्तपुनःस्वीकृतत्वम् | १८३ | ८ |
| अश्लीलार्थता | १८४ | १ |
| कर्णावतंसादिपदे न पौनरुक्त्यदोषः | १८४ | ६ |
| कर्णावतंसाद्यन्यस्थले पौनरुक्त्यदोषः | १८५ | १४ |
| विशेषणादानार्थं क्वचित् पौनरुक्त्यम् न दोषः | १८६ | ४ |
| प्रसिद्धिसत्त्वे निर्हेतोरदुष्टता | १८६ | ६ |
| अनुकरणे सर्व्वेषामदोषता | १८७ | १ |
| दोषाणाम् क्वचिददोषता गुणता वा | १८७ | ५ |
| कष्टार्थतायाः गुणता | १८७ | ८ |
| कष्टता न दोषो न गुणः | १८८ | १४ |
| अप्रयुक्तनिहतार्थयोरदुष्टता | १८९ | २ |
| अश्लीलत्वं गुणः | १८९ | ८ |
| सन्दिग्धत्वस्य गुणता | १९० | १० |
| अप्रतीतता गुणः | १९१ | १ |
| ग्राम्यत्वं गुणः | १९१ | ११ |
| न्यूनपदत्वं गुणः | १९२ | १ |
| न्यूनपदत्वं न गुणो न दोषः | १९२ | ६ |
| अधिकपदत्वं गुणः | १९२ | १३ |
| कथितपदत्वं गुणः | १९३ | ८ |
| पतत्प्रकर्षः गुणः | १९४ | ५ |
| समाप्तपुनरात्तत्वं न दोषो न गुणः | १९४ | ६ |
| अस्थानस्थसमासः गुणः | १९४ | ८ |
| गर्भितत्वं गुणः | १९४ | १० |
| रसदोषाः | १९५ | ५ |
| व्यभिचारिणः स्वशब्दवाच्यत्वम् | १९६ | ५ |
| रसस्य स्वशब्दवाच्यत्वम् | ९६ | १४ |
| स्थायिनः स्वशब्दवाच्यत्वम् | १९७ | ५ |
| अनुभावस्य कष्टकल्पना | १९७ | १३ |
| विभावस्य कष्टकल्पना | १९८ | ५ |
| प्रतिकूलविभावादिपरिग्रहः | १९८ | ११ |
| पुनःपुनर्दीप्तिः | १९९ | १ |
| अकाण्डे प्रथनम् | १९९ | २ |
| अकाण्डे च्छेदः | १९९ | ४ |
| अङ्गस्यातिविस्तृतिः | १९९ | ६ |
| अङ्गिनोऽननुसन्धानम् | १९९ | ७ |

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| प्रकृतिविपर्य्ययः | २०० | १ |
| अनङ्गस्याभिधानम् | २०१ | ६ |
| व्यभिचारिणः स्वपदवाच्यत्वमदोषः | २०२ | ५ |
| विरुद्धरससञ्चारिभावादीनां बाध्यतयोक्तिर्गुणः | २०३ | १ |
| विरुद्धयोरपि रसयोरेकत्र निवेशप्रकारः | २०५ | १ |
| विरुद्धयोरपि रसयोः अविरोधः | २०६ | ४ |
| सप्तमोल्लाससमापनम् | २०९ | १० |


## अष्टमस्य उल्लासस्य गुणालङ्कारभेदसहितगुणनिरूपणे तात्पर्य्यम्


| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| तत्र अष्टमोल्लासारम्भः | २१० | १ |
| गुणलक्षणम् | २१० | २ |
| गुणानां रसधर्म्मत्वम् | २१० | ४ |
| अलङ्कारलक्षणम् | २११ | ६ |
| गुणालङ्कारयोः प्रभेदः | २१३ | ८ |
| वामनाद्युक्तगुणालङ्कारलक्षणखण्डनम् | २१४ | ३ |
| गुणविभागः | २१५ | ३ |
| माधुर्य्यगुणलक्षणम् | २१५ | ६ |
| ओजोगुणलक्षणम् | २१६ | ५ |
| प्रसादगुणलक्षणम् | २१७ | १ |
| वामनाद्युक्तदशशब्दगुणास्वीकारः | २१७ | ८ |
| वामनाद्युक्तदशविधशब्दगुणानां लक्षणानि यस्मिंश्च यस्मान्नर्भावः यस्य चादोषस्वरूपता | २१७ | ९ |
| वामनाद्युक्तदशविधार्थगुणानां यस्मिंश्च यस्मान्नर्भावः यस्य च अदोषता | २१८ | ९ |
| माधुर्य्यगुणस्य व्यञ्जकाः | २२१ | ६ |
| ओजोगुणस्य व्यञ्जकाः | २२२ | ४ |
| प्रसादगुणस्य व्यञ्जकाः | २२२ | ११ |
| रचनायाः क्वचित् वैपरीत्यम् | २२३ | ७ |
| अष्टमोल्लाससमाप्तिः | २२४ | १२ |


## नवमस्य उल्लासस्य रीतिसहितशब्दालङ्कारनिर्णये तात्पर्य्यम्


| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| तत्र नवमोल्लासप्रारम्भः | २२५ | १ |
| वक्रोक्तिः | २२५ | ३ |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| अनुप्रासः | २२६ | ६ |
| वृत्तिः | २२७ | ४ |
| छेकानुप्रासः | २२७ | ७ |
| वृत्त्यनुप्रासः | २२८ | १ |
| उपनागरिका रीतिः | २२८ | ४ |
| परुषा रीतिः | २२८ | ५ |
| कोमला रीतिः | २२८ | ७ |
| उपनागरिकाप्रभृतीनां यथाक्रमं वैदर्भीगौड़ीपाञ्चालीति नाम | २२९ | १ |
| लाटानुप्रासः | २२९ | ५ |
| यमकम् | २३० | १३ |
| श्लेषः शब्दगतः | २३५ | १० |
| श्लेषस्य नवमो भेदः | २३९ | ५ |
| श्लेषविचारः | २४० | ३ |
| दोषगुणालङ्काराणां शब्दार्थगतत्वे नियामकम् | २४१ | ३ |
| चित्रालङ्कारः | २४८ | ९ |
| खड्गबन्धः | २४९ | ३ |
| मुरजबन्धः | २५० | १ |
| पद्मबन्धः | २५२ | १ |
| सर्व्वतोभद्रम् | २५३ | १ |
| पुनरुक्तवदाभासः | २५४ | ३ |
| नवमोल्लाससमाप्तिः | २५६ | ७ |

---

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| **दशमस्य उल्लासस्य अलङ्कारदोषनिर्णयसहितार्थालङ्कारनिर्णये तात्पर्य्यम् ।** | | |
| तत्र दशमोल्लासारम्भः | २५७ | १ |
| उपमा | २५७ | १ |
| पूर्णोपमा लुप्तोपमा च | २५९ | १ |
| श्रौती उपमा | २६० | १ |
| आर्थी उपमा | २६१ | १ |
| उपमाविचारः | २६३ | ७ |
| धर्म्मलोपे उपमा | २६६ | ४ |
| उपमानलोपे उपमा | २६७ | ७ |
| इवादिलोपे उपमा | २६८ | २ |
| धर्म्मवाद्युभयलोपे उपमा | २७० | १ |
| धर्म्मोपमानलोपे उपमा | २७१ | २ |
| उपमेयेवादिलोपे उपमा | २७१ | ८ |
| धर्म्मोपमानेवादिलोपे उपमा | २७२ | ४ |
| उपमायाः पञ्चविंशतिविधत्वम् | २७३ | २ |
| मालोपमा | २७३ | ४ |
| रसनोपमा | २७४ | १ |
| अनन्वयः | २७४ | १० |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| उपमेयोपमा | २७५ | १ |
| उत्प्रेक्षा | २७६ | १ |
| ससन्देहः | २७७ | ३ |
| रूपकम् | २७९ | ११ |
| समस्तवस्तुविषयरूपकम् | २८० | १ |
| एकदेशविवर्त्तिरूपकम् | २८१ | ६ |
| साङ्गरूपकम् | २८२ | ९ |
| निरङ्गरूपकम् | २८२ | ११ |
| मालारूपकम् | २८३ | ३ |
| परम्परितरूपकम् | २८३ | ९ |
| रसनारूपकम् | २८६ | ८ |
| अपह्नुतिः | २८६ | ९ |
| श्लेषः अर्थगतः | २८८ | ५ |
| समासोक्तिः | २८९ | २ |
| निदर्शना | २८९ | १० |
| मालानिदर्शना | २९० | १६ |
| निदर्शना अन्यरूपा | २९० | १७ |
| अप्रस्तुतप्रशंसा | २९१ | ७ |
| अप्रस्तुतप्रशंसाभेदाः | २९१ | १० |
| अतिशयोक्तिः | २९६ | ५ |
| प्रतिवस्तूपमा | २९८ | १ |
| दृष्टान्तः | २९९ | १ |
| दीपकम् | २९९ | ११ |
| मालादीपकम् | ३०१ | १ |
| तुल्ययोगिता | ३०१ | ८ |
| व्यतिरेकः | ३०२ | १ |
| उपमानस्याधिकत्वे न व्यतिरेकः | ३०२ | ३ |
| व्यतिरेकस्य भेदाः | ३०३ | १ |
| मालाव्यतिरेकः | ३०४ | ७ |
| आक्षेपः | ३०५ | १० |
| विभावना | ३०६ | १२ |
| विशेषोक्तिः | ३०७ | ४ |
| यथासङ्ख्यम् | ३०८ | १ |
| अर्थान्तरन्यासः | ३०८ | ७ |
| विरोधः | ३०९ | ७ |
| विरोधविभागः | ३०९ | १० |
| स्वभावोक्तिः | ३१२ | ५ |
| व्याजस्तुतिः | ३१२ | १२ |
| सहोक्तिः | ३१३ | १० |
| विनोक्ति | ३१४ | १ |
| परिवृत्तिः | ३१४ | ९ |
| भाविकम् | ३१५ | ६ |
| काव्यलिङ्गम् | ३१५ | १३ |
| पर्य्यायोक्तम् | ३१६ | १६ |
| उदात्तम् | ३१८ | ४ |
| उदात्तम् अन्यविधम् | ३१९ | १ |
| समुच्चयः | ३१९ | ७ |
| समुच्चयः अन्यविधः | ३२१ | १ |
| पर्य्यायः | ३२२ | ९ |
| पर्य्यायः अन्यविधः | ३२३ | ८ |
| अनुमानम् | ३२४ | ८ |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| परिकरः | ३२५ | ३ |
| व्याजोक्तिः | ३२५ | १२ |
| परिसङ्ख्या | ३२६ | ९ |
| कारणमाला | ३२७ | ११ |
| अन्योन्यम् | ३२८ | ९ |
| उत्तरम् | ३२९ | ५ |
| उत्तरस्यान्यस्मिन्नलङ्कारे नान्तर्भावसम्भवः | ३३० | १ |
| सूक्ष्मम् | ३३० | ११ |
| सारः | ३३१ | १५ |
| असङ्गतिः | ३३२ | १ |
| विरोधादसङ्गतेर्भेदः | ३३२ | ९ |
| समाधिः | ३३३ | ४ |
| समम् | ३३३ | ९ |
| विषमः | ३३४ | ११ |
| अधिकम् | ३३६ | ६ |
| प्रत्यनीकम् | ३३७ | ९ |
| मीलितम् | ३३८ | ३ |
| एकावली | ३३९ | ४ |
| स्मरणम् | ३४० | ८ |
| भ्रान्तिमान् | ३४१ | ४ |
| प्रतीपम् | ३४२ | ८ |
| सामान्यम् | ३४४ | १० |
| विशेषः | ३४६ | ३ |
| तद्गुणः | ३४७ | १२ |
| अतद्गुणः | ३४८ | ९ |

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| व्याघातः | ३४९ | ९ |
| संसृष्टिः | ३४९ | १५ |
| अङ्गाङ्गिभावसङ्करः | ३५१ | १ |
| सन्देहसङ्करः | ३५५ | १ |
| सन्देहसङ्करस्थलनिर्णयः | ३५६ | १ |
| एकाश्रयानुप्रवेशसङ्करः | ३५७ | १२ |
| अलङ्काराणां शब्दार्थगतत्वनियमः | ३५९ | ३ |
| अलङ्कारदोषाः पृथक् न सन्ति | ३६० | ४ |
| अनुप्रासदोषाः, तेषामुक्तेऽन्तर्भावश्च | ३६० | ५ |
| यमकदोषः, तस्य उक्तेऽन्तर्भावश्च | ३६१ | १० |
| उपमादोषाः तेषामुक्तेऽन्तर्भावश्च | ३६२ | १ |
| उपमायां क्वचित् लिङ्गवचनादिभेदस्यादुष्टता | ३६३ | १० |
| कालादिभेदे उपमायाः दुष्टताव्यवस्थापनम् | ३६४ | ६ |
| उपमायामपरौ दोषौ तयोरुक्तेऽन्तर्भावश्च | ३६६ | ९ |
| उत्प्रेक्षादोषः तस्य उक्तेऽन्तर्भावश्च | ३६७ | १२ |

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| अर्थान्तरन्यासदोषः | ३६७ | १२ |
| समासोक्तिदोषः तस्य उक्तेऽन्तर्भावश्च | ३६८ | ६ |
| अप्रस्तुतप्रशंसायाः दोषः तस्य उक्तेऽन्तर्भावश्च | ३६९ | ८ |
| दशमोल्लाससमापनम् | ३७० | ५ |
| काव्यप्रकाशसमापनम् | ३७० | ६ |


Digitized by Google

# काव्यप्रकाशस्य वर्णानुसारि निर्घण्टपत्रम् ।


| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| **अ** | | |
| अकाण्डे छेदः दो० | १६६ | ४ |
| अकाण्डे प्रथनम् दो० | १६६ | २ |
| अक्रमता दो० | १७१ | १४ |
| अगूढ़व्यङ्ग्यम् | २० | ८ |
| " | १०० | ७ |
| अङ्गस्यातिविस्तृतिः दो० | १६६ | ६ |
| अङ्गाङ्गिभावः सङ्करः अ० | ३५१ | १ |
| अङ्गिनोऽननुसन्धानम् दो० | १६६ | ७ |
| अतद्गुणः | ३४८ | ६ |
| अतिशयोक्तिः | २६६ | ५ |
| अत्यन्ततिरस्कृतवाच्यध्वनिः | ३४ | ६ |
| अधमकाव्यम् | ६ | ६ |
| अधिकम् अ० | ३३६ | ६ |
| अधिकपदता दो० | १५८ | ७ |
| अधिकपदता क्वचित् गुणः | १६२ | १३ |
| अनङ्गस्याभिधानम् | २०१ | ६ |
| अनन्वयः अ० | २७४ | १० |
| अनभिहितवाच्यता दो० | १६१ | ११ |
| अनवीकृतत्वम् दो० | १७८ | ११ |
| अनियमे नियमः दो० | २७६ | १० |
| अनुकरणे सर्वेषाम्-दोषता | १८७ | १ |
| अनुचितार्थता दो० | १३३ | ८ |
| अनुप्रासः अ० | २२६ | ६ |
| अनुप्रासदोषाः | ३६१ | १० |
| अनुभावः | ३८ | ७ |
| अनुभावस्य कष्टकल्पना दो० | १६७ | १२ |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| अनुमानम् अ० | ३२४ | ८ |
| अनुवादायुक्तता दो० | १८३ | ४ |
| अन्योन्यम् अ० | ३२८ | ६ |
| अपदयुक्तता दो० | १८१ | ७ |
| अपराङ्गव्यङ्ग्यम् | १०१ | १२ |
| अपह्नुतिः अ० | २८६ | ६ |
| अपुष्टार्थता दो० | १७३ | १३ |
| अप्रतीतत्वम् दो० | २३६ | २ |
| अप्रतीतत्वं क्वचित् गुणः | १६१ | १ |
| अप्रयुक्तता दो० | १३२ | २ |
| अप्रयुक्तता क्वचित् न दोषः | १८६ | ३ |
| अप्रयुक्तादीनां पृथ-गुक्तिवीजम् | १५२ | १२ |
| अप्रस्तुतप्रशंसा अ० | २६१ | ७ |
| अप्रस्तुतप्रशंसाभेदाः | १६१ | १० |
| अभवन्मतयोगः दो० | १६१ | १ |
| अभिधामूला व्यञ्जना | २४ | ८ |
| अभिधाविचारः | १० | १ |
| अमतपरार्थता दो० | १७२ | १४ |
| अर्थगुणास्वीकारः | २१८ | ७ |
| अर्थचित्रम् | १२८ | २ |
| अर्थचित्रस्य बहुभेदता | १२६ | १३ |
| अर्थदोषाः | १७३ | १३ |
| अर्थव्यक्तिः अर्थगुणः | २२० | २ |
| अर्थव्यक्तिः शब्दगुणः | २१८ | ३ |
| अर्थव्यञ्जकता | ८ | १ |
| अर्थव्यञ्जकतायां शब्दस्य साहाय्यम् | ३३ | १ |
| अर्थशक्त्युत्थध्वनिविभागः | ६६ | २ |
| अर्थशक्त्युत्थध्वनिप्रभेदाना-मुदाहरणानि | ७० | ३ |
| अर्थशक्त्युत्थध्वनिप्रभेदानां प्रबन्धगतत्वम् | ८६ | १ |
| अर्थान्तरन्यासः अ० | ३०८ | ७ |
| अर्थान्तरन्यासदोषः | ३६७ | ३ |
| अर्थान्तरसंक्रमित-वाच्यम् | ३४ | ६ |
| अर्द्धान्तरैकपदता दो० | १६० | ८ |
| अलक्ष्यक्रमव्यङ्ग्यम् | ३७ | ७ |
| अलङ्कारदोषाणामुक्ते-ष्वन्तर्भावः | ३६० | ४ |
| अलङ्कारस्वरूपम् | २११ | ६ |
| अलङ्काराणां शब्दार्थ-गतत्वे नियामकम् | २४१ | ३ |
| ” | ३५६ | ७ |
| अवाचकता दो० | १३२ | १७ |
| अविवक्षितवाच्यम् | ३४ | ५ |
| अविशेषे विशेषः दो० | १८० | ६ |
| अश्लीलता दो० | १३५ | १ |
| अश्लीलता क्वचित् गुणः | १८६ | ६ |


Digitized by Google

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| अश्लीलार्थता दो० | १८४ | १ |
| असङ्गतिः दो० | २२२ | १ |
| असमर्थता दो० | १३२ | १३ |
| असुन्दरव्यङ्ग्यम् | १०७ | १७ |
| अस्थानस्थपदता दो० | १६५ | १० |
| अस्थानस्थसमासता दो० | १६६ | ४ |
| अस्थानस्थसमासता क्वचित् गुणः | १९४ | ९ |
| अस्फुटव्यङ्ग्यम् | १०६ | १० |

आ

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| आक्षेपः अ० | ३०५ | १० |
| आक्षेपार्थापत्तिस्थले-न लक्षणा | १४ | ४ |
| आर्थी उपमा | २६१ | ४ |
| आर्थी व्यञ्जना | २७ | ६ |

उ

| विषयः | पृष्ठायाः | पङ्क्तौ |
|---|---|---|
| उत्तमकाव्यम् | ५ | २ |
| उत्तरम् अ० | ३२९ | ७ |
| उत्तरस्य नान्यस्मि-न्नान्तर्भावः | ३३० | १ |
| उत्प्रेक्षा अ० | २७६ | १ |
| उत्प्रेक्षादोषः | ३६७ | १२ |
| उदात्तम् अ० | ३१८ | ४ |
| „ अन्यविधम् | ३१९ | १ |
| उदारता अर्थगुणः | २१९ | ६ |
| „ शब्दगुणः | २१७ | १ |
| उद्देश्यप्रतिनिर्देश्य-स्थले कथितपदस्या-दुष्टता | १६८ | ८ |
| उपनागरिका रीतिः | २२८ | १ |
| उपमा अ० | २५७ | २ |
| „ आर्थी | २६१ | २ |
| उपमादोषाः | ३६३ | १ |
| उपमादोषौ अपरौ | ३६६ | ९ |
| उपमानस्य आधिक्ये न व्यतिरेकः | ३०२ | ३ |
| उपमायां कालादि-भेददोषः | ३६४ | ६ |
| उपमायां कालादि-भेदस्य क्वचित् अदोषता | ३६५ | १२ |
| उपमायां लिङ्गवचन-भेददोषः | ३६३ | ३ |
| उपामायां लिङ्गवचन-भेदस्य अदोषता | ३६४ | २ |
| उममायाः पञ्चविंशति-विधत्वम् | २७२ | ४ |


Digitized by Google

नाभिव्यज्यते,(३०) अपि तु काव्ये नाट्ये चाभिधातो द्वितीये-न(३१) विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः(३२) स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन(३३) भोगेन भुज्यते इति भट्टनायकः(३४) ।

---

(३०) ताटस्थ्येन तटस्थ उदासीनः स च प्रकृते नटो नायकरामादिश्चेति द्विविधः, तत्सम्बन्धित्वेन, आत्मगतत्वेन सामाजिकसम्बन्धित्वेन, न प्रतीयते नानुमीयते, तदानीं रामादीनामभावेन तद्रत्यादेरप्यभावात् असतः सत्त्वेनानुमानप्रमाणाविषयत्वात्, वस्तुतोरामगतया नटगतत्वेनानुमितयाऽपि रत्या सामाजिकेऽसत्या तच्चमत्कारजननासम्भवाच्च । नोत्पद्यते न जन्यते, विभावादीनां वास्तविकत्वाभावात् । नाभिव्यज्यते न व्यञ्जनया उपस्थाप्यते, सिद्धस्यैव तत्सम्भवादिति भावः ।

(३१) द्वितीयेन अन्येन ।

(३२) भाव्यमानः साधारणीक्रियमाणः ।

(३३) सत्त्वगुणस्य उद्रेकेण रजस्तमसी अभिभूयाविर्भावेण यः प्रकाशः स एवानन्दात्मिका संवित् ज्ञानं, तस्य विश्रान्तिर्ज्ञेयान्तरसम्पर्कराहित्येनावस्थानम्, अस्य च वेद्यान्तरभिन्नतभावतया अवस्थिततादृशसंविदिति फलितार्थः, तत्सतत्त्वेन तत्स्वरूपेण ।

(३४) भट्टनायकमतस्यैषः सारः, शब्दस्य अभिधाव्यापारवत् काव्यनाट्ययोस्तद्विलक्षणं भावकत्वभोजकत्वनामकं व्यापारद्वयमतिरिक्तमस्ति, तत्राद्येन व्यापारेण व्यक्तिविशेषस-

Digitized by Google

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववताम्(३५) काव्ये नाट्ये च तैरेव(३६) कारणत्वादिपरिहारेण(३७) विभावनादिव्यापारवत्त्वात्(३८) अलौकिकविभावादिशब्द-

---

सम्बन्धित्वेनासाधारणस्य विभावादेः स्थायिनश्च व्यक्तिविशेषांशपरिहारेण उपस्थापनरूपं साधारणीकरणम्, अन्येन तु विभावादिसङ्कलितेन रतिरास्वाद्यते (असत्या अपि रतेरास्वादः अलौकिकत्वादुपपन्नः)। तथाहि काव्यार्थबोधोत्तरमेव भावकत्वव्यापारेण विभावादिरूपसीतादयो रामसम्बन्धिनी रतिश्च सीतात्वरामसम्बन्धांशमपहाय सामान्यतः कामिनीत्वरतित्वादिनैवोपस्थाप्यते, भोजकत्वव्यापारेण तु उक्तरीत्या साधारणीकृतविभावादिसङ्कलितेन सा रतिः सहृदयैरास्वाद्यते इति रतेरास्वाद एव रसनिष्पत्तिरिति।

(३५) स्थायिनो रतेरनुमाने अनुमानविषये अभ्यासः पुनःपुनरनुशीलनं तेन पाटवं पटुता नैपुण्यम्।

(३६) तैरेव प्रमदादिभिरेव, अस्य च 'अभिव्यक्तः' इत्यग्रिमेणान्वयः।

(३७) कारणत्वादिपरिहारः कारणत्वादिना व्यपदेशपरित्यागः।

(३८) आदिपदेन अनुभावनव्यभिचारणव्यापारयोर्ग्रहणम्। वासनात्मतयाऽतिसूक्ष्मरूपेणावस्थितानां रत्यादीनां आस्वादयोग्यतानयनरूपाविर्भावनं विभावनं, तेषां तु अनुभवविषयीकरणमनुभावनं, काये विशेषेण अभितः रत्यादीनां संचारणं व्यभिचारणं त एव व्यापाराः।

Digitized by Google

व्यवहार्य्यैः(३८) ममैवैते शत्रोरेवैते तटस्थस्यैवैते,(४०) न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इतिसम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैः(४१)

---

(३८) लोके हर्षशोककारणेभ्यो हर्षशोकावेव हि जायेते अत्र पुनः सर्व्वेभ्य एव तेभ्यः सुखमित्यलौकिकत्वम्।

(४०) एते विभावादयः, एतदन्तेन सम्बन्धविशेषस्य 'अमुकस्यैवैते' इत्येवंरूपस्य स्वीकारनियमः। उत्तराङ्केन तु तस्य परिहारनियमः।

(४१) अनध्यवसायात् अनिर्णयात्, साधारण्येन सीतात्वादिविशेषांशरहितेन कामिनीत्वादिना प्रतीतैः ज्ञायमानैः। अत्रायमाशयः, लोके हि त्रिस्रोविधाः, कानिचिद् वस्तूनि स्वस्यैव, कानि च शत्रोरेव, कानि पुनः शत्रुमित्रविलक्षणस्य उदासीनापरनाम्नः तटस्थस्यैव (मित्रवस्तुनोऽपि आत्मीयसम्बन्धित्वेन स्वकीयत्वमिति न विभागन्यूनता)। तत्र यदि स्वकीयत्वेन विभावादयः प्रतीयेरन्, तर्हि इतरसामाजिकसन्निधौ स्वरतिप्रकाशोऽनुचित इति ह्रीरेवोदियात्, रसास्वादस्तु दूर एवास्ताम्। शत्रुसम्बन्धित्वेन प्रतीतौ च विद्वेषाविर्भावस्यैवावश्यम्भावितया रसास्वादप्रत्याशैव कथम्। उदासीनसम्बन्धप्रतीतावपि स्वस्मिन् तदसद्भावाभिसन्धानप्रसङ्गेन नितरामेव तदास्वादोऽनुपपन्नः इति सम्बन्धविशेषस्वीकारस्यानिश्चयः स्वीकर्त्तव्यः। एवं तत्परिहारनियमनिर्णयोऽपि नास्तीत्यङ्गीकार्य्यम्, अन्यथा 'नैते कस्यापि' इति सम्बन्धपरिहारनियमनिश्चये 'असम्बन्धिनोऽसत्त्वम्'

Digitized by Google

अभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः(४२) स्थायी रत्यादिको नियतप्रमातृगतत्वेन (४३) स्थितोऽपि साधारणोपायबलात्(४४) तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमाता (४५)

---

इतिनियमेन अलीकत्वशङ्कया गगनकुसुमगन्धोपलब्धये प्रवृत्तिवत् रसास्वादप्रवृत्तिरेव न स्यात्, तस्मात् तदुभयावधारणवैलक्षण्येन सामान्यतः 'कामिनीयम्' इति ज्ञात्वा कामिनीत्वादिना प्रतीतेरिति ।

(४२) सामाजिकानां संस्काररूपेण सूक्ष्मतया पूर्व्वमेवावस्थितः अधुना तु साधारणीकृतविभावादिभिस्तस्यैवाविर्भावमात्रम् । अत एव येषां वेदाभ्यासजडानां वैयाकरणादीनाञ्च तादृशसंस्काराभावः, तेषां रसास्वादोऽपि न भवति ।

(४३) नियतः रसास्वादयितृतया निश्चितो यः प्रमाता सामाजिकः तद्गतत्वेन तत्सम्बन्धित्वेन ।

(४४) साधारणः व्यक्तिविशेषसम्बन्धित्वेनाप्रतीयमानो यउपायो विभावादिः ।

(४५) तत्कालं रसास्वादकालं विगलितोऽप्रतीतो यः परिमितप्रमातृभावः 'ममैवैतेऽहमेव रसास्वादयिता' इत्येवंरीत्या अननुभूयमानो यो व्यक्तिविशेषसम्बन्धः तद्वशेन उन्मिषितः प्रादुर्भूतः, एवं वेद्यान्तरस्य लौकिकघटादिविषयस्य सम्पर्केण ज्ञानरूपसम्बन्धेन शून्योऽपरिमितो भावश्चित्तवृत्तिविशेषो यस्य तेन प्रमाता रसास्वादयिता कर्त्ता ।

Digitized by Google

सकलसहृदयसंवादभाजा साधारण्येन (४६) स्वाकारे इवाभिन्नोऽपि (४७) गोचरीकृतः (४८) चर्व्यमाणतैकप्राणो(४९) विभावादिजीवितावधिः (५०) पानकरसन्यायेन

---

(४६) सकलानां सहृदयानां संवादभाजा 'एकत्र दृष्टस्यान्यत्र तथादर्शनं संवादः' इत्युक्तेः सम्मतिशालिना साधारण्येन कामिनीत्वादिसाधारणधर्म्मप्रकारेणोपस्थित्या, अस्य 'गोचरीकृतः' इत्यनेनान्वयः।

(४७) ननु विवक्षितविवेचने रत्याद्यास्वादस्यैव रसरूपतया कथं रसस्य आस्वादः आस्वादास्वाद्ययोर्लोके वैलक्षण्यदर्शनादित्यत आह स्वाकार इति, 'स्वस्य ज्ञानस्य आकारविशेष एव विषयः न तु ज्ञानादन्यः' इति हि योगाचारमते यथा वस्तुतो ज्ञानस्वरूपस्य विषयस्य ज्ञेयत्वं, तथा आनन्दात्मकास्वादस्वरूपस्यापि रसस्य आस्वाद्यत्वमविरुद्धमिति भावः।

(४८) गोचरीकृतः विषयीकृतः।

(४९) चर्व्यमाणता आस्वादः एकः अद्वितीयः प्राण इव स्वरूपनिष्पत्तिहेतुर्यस्य सः।

(५०) उक्तरूपविभावादिरेव जीवितस्य जीवनस्य अवधिः पूर्व्वापरसीमा यस्य सः। विभावादिकालमात्रस्थायीति परमार्थः।

Digitized by Google

चर्व्यमाणः(५१) पुरइव परिस्फुरन् हृदयमिव प्रविशन् सर्व्वाङ्गीणमिवालिङ्गन् अन्यत् सर्व्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः (५२)। स च न कार्य्यः विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात् (५३), नापि ज्ञाप्यः सिद्धस्य तस्यासम्भ-

---

(५१) पानकरसो हि मरीचशर्कराकर्पूरादिविलक्षणवस्तुसंपादितोऽपि मरीचादिरसवैलक्षण्येन तत्समुदायसंवलनसम्पादितेनानिर्व्वचनीयेनास्वादेनास्वाद्यते यथा; तथा विभावादिवैलक्षण्येन लोकातीतेन आस्वादेन चर्व्यमाणः आस्वाद्यमान इत्यर्थः।

(५२) एतन्मतस्य स्थूलत इदं मर्म्म, रतिकारणादीनामनुभवादसकृदनुमिता रतिः संस्काररूपेण सहृदयहृदयमधिरोहति, अथ कियता कालेन सुनिपुणमनुष्ठितयोः रामादिव्यक्तिविशेषसम्बन्धिरतिकारणविभावादिप्रतिपादकयोरपि काव्यनाट्ययोः पूर्व्वोक्तभावकत्वव्यापारेण रामसीतादिविशेषांशपरिहारेण रतिकारणसाधारणकामिनीत्वादिना प्रतीतैः विभावादिभिः सहृदयहृदयावस्थिता सा रतिर्व्यञ्जनया अभिव्यक्ता सामाजिकानाम् आस्वाद्यतामायातीति एतादृशास्वाद एव रसनिष्पत्तिरिति। पूर्व्वमते असत्या अपि रतेरास्वादः, अत्र तु वासनया स्थिताया एवेत्यनयोर्भेदः।

(५३) अवयवादिरूपोपादानकारणाद्यतिरिक्तकारणनाशेऽपि कार्य्यनाशस्यावश्यम्भावानियमात् दण्डनाशेऽपि घटस्थितेरिति शेषः।

Digitized by Google

वात् (५४)। अपि तु विभावादिभिर्व्यञ्जितश्चर्व्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न क्वचिद्दृष्टमित्यलौकिकसिद्धेर्भूषणमेतन्न दूषणम्। चर्व्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्य्योऽप्युच्यताम्,(५५) लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्य्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्(५६)। तद्ग्राहकञ्च न निर्व्विकल्पकं विभावादिपरामर्शप्रधान-

---

(५४) जातो हि घटादिर्ज्ञायते न तु जायमान एव ज्ञायते।

(५५) तथाच चर्व्वणोत्पत्तिमादाय रसस्य उत्पत्तिव्यपदेशः।

(५६) लौकिकं यत् प्रत्यक्षादि ज्ञानं यच्च प्रमाणताटस्थ्येन प्रमाणौदासीन्येन (चक्षुरादिलौकिकप्रमाणमनपेक्ष्यैवेति यावत्), अवबोधः ज्ञानं, तद्वतां मितयोगिनां अपक्वयोगिनां (ध्यानजन्यं) ज्ञानं, यदपि च वेद्यान्तरस्य ज्ञेयान्तरस्य लौकिकविषयस्य सम्बन्धेन रहितं स्वस्वरूपात्ममात्रविषयकं परिमितेतरयोगिनां पक्वयोगिनां संवेदनं ज्ञानं, एतत्त्रितयविलक्षणम् अतएव च लोकातीतं यत् स्वात्मकं संवेदनं तस्य विषय इत्यर्थः। प्रत्येयो ज्ञेयः।



Digitized by Google

त्वात्(५७)। नापि सविकल्पकं चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्(५८)। उभयाभावस्वरूपस्य चोभयात्मकत्वमपि(५९) पूर्व्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्य्याभिनवगुप्तपादाः ।

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे (६०) मिलिता निर्द्दिष्टाः ॥

---

(५७) ज्ञानमिह द्विविधं सविकल्पकं निर्व्विकल्पकञ्चेति नामरूपजात्यादिविशेषशून्यं ज्ञानं निर्व्विकल्पकं, तद्विपरीतं सविकल्पकम् । विभावादिपरामर्शेति विभावादिपरामर्शस्य सविकल्पकतया निर्व्विकल्पकजननायोग्यत्वात् ।

(५८) स्वात्मकप्रतीतिमात्रसिद्धत्वात् । अयंभावः, तदानीं ज्ञानान्तरासम्भवात्, रसमात्रविषयिण्यां चर्व्वणायां नामरूपाद्युल्लेखासम्भवाच्च कुतः सविकल्पकत्वमिति ।

(५९) उभयाभावस्वरूपस्य उभयभिन्नस्य । 'विरुद्धयोरेकतरनिषेधेऽपरस्मिन् पर्य्यवसानम्' इति नियमेन सविकल्पकत्वनिषेधे निर्व्विकल्पकत्वं, निर्व्विकल्पकत्वनिषेधे च सविकल्पकत्वमायातीति उभयात्मकत्वम् ।

(६०) सूत्रे पूर्व्वोक्तभरतसूत्रे ।

Digitized by Google

वियदलिमलिनाम्बुगर्भमेघं,
मधुकरकोकिलकूजितैर्दिशां श्रीः।
धरणिरभिनवाङ्कुराङ्कटङ्का,(६१)
प्रणतिपरे दयिते प्रसीद मुग्धे!

इत्यादौ

परिमृदितमृणालीम्लानमङ्गं, प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः

इत्यादौ

दूरादुत्सुकमागते विवलितं, सम्भाषिणि स्फारितं,
संश्लिष्यत्यरुणं, गृहीतवसने किञ्चाञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो! प्रपञ्चचतुरं जातागसि प्रेयसि

इत्यादौ च

यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानाञ्च व्यभिचारिणां केवलानामत्र स्थितिः,(६२)

---

(६१) नूतनाङ्कुर एव अङ्के क्रोड़े टङ्का दुर्भेद्यत्वात् पाषाणभेदकास्त्रविशेषो यस्याः सा।

(६२) अत्रेति अत्र यथाक्रममुक्तोदाहरणत्रये। स्थितिः साक्षादुल्लेखः।

तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति(६३) ।

तद्विशेषानाह

शृङ्गारहास्यकरुण-
रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चे-
त्यष्टौ नाट्ये(६४) रसाः स्मृताः ॥२९॥

तत्र शृङ्गारस्य द्वौ भेदौ, सम्भोगो विप्रलम्भश्च । तत्राद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य एक एव गण्यते,

---

(६३) असाधारणत्वं प्राकरणिकरतिनियतावस्थितिकत्वम् । अन्यतमेषु विभावानुभावव्यभिचारिषु द्वयस्य उल्लिखितभिन्नस्य आक्षेपकत्वे प्रत्यायकत्वे । नानैकान्तिकत्वं न मिलितानां तेषां रसनिष्पत्तिहेतुत्वव्यभिचारः । तदयं सिद्धान्तः, मिलितानामेव रसनिष्पत्तिहेतुत्वं, यत्र तु एक एव निर्दिष्टः, तत्रापि तेनैवान्ययोर्द्वयोराक्षेपेण रसनिष्पत्तिरिति ।

(६४) शान्तस्य रोमाञ्चादिविरहेणानभिनेयत्वात् काव्यमात्रविषयत्वमिति नाट्येऽष्टावित्युक्तम् इति प्रदीपः, वस्तुत उपलक्षणम् ।

Digitized by Google

यथा

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्व्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥

तथा

त्वं मुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि(६५)।
शय्योपान्तनिविष्टसस्मितमुखो नेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥

अपरस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्च-विधः(६६)। क्रमेणोदाहरणम्

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्म्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥

---

(६५) तस्याः नायिकायाः वीटिका वसनग्रन्थिः।

(६६) अपरः विप्रलम्भः। अत्र अभिलाषः पूर्व्वराग-मात्रम्; विरहस्तु एकतरस्याननुरागात्, अनुरागे सत्यपि वा दैवप्रतिबन्धात्, गुरुलज्जादिवशाच्चासंयोगः; ईर्षा मान-

Digitized by Google

अन्यत्र व्रजतीति का खलु कथा, नाप्यस्य तादृक् सुहृद्
यो मां नेच्छति, नागतश्च इह हा! कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि ॥

एषा विरहोत्कण्ठिता(६७) ।

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥

प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्व्वे समं प्रस्थिताः,
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते ॥

---

हेतुमात्रम्, प्रवासः अनुरक्तयोरपि कार्य्यान्तरवशात् विभिन्नदेशस्थितिः, स च भूतभविष्यद्वर्त्तमानसाधारणः ; शापः एतावन्तं कालं तव नायिकासंयोगो माऽस्त्वित्यादिरूपः सिद्धपुरुषादिवाग्विशेषः ।

(६७) न त्वाद्यानुरागवती प्रोषितपतिका वेति शेषः ।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानन्ते चरणपतितं यावदिच्छामि कर्त्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः(६८)।

हास्यादीनां क्रमेणोदाहरणम्

आकुञ्च्य पाणिमशुचिं मम मूर्द्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।
तारस्वरं प्रथितथूत्क्रमदात्प्रहारं
हाहा हतोऽहमिति रोदिति विष्णुशर्म्मा॥

हा मातस्त्वरिताऽसि कुत्र? किमिदं! हा देवताः! क्वाशिषः!
धिक् प्राणान्, पतितोऽशनिः, हुतवहस्तेऽङ्गेषु! दग्धे दृशौ!
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति, शतधा कुर्व्वन्ति भित्तीरपि(६९)॥

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्न्निर्म्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥

(६८) कृतान्तो दैवम्। कुवेरशापेन वियुक्तभार्य्यस्य यक्षराजस्य प्रियामुद्दीश्य मेघरूपदूतं प्रत्युक्तिरियम्।

(६९) राजपत्न्यां स्वर्य्यातायां तत्परिजनोक्तिरियम्।

क्षुद्राः संत्रासमेते विजहित हरयः ! क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे ! तिष्ठ ! पात्रं त्वमसि नहि रुषां, नन्वहं मेघनादः,
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेष यामि(७०) ।।

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्व्वकायम् ।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्व्यां प्रयाति ।।

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति(७१) ।।

---

(७०) कार्य्यारम्भेषु स्थिरतरः संरम्भ उत्साहः तत्प्रकृतिको वीरः स च त्रिधा युद्धवीरः दानवीरः दयावीरश्चेति । दर्पणकारमते धर्म्मवीरोऽपि अधिकोऽस्ति, तत्राद्यस्यैवेदमुदाहरणम् ।

(७१) अत्र उत्सेध-अंस-स्फिक्-पृष्ठपिण्डी-रङ्क-करङ्क-स्थपुट-शब्दाः यथाक्रमं उच्चत्व-स्कन्ध-उरुमूलसन्धिपृष्ठभागोभय-जंघोर्द्धभाग-दरिद्र-शवशिरो-गम्भीरविषमभागार्थकाः ।

चित्रं! महानेष बतावतारः,
क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्य्यमहो प्रभावः!
काऽप्याकृतिर्नूतन एष सर्गः(७२) ॥

एषां स्थायिभावानाह

रतिर्हासश्च शोकश्च
क्रोधोत्साहौ भयन्तथा ।
जुगुप्सा विस्मयश्चैव
स्थायिभावाः प्रकीर्त्तिताः(७३) ॥ ३० ॥

स्पष्टम् ।

व्यभिचारिणो ब्रूते

निर्व्वेदग्लानिशङ्काख्या-
स्तथाऽसूयामदश्रमाः ।
आलस्यञ्चैव दैन्यञ्च
चिन्ता मोहः स्मृतिर्धृतिः ॥ ३१ ॥

---

(७२) इयं किल वामनमुद्दिश्य बलेरुक्तिः ।

(७३) स्रक्सूत्रन्यायेन नियतावस्थानं स्थायिनः, व्यभिचारिणस्तु फेनबुद्बुदन्यायेनानियतावस्थानमित्यनयोर्भेदः ।



Digitized by Google

व्रीड़ा चपलता हर्ष
आवेगो जड़ता तथा ।
गर्व्वो विषाद औत्सुक्यं
निद्राऽपस्मार एव च ॥ ३२ ॥

सुप्तं प्रबोधोऽमर्षश्चा-
प्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्माद-
स्तथा मरणमेव च ॥ ३३ ॥

त्रासश्चैव वितर्कश्च
विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः
समाख्यातास्तु नामतः(७४) ॥ ३४ ॥

निर्व्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताऽभिधानार्थम् । तेन

---

(७४) नामत उद्देशमात्रेण, न तु लक्षणोदाहरणप्रदर्शनादिना, तत्तु साहित्यदर्पणात्तृतीयपरिच्छेदादितोऽवगन्तव्यम् ।

Digitized by Google

निर्व्वेदस्थायिभावोऽस्ति

शान्तोऽपि नवमो रसः(७५) ।

यथा

अहौ वा हारे वा, कुसुमशयने वा दृषदि वा,

मणौ वा लोष्टे वा, बलवति रिपौ वा सुहृदि वा ।

तृणे वा स्त्रैणे(७६) वा, मम समदृशो यान्तु दिवसाः

क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ।।

रतिर्देवादिविषया

व्यभिचारी तथाऽञ्जितः(७७) ।। ३५ ।।

---

(७५) शान्तस्य आलम्बनम् अनित्यत्वादिदोषदुष्टस्य विषयस्य निःसारतादि, उद्दीपनं पुण्याश्रमसत्पुरुषसङ्गादि, अनुभावो रोमाञ्चादिः, हर्षादयस्तु व्यभिचारिणः, काव्य-प्रदीपकारादिमते तु शान्तस्य शमः स्थायी भावः ।

(७६) स्त्रैणं स्त्रीसमूहः ।

(७७) रतिपदं सकलस्थायिभावोपलक्षणम्, देवादि-विषयेत्यपि अप्राप्तरसावस्थोपलक्षणं, तेन देवादिविषया सर्व्वप्रकारा, कान्तादिविषया तु अपुष्टा रतिः, हासादयश्च अप्राप्तरसावस्थाः, प्राधान्येन अञ्जितोऽव्यञ्जितो व्यभिचारी च 'भावः' इत्यवगन्तव्यमिति एवमेव काव्यप्रदीपः ।

Digitized by Google

भावः प्रोक्तः

आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता शृङ्गारः । उदाहरणम्

कण्ठकोणविनिविष्टमीश! ते कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि, मे न रोचते(७८) ॥

हरत्यघं सम्प्रति, हेतुरेष्यतः
शुभस्य, पूर्व्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥

एवमन्यदप्युदाहार्य्यम्(७९) ।

व्यभिचारी यथा

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥

---

(७८) भवद्वपुषो भेदेन सह वृत्तिरवस्थितिर्यस्य तादृशम्, त्वदन्यगामीति यावत् । अयं भावः अनन्यगामित्वेन कालकूटस्य प्रियत्वं अतथाभूतत्वेनामृतस्य अप्रियत्वमिति ।

(७९) अत्र 'पुत्रविषया रतिर्यथा'–इत्यादिकोऽधिकः पाठः क्वचिदस्ति, स तु टीकाकृद्भिरदृष्टतया उपेक्षितः ।

Digitized by Google

अत्र विधिं प्रत्यसूया(८०)।

## तदाभासा अनौचित्यप्रवर्त्तिताः(८१)।

तदाभासा रसाभासा भावाभासाश्च। तत्र रसाभासो यथा

स्तुमः कं? वामाक्षि! क्षणमपि विना यं न रमसे,
विलेभे कः प्राणान् रणमखमुखे? यं मृगयसे।
सुलग्ने को जातः? शशिमुखि! यमालिङ्गसि बलात्,
तपःश्रीः कस्यैषा? मदननगरि! ध्यायसि तु यम्(८२)॥

अत्रानेककामुकविषयमभिलाषं तस्याः 'स्तुमः' इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति(८३)।

---

(८०) प्राधान्येन प्रतीयते इति शेषः।

(८१) अनौचित्यं हि प्रतिषिद्धविषयकत्वादिरूपं सामाजिकसंवेद्यम्, तच्च शृङ्गारे बहुविषयत्वेन उपनायकादिगतत्वेन गुरुजनगतत्वेन तिर्य्यगादिगतत्वादिना च नानैव, एवं वीराद्यावपि ज्ञेयम्।

(८२) पूर्व्वपूर्व्वव्यवच्छेदार्थकेन तुशब्देन नानाव्यक्तिविषयकत्वप्रतीतिः।

(८३) अभिलाषं कर्म्म, स्तुम इत्यादिषु अनुगतं सम्बद्धं बहुषु व्यापारोपादानं कर्तृ, व्यनक्ति व्यञ्जयति, अभिलाषेण च अभिव्यक्तेन बहुविषया रतिरभिव्यज्यते इत्यर्थात् सिद्धम्।

Digitized by Google

भावाभासो यथा

राकासुधाकरमुखी तरलायताक्षी
सस्मेरयौवनतरङ्गितविभ्रमास्या ।
तत् किं करोमि ? कथमत्र तनोमि मैत्रीं ?
तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः ।।

अत्र चिन्ता अनौचित्यप्रवर्त्तिता(८४) । एवमन्येऽप्युदाहार्य्याः ।।

भावस्य शान्तिरुदयः
सन्धिः(८५) शबलता तथा ।। ३५ ।।

क्रमेणोदाहरणम्

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते? ।
इत्युक्ते क्व तदित्युदीर्य्य सहसा तत् सम्प्रमार्ष्टुं मया
संश्लिष्टा रभसेन, तत्सुखवशात् तन्व्याऽपि तद् विस्मृतम् ।।

---

(८४) 'आदौ वाच्यस्त्रियोरागः पश्चात् पुंसस्तदिङ्गितैः' इति हि औचित्यम्, तद्वैपरीत्येन अननुरक्तायामनुरागोऽयुक्त इति । व्यभिचारिभावस्य चिन्तायाः प्राधान्येनाभिव्यक्तत्वात् भावत्वम् ।

(८५) समकालमेव विरुद्धयोरपि तुल्यरूपयोरास्वादः सन्धिः ।

Digitized by Google

अत्र कोपस्य(८६)

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यःकोपपरिग्रहग्लपितया चाटूनि कुर्व्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥

अत्र औत्सुक्यस्य(८७) ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः(८८) ॥

---

(८६) शान्तावेव चमत्कारविश्रामइति शान्तिरिति-शेषः ।

(८७) उदय इति शेषः ।

(८८) अत्र उत्सिक्तरभसोत्फालशब्दाः यथाक्रमम् विख्यातदर्पोद्रेकपराः ।

Digitized by Google

अत्रावेगहर्षयोः(८८) ।

क्वाकार्य्यं, शशलक्ष्मणः क्व च कुलं ! भूयोऽपि दृश्येत सा !
दोषाणां प्रशमाय नः श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः ? स्वप्नेऽपि सा दुर्लभा !
चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति ! (९०)॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता(९१) ।

भावस्थितिस्तूक्ता चोदाहृता च(९२) ।

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन(९३) ॥**

ते भावशान्त्यादयः, अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत् ।

---

(८९) पूर्व्वार्द्धे संरम्भात्मकस्यावेगस्य, उत्तरार्द्धे तु हर्षस्य तुल्यकालमेवास्वादः इति एतयोर्म्मिलनरूपा सन्धिः ।

(९०) धास्यति पास्यति ।

(९१) अत्र हि पूर्व्वपूर्व्वोपमर्द्देन उत्तरोत्तरं प्रतीयमानं चमत्कारमादधतीति तत्स्वरूपा शबलता ।

(९२) ननु भावस्य शान्त्यादिवत् स्थितिरपि पृथक् कथं नोक्ता इत्यत आह भावेति, अयंभाव; भावस्थितेर्वस्तुतो भावाभिन्नतया पूर्व्वोपदर्शितेन तेनैव तस्य गतार्थत्वमिति ।

(९३) यदा तएवाङ्गित्वेन विवक्ष्यन्ते ।

Digitized by Google

अनुस्वानाभसंलक्ष्य-
क्रमव्यङ्ग्यस्थितिस्तु यः ॥ ३६ ॥
शब्दार्थोभयशक्त्युत्थ-
स्त्रिधा स कथितो ध्वनिः(६४) ।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः, अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः, उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः ।

तत्र

अलङ्कारोऽथ वस्त्वेव
शब्दात् यत्रावभासते ॥ ३७ ॥
प्रधानत्वेन स ज्ञेयः
शब्दशक्त्युद्भवो द्विधा ।

वस्त्वेवेति अनलङ्कारवस्तुमात्रम् ।

---

(६४) घण्टायां वाद्यमानायां प्रधानशब्दप्रतीत्यनन्तरं यथा चोदीयानपरोऽनुरणनानुस्वानादिपदाभिधेयः शब्दविशेषः प्रतीयते, तस्येव संलक्ष्यः क्रमो यस्य, तादृशस्य व्यङ्ग्यस्य स्थितिर्यस्मिन्निति विग्रहः । शब्दपरिवृत्त्यसहत्वसहत्वाभ्यां यथाक्रमं शब्दशक्तिमूलत्वार्थशक्तिमूलत्वे इति प्रदीपमतम् । शाब्दव्यञ्जनार्थव्यञ्जनाभ्यामनयोर्भेद इति महेश्वरः ।



Digitized by Google

आद्यो यथा

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्ज्जितगर्ज्जितेन ।
निर्व्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः(८५) ॥

अत्र वाक्यस्यासम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति(८६) प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालङ्कारो व्यङ्ग्यः ।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान्(८७) ॥

---

(८५) प्राकरणिकनृपतिपक्षे कालोऽरिकुलसंहर्त्ता यः करवालः स एव महदम्बु धाराकूपजलं वहतीति तम् । जरठं कठोरम् ऊर्ज्जितं बलवत् गर्ज्जितं सिंहनादो यस्य तेन । धाराजलैः खड्गधाराकान्तिभिः । अप्राकरणिकेन्द्रपक्षे तु कालकरः वर्षर्त्तुकालसूचकः । बालो नवीनः । गर्ज्जितेनोपलक्षितमित्यर्थः ।

(८६) करवालमुल्लास्येत्येतावन्मात्रे वक्तव्ये कालेत्यादिविशेषणादिपदप्रयोगो निरर्थकइति असम्बद्धार्थकत्वप्रसक्तिः । अत्रेदं बोध्यं, यत्र एकस्य प्राकरणिकत्वं तत्रैवास्य विषयः, यत्र तु उभयोरपि प्राकरणिकत्वाद्यनियमस्तत्र श्लेषः ।

(८७) प्रस्तुतपक्षे विधुराणां शत्रूणां निशेव निशा मरणं, तत्कर्त्ता ; मतिः वस्तुतत्त्वावधारणक्षमा बुद्धिः, मानं

Digitized by Google

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद! प्रभो!।
अहितः सहितः साधुयशोभिरसतामसि(९८)॥

अत्रापि विरोधाभासः।

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने(९९)॥

---

प्रमाणं, ताभ्यां तत्त्वे याथार्थ्ये वृत्तिरनुसरणं यस्य सः। प्रतिपदं प्रतिस्थानं पक्षाणामात्मीयानामग्रणीरग्रसरः। अत्र पदभङ्गेन विरोधस्तथा हि तिग्मरुचिः सूर्य्यः अथ च अप्रतापः प्रतापरहितः, विधुश्चन्द्रः अथ च अनिशाकृत्, विभः दीप्तिरहितः अथ च विभाति दीप्यते, मधुर्वसन्तः अथ च अलीलः लीलारहितः, मतिमान् अथ च अतत्त्वे अवस्तुभूते विषये वर्त्तते, प्रतिपत् प्रथमा तिथिः अथ च अपक्षाग्रणीः पक्षस्यादीभूता न।

(९८) प्रस्तुतपक्षे समितो युद्धात् प्राप्तैरुत्कर्षैरमितोऽपरिच्छिन्नः असतामहितः दण्डविधायकत्वेन शत्रुः, अत्र पदभङ्गेन विरोधः, तथाहि अमितः परिमाणशून्यः अथच समितः परिमाणसहितः। एवमहितद्दत्यादावपि बोध्यम्।

(९९) उपादानम् उपकरणं तूलिकादिकं, तस्य सम्भारः सम्पत्तिः समूहो वा, तद्रहितं यथा स्यात्तथा; चित्रं नानाकारं, कला चन्द्रकला। पक्षे चित्रमालेख्यं, कला आलेख्य-क्रियाकौशलम्। अत्र हि चित्रकरेभ्यः शूलिन

अत्र व्यतिरेकः । अलङ्कार्य्यस्यापि ब्राह्मणश्रमणन्याये-नालङ्कारता(१००) ।

वस्तुमात्रं यथा

पंथिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उसअपओहरं पेक्खिउअ उण जइ वससि ता वससु(१०१) ॥

अत्र यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति व्यज्यते ।

शनिरशनिश्च तमुच्चैर्न्निहन्ति, कुप्यसि नरेन्द्र! यस्मै त्वम् ।
यत्र प्रसीदसि पुनः, स भात्युदारोऽनुदारश्च(१०२) ॥

---

उत्कर्षो व्यज्यते, तच्च चित्रकलादिशब्दसामर्थ्यादेव चित्रका-रोपस्थित्यैव भवतीति प्रकृतोदाहरणत्वम् । शिष्यबुद्धिवैशद्याय बह्वदाहृतम् ।

(१००) श्रमणः बौद्धसन्न्यासी, तस्य तदानीं ब्राह्मण्या-भावेऽपि पूर्व्वकालिकब्राह्मण्यमादाय ब्राह्मणव्यवहारः ।

(१०१) पथिक! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तद्वस इति सं०। स्रस्तरं शयनार्थासनादि, पयोधरो मेघः अथ च स्तनः । अत्र पयोधरशब्दमूलं व्यङ्ग्यम्।

(१०२) शनिः शनिग्रहः, अशनिर्वज्रम्; उदारोमहान्, अनुगता दारा वनिता यस्य इति व्युत्पत्त्या अनुदारः वशीकृतवनितः ।

Digitized by Google

अत्र विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्य्यं कुरुत इति ध्वन्यते।

अर्थशक्त्युद्भवोऽप्यर्थो(१०३)
व्यञ्जकः सम्भवी स्वतः ॥ ३८ ॥
प्रौढ़ोक्तिमात्रात् सिद्धो वा
कवेः, तेनोम्भितस्य वा।
वस्तु वाऽलङ्कृतिर्वेति
षड्भेदोऽसौ व्यनक्ति(१०४) यत् ॥ ३९ ॥
वस्त्वलङ्कारमथवा
तेनायं द्वादशात्मकः।

स्वतः-सम्भवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन सम्भाव्यमानः। कविना प्रतिभामात्रेण बहिरसन्नपि निर्म्मितः, कविनिबद्धेन वा वक्त्रेति द्विविधोऽपर इति त्रिविधः(१०५), वस्तु वाऽलङ्कारो वाऽसाविति षोढ़ा

(१०३) अपिरयं भिन्नक्रमेणान्वेति, अर्थोऽपि व्यञ्जक इत्यर्थः।

(१०४) व्यनक्ति व्यञ्जयति।

(१०५) अर्थोहि प्रथमतो द्विधा, स्वतः-सम्भवी, प्रौढ़ोक्तिमात्रसिद्धश्च; तत्रापि चरमः कवेः, कविना निबद्धस्य नायकादिरूपवक्तुर्वा प्रतिभामात्रनिष्पन्नत्वेन द्विधा इति मिलित्वा अर्थस्य त्रैविध्यम्।

Digitized by Google

व्यञ्जकः, तस्य वस्तु वालङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थ-शक्त्युद्भवो ध्वनिः।

क्रमेणोदाहरणम्

अलससिरोमणि धुत्ताणं अग्गिमो पुत्ति! धणसमिद्धिमओ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ(१०६)॥

अत्र ममैवोपभोग्यइति वस्तुना वस्तु व्यज्यते।

धन्यासि, या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि॥

अत्र त्वमधन्या अहन्तु धन्येति व्यतिरेकालङ्कारः।

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तनिघ्नघनशोणितशोणशोचिः।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्षइव यस्य करे कृपाणः(१०७)॥

---

(१०६) अलसशिरोमणिर्धूर्त्तानामग्रिमः पुत्रि! धन-समृद्धिमयः। इति भणितेन नताङ्गी प्रफुल्लविलोचना जातेति स०। पूर्व्वार्द्धन्तु स्वयं पतिंवरां प्रति धात्र्याः प्ररो-चनायोक्ति, उत्तरार्द्धन्तु कवेः।

(१०७) यस्य राज्ञः करे कृपाणः खड्गः युधि युद्धे वीरैः कोपेन कषाया अतिशयरक्ता कान्तिर्यस्य तादृशः काल्या

Digitized by Google

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात् करिष्यते इति वस्तु ।

गाढ़कान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥

अत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता(१०८), मम क्षत्याऽप्यन्यस्य क्षतिर्नि-

---

देव्याः कटाक्षइव व्यलोकि दृष्टः, कीदृशः दर्पेण मदेन अन्धस्य उद्रिक्तस्य गन्धगजस्य (यस्य गन्धं समाघ्राय पलायन्तेऽपरे गजाः) कुम्भयोर्गण्डस्थलयोः कपाटं विशालत्वाद्दुर्भेद्यत्वात् कपाटमिव मध्यभागः तस्य कूटमग्रभागः तदेव कठिनत्वात् कूटं लौहमुद्गरः इव तत्र संक्रान्त्या पतनेन निघ्नं दृढ़रूढं घनं निविड़ं यच्छोणितं तेन शोणशोचिः रक्तकान्तिर्यस्य सः ।

(१०८) ओष्ठदंशनेन ओष्ठदंशव्यथामोचनं विरुद्धम्, विरुद्धञ्च ओष्ठदंशनव्यथामोचनक्रिययोः कार्य्यकारणयोरपि समकालिकत्वमिति, तेन च स्वाधरदंशनशत्रुव्यापादनयोः एककालिकत्वरूपैकधर्म्मसम्बन्धात्तुल्ययोगिता, "एकधर्म्मसम्बन्ध एव तुल्ययोगिता" इति प्राचीनमतेनेदम्; एवमेव नागोजीभट्टादयः, प्रदीपकारादयस्तु विरोधपदस्य कार्य्यकारणयोः पौर्व्वापौर्य्यविपर्य्ययरूपातिशयोक्तिपरत्वं, 'तुल्यमेककालमेव युनक्ति' इतिव्युत्पत्त्या तुल्ययोगितापदञ्च समुच्चयपरमिति व्याचख्यिरे, महेश्वरेणाप्येवमेवाभिदधे ।

वर्त्ततामिति तद्बुद्धिरुत्प्रेच्यते इत्युत्प्रेचा वा। एषूदाहरणेषु स्वतः-सम्भवी व्यञ्जकः।

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति॥

अत्र वस्तुना(१०६) येषामप्यर्थाभिगमो नास्ति, तेषामप्येव-मादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्त्तिरिति वस्तु ध्वन्यते।

केसेसु बलामोड़िअ
तेण समरम्मि जअसिरी गहिआ।
जह कन्दराहिं बिडुरा
तस्स दिढं कंठअम्मि संठविआ(११०)॥

---

(१०६) कविप्रतिभामात्रनिष्पन्नात् यशसः श्रवणप्रवेशात् बिसिनीसम्भावनया कर्णे हस्तावर्त्तनरूपेण कविप्रतिभामात्रनिष्पन्नेन वस्तुना। अत्र संशयभ्रान्तिमदन्यतरालङ्कारस्य सद्भावेऽपि तन्निरपेक्षेणैव व्यञ्जकत्वमिति यथोक्तोदाहरणत्वम्।

(११०) केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता। यथा कन्दराभिर्विधुराः तस्य दृढं कण्ठे संस्थापिता इति स०। बलामोड़िअशब्दो बलात्कारे देशीति उदाहरणचन्द्रिकादयः। 'बला मोडिअ' बलात् मुटित्वा (आक्रम्य) इत्यपि कश्चित्। विधुराः शत्रवः।

Digitized by Google

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति इत्युत्प्रेक्षा, एकत्र संग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः, न पलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च(१११) ।

गाढालिङ्गणरहसुज्जअम्मि दइए लहुं समोसरइ ।
माणंसिणीणं माणो पीलणभीअव्व हिअआहि(११२) ।।

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

जा ठेरं व हसन्ती कइवअणंवुरुहवद्धविणिवेसा ।
दावेदि भुअणमण्डलमण्णं विअ जअइ सा वाणी(११३) ।।

अत्रोत्प्रेक्षया चमत्कारैककारणम् नवं नवं जगत् अजडासनस्था(११४) निर्मिमीत इति व्यतिरेकः । एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

---

(१११) कन्दराणां कण्ठस्थापनरूपकविप्रतिभामात्रनिष्पन्नेन वस्तुना व्यज्यत इति शेषः ।

(११२) गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति । मनस्विनीनां मानः पीड़नभीतइव हृदयादिति सं० ।

(११३) या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा । दर्शयति भुवनमण्डलमन्यदिव जयति, सा वाणीति सं० ।

(११४) जड़ं जलजम् अथच जड़पदार्थरूपं यद्ब्रह्मासनं, तदन्यस्मिन्नासने तिष्ठति या सा ।

जे लङ्कागिरिमेहलासु खलिआ सम्भोअखिस्रोरई-
फारफुल्लफणावलीकवलणे पत्ता दरिद्दत्तणं।
ते एह्निं मलआनिला विरहिणीणीसाससम्पक्किणो
जाआ झत्ति सिसुत्तणे वि बहला तारुस्रपुस्रा विअ(११५)॥

अत्र निःश्वासैः प्राप्तैश्वर्य्या वायवः किं किं न कुर्व्वन्तीति वस्तुना(११६) वस्तु व्यज्यते।

सहि! विरइऊण माणस्स
मज्भ धीरत्तणेण आसासं।
पिअदंसणविहलंखलखणम्मि
सहसत्ति तेण ओसरिअं(११७)॥

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना, प्रियदर्शनस्य सौभाग्यबलं धैर्य्येण सोढुं न शक्यते इत्युत्प्रेक्षा वेति।

---

(११५) ये लङ्कागिरिमेखलासु स्खलिता सम्भोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्। ते इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो जाता झटिति शिशुत्वेऽपि बहला तारुण्यपूर्णा इव इति स०।

(११६) वस्तुना कविनिबद्धकर्पूरमञ्जरीनामनायिकाप्रौढोक्तिमात्रसिद्धवस्तुना।

(११७) सखि विरचय्य मानस्य मम धीरत्वेनाश्वसम्। प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् इति स०।

Digitized by Google

उल्लोलकरअरअणक्खएहिं तुह लोअणेसु मह दिखं ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ(११८) ॥

अत्र किमिति लोचने कुपिते वहसि ? इति (११९) उत्तरालङ्कारेण (१२०) न केवलमार्द्रनखक्षतानि गोपयसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु ।

महिलासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती ।
अणुदिणमणणअम्मा अङ्गं तणुअंवि तणुएइ(१२१) ॥

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते इति विशेषोक्तिः । एषु कविनिबद्धवक्तृप्रौढ़ोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः । एवं द्वादश भेदाः ।

शब्दार्थोभयभूरेकः(१२२)

---

(११८) आर्द्रार्द्रकरजरदनक्षतैस्तव नयनयोर्मम दत्तम् । रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते इति स० । प्रतिनायिकासंसर्गजनितनखक्षतादिचिह्नयुक्तं नायकं प्रति कुपितनायिकाया इयमुक्तिः ।

(११९) इतिप्रश्नोन्नयनादित्यर्थः ।

(१२०) कोपेन पुनरिमे नाक्रान्ते इत्यपह्नुत्यलङ्कारसहितेन ।

(१२१) महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती । अनुदिनमनन्यकर्म्मा अङ्गं तन्वपि तनयति इति स० ।

(१२२) प्राधान्येन व्यङ्ग्यार्थोपस्थापकपदानाम् अंशविशेषे परिवृत्तिसहत्वासहत्वाभ्यां शब्दार्थोभयशक्तिमूलत्वं ज्ञेयम् ।

Digitized by Google

यथा

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।
तारकातरला श्यामा सानन्दं न करोति कम्(१२३)॥

अत्रोपमा व्यङ्ग्या।

**भेदा अष्टादशाऽस्य(१२४) तत्॥४०॥**

अस्येति ध्वनेः।

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह

**रसादीनामनन्तत्वात् भेदएकोहि गण्यते।**

अनन्तत्वादिति, तथाहि, नव रसाः; तत्र शृङ्गारस्य द्वौ भेदौ, सम्भोगो विप्रलम्भश्च; सम्भोगस्याऽपि परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्य्यास्तमयचन्द्रोदयषड़ृतुवर्णनादयो बहवो भेदाः; विप्रलम्भस्याभिलाषादय उक्ताः; तयोरपि विभावानुभावव्यभिचारिवैचित्र्यं; तत्रापि नायकयोः(१२५)उत्तममध्यमाधमप्रकृतित्वम्; तत्रापि देश-

(१२३) अत्र अतन्द्रचन्द्राभरणेत्यादिशब्दस्य परिवृत्त्यसहत्वात् समुद्दीपितेत्यादेश्च तत्सहत्वात् यथोक्तोदाहरणत्वम्।

(१२४) अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यासंलक्ष्यक्रमव्यङ्ग्यास्त्रयः; शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला द्वादश, उभयशक्त्युद्भवश्चैकइति संलक्ष्यक्रमव्यङ्ग्याः पञ्चदशइत्यष्टादश।

(१२५) नायिका च नायकश्चतयोः।

Digitized by Google

कालावस्थादिभेदा इत्येकस्यैव रसस्यानन्त्यं, का गणना त्वन्येषाम्। असंलक्ष्यक्रमत्वन्तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते।

**वाक्ये द्व्युत्थः**

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः।

**पदेऽप्यन्ये (१२६)।**

अपिशब्दाद्वाक्येऽपि। एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्या भारती भासते(१२७)। तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि।

यस्य मित्राणि मित्राणि, शत्रवः शत्रवस्तथा।
अनुकम्प्योऽनुकम्प्यश्च, स जातः स च जीवति॥[१]

---

(१२६) अन्ये सप्तदश भेदाः, एकस्यैव पदस्य परिवृत्तिसहत्वासहत्वयोरसंभवान्नोभयशक्तिमूलभेदस्य संभव इति भावः। अत्रेदं बोध्यं, यत्र एकस्यैव पदस्य प्राधान्येन व्यङ्ग्यार्थोपस्थितावानुगुण्यं अन्येषान्तु सहकारितामात्रं, तत्रैव पदनिष्ठत्वं, नानापदानां तथारूपत्वे तु वाक्यगतत्वमिति।

(१२७) ननु पदस्य व्यङ्ग्यार्थद्योतकत्वे पदार्थस्यैव चारुतया पदस्यैव वरं ध्वनित्वमास्तां नतु काव्यस्य, काव्यात्मकयोर्वाक्यतदर्थयोः चारुत्वाधायकत्वचारुत्वयोरभावात्, अत आह एकेति। भारती काव्यार्थस्वरूपव्यक्तव्यात्मिका वाणी। तेनायं फलितोऽर्थः, यदन्तर्गतेन पदेनद्योत्योऽतिशयितोऽर्थः चारुतया व्यज्यते तस्यैव ध्वनित्वमिति।

Digitized by Google

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनियन्त्रणत्वस्नेहपात्रत्वादिसंक्रमितवाच्याः(१२८)।

खलववहारा दीसन्ति दारुणा
जइवि तहवि धीराणम्।
हिअअवअस्सवहुमआ
ण ऊ ववसाआ विमुज्झन्ति(१२९)॥[२]

अत्र विमुह्यन्तीति

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते।

---

(१२८) नियन्त्रणत्वं कर्म्मप्रत्ययेण निःशेषम् शासनीयत्वम्, अनुकम्पास्यापकारे द्वेषोऽनुकम्पा, सदैवोपकार्य्योऽयमिति ज्ञानन्तु स्नेह इति महेश्वरः। अत्र हि मित्रादि प्रत्येकमेव पदं लक्षकं सत् नायकस्य उचितव्यवहारित्वादिकं प्रकाशयतीति यथोक्तोदाहरणत्वम्। त्वामस्मीत्यादौ तु व्यङ्ग्यार्थोपस्थितिः सर्व्वैरेव पदैरिति तत्र वाक्यप्रकाशत्वम्।

(१२९) खलव्यवहारा दृश्यन्ते दारुणा यद्यपि, तथापि धीराणाम्। हृदयवयस्यबहुमताः न खलु व्यवसाया विमुह्यन्तीतिसं। अत्र विमोहेन विरामो लक्ष्यते, तेन च दृष्टकार्य्यकारित्वं व्यङ्ग्यम्।

Digitized by Google

यथा वा

मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते ?
मानं धत्स्व ! धृतिं बधान ! ऋजुतां दूरे कुरु ! प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना,
नीचैः शंस ! हृदि स्थितोहि ननु मे प्राणेश्वरः श्रोष्यति ।।[३]

अत्र भीताननेति, एतेन हि नीचैःशंसनविधानस्य युक्तता गम्यते । भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते ।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ।।[४]

अत्र भीषणीयस्य भीमसेन उपमानम् ।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ? ।।[५]

काचित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति ।

सायं स्नानमुपासितं, मलयजेनाङ्गं समालेपितम्
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमन्त्रा गतिः ।[६]
आश्चर्य्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम् ।।

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु अधुनापदद्योत्यं व्यज्यते ।

तत्प्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ।।

चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया(१३०) मुक्तिं गताऽन्या गोपकन्यका ॥[७]

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम्, एवञ्च अशेषचयपदद्योत्ये अतिशयोक्ती(१३१) ॥

क्षणदाऽसावक्षणदा, वनमवनं, व्यसनमव्यसनम् ।
वत वीर! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्व्वम् ॥[८]

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन (१३२) विधिरपि त्वामनुवर्त्तत इति सर्व्वपद्योत्यं वस्तु ।

तुह वल्लहस्स गोसम्मि आसि
अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण
कुणइ वअणं महीसमुहम्(१३३) ॥(९)

---

(१३०) निरुच्छ्वासतया निरुद्धप्राणवायुतया 'नास्य प्राणाः समुत्क्रमन्ति, अत्रैव समवलीयन्ते' इतिश्रुतेर्मोक्षकाले निरुच्छ्वासत्वम् ।

(१३१) दुष्कृतसुकृतफलजनकत्वेन दुष्कृतसुकृततादात्म्येनाध्यवसिते वियोगचिन्तने प्रतीयेते इति अतिशयोक्ती व्यज्येते ।

(१३२) शब्दशक्तिमूलस्य क्षणदा अक्षणदेत्यादिविरोधस्य अङ्गेन उपपादकेन पराङ्मुखे त्वयीत्याद्यर्थान्तरन्यासेनेत्यर्थः ।

(१३३) तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् । इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् इति स० ।

Digitized by Google

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं, येन म्लानत्वमिति मिलानादिपदद्योत्यं काव्यलिङ्गम्। एष स्वतःसम्भवी व्यञ्जकः।

राइसु चन्दधवलासु ललिअमाप्फालिऊण जो चावं।
एकछत्तं विअ कुणइ भुअणरज्जं विअम्भन्तो(१२४) ॥ [१०]

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यते इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते।

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले।
दिशि निपतति यत्र सा च, तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ [११]

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः।

---

गोसम्मिशब्दो प्रभाते देशीति नागोजीभट्टादयः, महेश्वरस्तु गोसम्मीतिपदं गोशे इत्यनुद्य गौः शेते अस्मिन्निति योगेन प्रभातपरं वर्णयांचकार, प्राकृते लिङ्गानियमात् इलो इत्यस्य पुंस्त्वमित्यप्यवदत्।

(१२४) रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।
एकच्छत्रमिव करोति त्रिभुवनराज्यं विजृम्भमाण इति स०।



Digitized by Google

वारिज्जन्तोवि भणो
सन्तावकअत्थिएण हिअएण ।
थणहरवअस्सएण
विसुद्धजाइ ण चलइ से हारो(१३५) ।। [१२]

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति णचलइपदद्योत्यं वस्तु ।

सो मुद्धसामलङ्गो धम्मिल्लो
कलिअललिअणिअदेहो ।
तीए खंधाहि बलं गहिअ
सरोसुरअसङ्करे जअइ(१३६) ।। [१३]

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंधपदद्योत्या विभावना(१३७)। एष कविप्रौढ़ोक्तिमात्रनिष्पन्नशरीरः ।

---

(१३५) वार्य्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन। स्तनभरवयस्यत्वेन विशुद्धजातिर्न चलत्यस्या हारइति स० ।

(१३६) स मुग्धश्यामलाङ्गोधम्मिल्लः कलितललितनिजदेहः । तस्या स्कन्दाद्बलं गृहीत्वा स्मरः सुरतसङ्करे जयतीति स० ।

(१३७) विभावनेति प्रकाश्यते इति शेषः, अत्रैव रूपकेणेत्यस्यान्वयः । अयंभावः, रत्यनिष्पत्तिरूपाभिलाषहेत्वभावे-

णवपुण्णिमामिअङ्कस्स
सुहअ! कोत्तंसि?- भणसु सच्चं।
का सोहग्गसमग्गा
पओसरअणिव्व तुह अज्ज?(१३८)॥ [१४]

अत वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न ततइति णवेत्यादिपओसेत्यादिपदद्योत्यं(१३९) वस्तु व्यज्यते।

सहि! णवणिहुवणसमरम्मि
अङ्कवालीसहीए णिविड़ाए।
हारो णिवारिओ विअ
उच्छेरन्तो तदा कहं रमिअं(१४०)॥ [१५]

---

ऽपि अभिलाषोदयात् विभावना, रतिनिष्पत्तिश्च खंधपदेनैव द्योतिता, आकर्षणेन हि धम्मिल्लस्य स्तम्भप्राप्तेः प्रायशो रतिनिष्पत्तिं विनाऽसम्भवादिति।

(१३८) नवपूर्णिमामृगाङ्कस्य सुभग! कस्त्वमसि?- भण सत्यम्। का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्येति स०।

(१३९) अत्रायं विभागः, णवेत्यनेन प्रथममनुरक्तस्त्वमिति, पओसेत्यनेन तु न तत इति व्यज्यते।

(१४०) सखि नवनिधुवनसमरे अङ्कपालीसख्या निविड़या। हारो निवारित एव उच्छ्रियमाणस्ततः कथं रमितमिति स०। निधुवनं सुरतं, अङ्कपाली आलिङ्गनम्। उच्छ्रियमाणः द्वयोस्तृतीयतयाऽधिको भवन्निति नागोजीभट्टादयः।

Digitized by Google

अत्र वस्तुना व्यापारच्छेदादनन्तरमन्यदेव रतमवश्यमभूत्, तत्कथय कीदृगिति व्यतिरेकः कहंपदगम्यः(१४१) ।

पविसन्ती घरवारं
विवलिअवअणा विलोइऊण पहं ।
खन्धे घेतूण घडं
हाहा णट्ठोत्ति रुअसि सहि ! किन्ति ? (१४२) ॥

अत्र हेत्वलङ्कारेण सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुं इच्छसि, तदा अपरं घटं गृहीत्वा गच्छेतिवस्तु किन्ति-पदद्योत्यम्(१४३) । यथावा

विहलंखलं तुमं सहि !
दिट्ठूण कुडेण तरलतरदिट्ठिं ।
वारप्फंसमिसेण
अप्पा गुरुओत्ति पाडिअ विभिण्णो(१४४) ॥ [१६]

---

(१४१) कहंपदेन जिज्ञासाऽवगम्यते, जिज्ञासा च प्रसिद्धस्य नोदेतीति तद्विलक्षणैवेयं रतिर्जातेति जिज्ञासया व्यज्यतइति भावः ।

(१४२) प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पुनः पन्थानम् । स्कन्धे गृहीत्वा घटं हाहा नष्टइति रोदिषि सखि ! किमिति इति स० ।

(१४३) व्यज्यते इतिशेषः, अत्रैव हेत्वलङ्कारेणेत्यस्यान्वयः ।

(१४४) विशृङ्खलां त्वां सखि ! दृष्ट्वा कुटेन तरलतरदृष्टिम् । द्वारस्पर्शमिषेण आत्मा गुरुकइति पातयित्वा विभिन्न इति स० । कुडेन घटेन ।

Digitized by Google

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्व्वं व्याकुलया त्वया घटः स्फोटित इति मया चिन्तितम्, तत्किमिति नाश्वसिषि? तत्समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्व्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु (१४५)।

जोह्लाइ मङ्करसेण अ
विइस्णतारुस्सउत्सुअमणा सा।
वुड्ढावि णवोढ़ व्व
परवह्न अहह हरइ तुह हिअअं(१४६)॥ [१७]

अत्र काव्यलिङ्गेन(१४७) दृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवधूपदप्रकाश्यः। एषु कविनिबद्धवक्तृप्रौढ़ोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाशे तु पूर्व्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भववस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः।

---

(१४५) वारप्फंसमिसेनेतिपदद्योत्यमिति प्रदीपप्रभा। सखीतिपदद्योत्यमिति माहेश्वरमतम्।

(१४६) ज्योत्स्नया मधुरसेन च वितीर्णतारुण्यौत्सुकमनाः सा। वृद्धाऽपि नवोढ़ेव परवधूरहह हरति तव हृदयमिति स०।

(१४७) परवधूत्वेनैव ते चित्तहरणमिति हेत्वलङ्कारेण आक्षेपालङ्कारो व्यज्यते इत्यर्थः।

प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४१ ॥

यथा गृध्रगोमायुसंवादादौ

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्व्वप्राणिभयङ्करे ।
न चेह जीवितः कश्चित् कालधर्म्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः, प्राणिनां गतिरीदृशी ॥

इति दिवाप्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं (१४८) वचनम् ।

आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठञ्च (१४९)वचनमिति प्रबन्धएव प्रथते । अन्ये त्वेकादशभेदा ग्रन्थविस्तरभयान्नोदाहृताः, स्वयन्तु लक्षणतोऽनुसर्त्तव्याः । अपिशब्दात्पदवाक्ययोः ।

---

(१४८) पुरुषस्य मृतसम्बन्धिजनस्य, विसर्जनं श्मशानतोऽपसारणम्, गृहं प्रतिनिवर्त्तनमिति फलितोऽर्थः ।

(१४९) जनस्य मृतात्मीयजनस्य, व्यावर्त्तनं श्मशानपरित्यागात् निवर्त्तनं, तन्निष्ठं तत्तात्पर्य्यकम् ।

Digitized by Google

पदैकदेशरचनावर्णेष्वपि रसादयः(१५०) ।

तत्र प्रकृत्या यथा ।

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तईअणअणं पव्वईपरिचुंविअं जअइ(१५१) ॥

अत्र जयतीति नतु शोभत इत्यादि(१५२), समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापाररूपेणास्य पिधानमिति तदेवोत्कृष्टं ।

---

(१५०) पदानां तिङ्सुबन्तरूपाणां एकदेशेषु प्रकृतिप्रत्ययोपसर्गरूपांशत्रयेषु, रचनासु दीर्घसमासादिरूपविन्यासविशेषेषु, वर्णेषु अक्षरविशेषेषुच, रसादयः असंलक्ष्यक्रमव्यङ्ग्याः सम्भवन्तीत्यर्थः ।

(१५१) रतिकेलिहृतनिवसनाकरकिसलयरुद्धनयनयुगलस्य । रुद्रस्य तृतीयनयनं पार्व्वतीपरिचुम्बितं जयतीति सं० । प्राकृते समासेन निवसनेत्यस्य ह्रस्वः ।

(१५२) उक्तमिति शेषः, समाने करकृतनयनपिधानतुल्ये, स्थगनव्यापारे तृतीयनयनपिधानक्रियायां, लोकोत्तरेण अलौकिकेन चुम्बनात्मकेन, अस्य तृतीयनयनस्य । अयम्भावः, जयत्यर्थेन उत्कर्षोऽवगम्यते तृतीयनयनस्य उत्कर्षश्च उत्कृष्टपिधानवत्तया, पिधानस्योत्कर्षश्च चुम्बनरूपालौकिककरणकतया, चुम्बनेन पिधानन्तु रसोत्कर्षादेव भवतीति जिधातुरेव रसोत्कर्षप्रतीतेः प्रयोजकइति, शोभते इत्युक्तौ तु उत्कर्षकारणचिन्तानुदयेन वाच्यार्थएव विश्रान्तिः ; इह तु सहृदयहृदयमेव प्रमाणम् ।

Digitized by Google

यथा वा

प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया,
द्वित्राख्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः।
तावत्प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥

अत्र पदानीति नतु द्वाराणीति(१५३)।

तिङ्सुपोर्यथा

पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां,
दिशि दिशि पवमानोवीरुधां लासकश्च।
नरि नरि किरति द्राक्सायकान्पुष्पधन्वा,
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा॥

अत्र किरतीति किरणस्य साध्यमानत्वं, निवृत्तेति निवर्त्त-नस्य सिद्धत्वं तिङा सुपा च, तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते।

यथा वा

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः,
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्व्वं हसितपठितं पञ्जरशुकैः
तवावस्था चेयं, विसृज कठिने! मानमधुना॥

---

(१५३) उक्तानीति शेषः, एवमग्रेऽपि, द्वारादिपदमपहाय पदपदग्रहणात् द्वारपर्य्यन्तगमनासहिष्णुतया उत्कण्ठाति-शयोव्यज्यते। अत्र नामप्रकृतिगम्यत्वम्।

Digitized by Google

अत्र लिखन्निति न तु लिखतीति; तथा आस्तइति न तु आसीदिति, अपितु प्रसादपर्य्यन्तमास्तइति; भूमिमिति नतु भूमाविति; नहि बुद्धिपूर्व्वकमपरं किञ्चिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् (१५४)।

गामरुहम्मि गामे वसामि णअरट्ठिइं ण जाणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि(१५५)॥

अत्र नागरिकाणामिति षष्ठ्याः(१५६)।

---

(१५४) अयम्भावः, लिखन्नितिशत्रा लिखनक्रियाया अप्राधान्यावगमात् अतात्पर्य्यविषयत्वेन अबुद्धिपूर्व्वकत्वम् ध्वनितम्, आस्ते इति प्रारब्धापरिसमाप्तिपर्य्यन्ततावोधकवर्त्तमानतिङाऽवस्थानस्य प्रसादपर्य्यन्तताला भः, एवं भूमिमिति द्वितीयाविभक्त्याऽधिकरणस्य कर्म्मत्वप्रतीतेः लेखनीयमपरं कर्म्मान्तरं नास्तीति प्रतीयते, एतेनापि च मोहातिशयो व्यज्यते इति। अत्र तिङ्सुपोः प्रस्तावे लिखन्नितिशतृप्रत्ययवैशिष्ट्यप्रदर्शनं प्रासङ्गिकमिति न दोषः।

(१५५) ग्रामरुहास्मि ग्रामे वसामि नगरस्थितिं न जानामि। नागरिकाणां पतीन् हरामि या भवामि सा भवामीति स०। कलहे का त्वमस्मदग्रे इत्यधिक्षिपन्तीं नागरिकां प्रति ग्रामीणाया इयमुक्तिः।

(१५६) नागरिकानित्यपहाय नागरिकाणाम्पतीनिति उक्तम्; तेन च सम्बन्धषष्ठ्या तत्सम्बन्धेन पतिषु चातुर्य्यातिशयो द्योत्यते, तेन च तस्मादपि स्वस्यातिचातुर्य्यं व्यङ्ग्यम्। अत्र 'नागरिकाणामित्यनादरे षष्ठी, ता अनादृत्य' इत्यर्थं वर्णयन्ति बहवः।



Digitized by Google

रमणीयः चत्रियकुमार आसीदिति कालस्य, एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः (१५७)।

वचनस्य यथा

ताणं गुणग्गहणाणं ताणं उक्कंठाणं तस्स पेम्मस्स ।
ताणं भणिआणं सुन्दर ! एरिसिअं जाअमवसाणं(१५८) ।।

अत्र गुणग्रहणादीनां बहुत्वं,प्रेम्नश्चैकत्वं द्योत्यते(१५९)।

पुरुषव्यत्ययस्य यथा

रेरे चञ्चललोचनाञ्चितरुचे ! चेतः ! प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि? ।
किं मन्ये विहरिष्यसे? बत हतां मुञ्चान्तराशामिमाम्,
एषा कण्ठतटे कृता खलु शिला संसारवारां निधौ(१६०) ।।

---

(१५७) आसीदित्यतीतकालबोधकलङ्, मत्क्रोधकवलितस्यास्य रमणीयत्वमतीतं न तु वर्त्तमानं भविष्यद्वेति व्यज्यते, तेन चणादेनं संहरामीतिप्रतीत्या क्रोधातिशयो व्यङ्ग्यः ।

(१५८) तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः। तासां भणितीनां सुन्दर! ईदृशं जातमवसानमिति स० ।

(१५९) बहुत्वं बहुविधत्वम् एकत्वम् एकविधत्वम्। तथाच गुणग्रहणादीनां प्रेमहेतूनां बहुविधत्वेऽपि कार्य्यं प्रेमैकजातीयमेव न कदाचिदन्यथाभावं प्राप्तमिति बहुवचनैकवचनाभ्यां व्यज्यते इति प्रदीपः ।

(१६०) स्थिरम् प्रेम यत्र, तादृशम् महिमानम् विषयानास-

Digitized by Google

अत्र प्रहासः(१६१)।

पूर्वनिपातस्य यथा

येषां दोर्बलमेव, दुर्बलतया ते सम्मताः; तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्य्यं किमुर्व्वीश्वरैः?।
ये क्ष्माशक्र! पुनः पराक्रमनयस्वीकारकान्तक्रमाः,
ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते (१६२)।

विभक्तिविशेषस्य यथा

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।
दिवसेन तु नरप! भवानयुद्ध विधिसिद्धसाधुवादपदम्॥

अत्र दिवसेनेत्यपवर्गे तृतीया फलप्राप्तिं द्योतयति (१६३)।

---

ख्यादिजनितसुत्कर्षं, अन्तराशां अन्तर्व्विद्यमानामाशां, एषा स्त्री, आशा वा।

(१६१) अयं भावः, 'त्वं मन्ये विहरिष्ये' इत्यस्य अहं विहरिष्ये इति किं त्वं मन्यसे? इत्यर्थः, अत्र 'प्रहासे च मन्योपपदे मन्यते-रुत्तम एकवच्च' इति(१।४।१०६)सूत्रेण युष्मदस्मदोर्योगे उत्तम-मध्यमयोर्व्विपर्य्ययेण विधानं, तेन च प्रहासोऽभिव्यक्त इति।

(१६२) पराक्रमनयेत्यत्र अल्पाचोऽपि नयपदात् पराक्रम-पदस्य 'अभ्यर्हितञ्च' इति (१।२।३४) सूत्रवार्त्तिकेण पूर्व्वनि-पातः पराक्रमस्य प्राधान्यरूपमभ्यर्हितत्वं द्योतयति।

(१६३) 'अपवर्गे तृतीया' (२।३।६ सू०) इति सूत्रेण फलप्राप्तौ द्योत्यायामेव तृतीयाविधानात्। अत्र दिवस-मिति द्वितीयाविभक्तिरपि रिपूणां फलाप्राप्तिं सूचयति।

Digitized by Google

भूयोभूयः सविधनगरीरथ्यया पर्य्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यत्
गाढ़ोत्कण्ठाललितलुलितैरङ्गकैस्ताम्यतीति (१६४) ।

अत्र अनुकम्पावृत्तेः कप्रत्ययतद्धितस्य (१६५) ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जड़यति च तापञ्च कुरुते ।।

अत्र प्रशब्दस्योपसर्गस्य ।

कृतञ्च गर्वाभिमुखं मनस्त्वया,
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ।।

---

(१६४) इतीति, इति यत् तत् लवङ्गिकया कथितमिति चूर्णकेणान्वयः । भवनवलभी भवनोपरिनिर्ज्जनमण्डपः, सौधचूड़ा वा इति बहवः, गृहाच्छादनवक्रदारुइति तु नागोजीभट्टाः । लुलितं खिन्नं कम्पितं वा ।

(१६५) अनुकम्पावृत्तेः अनुकम्पाद्योतस्य, अङ्गकैरित्यत्र 'अनुकम्पायां' (५।३।७३) इति सूत्रेण विहितात् कप्रत्ययादनुकम्पातिशयोव्यज्यते ।

Digitized by Google

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य (१६६)।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्
अस्मद्भाग्यविपर्ययाद्यदिपरं (१६७) देवो न जानाति तम्।
वन्दीवैष यशांसि गायति मरुद्यस्यैकवाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्व्वनाम-प्रातिपदिकवचनानां (१६८); न त्वदिति न मदिति अपि तु अस्मादिति (१६९) अस्य सर्वाक्षेपिणः; भाग्यविपर्य्ययादित्य-न्यथासम्पत्तिमुखेन (१७०), नत्वभावमुखेनाभिधानस्य।

---

(१६६) चकारेण मनोगर्व्वाभिमुखीकरणारिहननयोः प्राकरणिकयोरेककालत्वलक्षणैकधर्म्मसम्बन्धात् तुल्ययोगितेति प्राचीनमतेनेदम्। चेतिनिपातरूपप्रातिपादिकमात्रस्यैव व्य-ञ्जकत्वं, न तु प्रत्ययसहकृतस्य तस्येति पदैकदेशतेति निद-र्शनकृन्निदर्शनम्। प्रदीपकारादयस्तु तुल्ययोगितापदं समुच्चयपरमिति, चकारस्य पदैकदेशत्वाभावेऽपि केवलस्य तस्याप्रयोगात् पदैकदेशत्वोपचार इति च व्याचक्रुः।

(१६७) यदिपरंशब्दोऽवधारणार्थो निपातः।

(१६८) व्यञ्जकत्वमिति शेषः, एवं सर्व्वत्र। भुवनेषु न तु देशेषु भुवने वा; गुणैः न तु दोषैः गुणेन वेति उभयत्रैव प्रातिपादिकवचनयोर्व्यञ्जकत्वम्।

(१६९) उक्तमिति शेषः। 'अस्य' बहुवचनान्तास्मच्छब्द-घटितसमासांशस्य अहतमदाद्यादेशस्यास्मादित्यस्य, सर्व्वाक्षेपिणः समस्तरक्षःकुलोपस्थापकस्य।

(१७०) अस्य च 'अभिधानस्य' इत्यग्रिमेणान्वयः, अ-

Digitized by Google

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य; तरुणत्वइति-धनुषःसमीपइति-मौलौ वसतीति त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी, स एव व्यञ्जकत्वं प्राप्नोति (१७१)। एवमन्येषामपि बोद्धव्यम्।

वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते।

अपिशब्दात् (१७२) प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्व्वगणितभेदाभ्यां (१७३) सह षड् भेदाः।

---

न्यथासम्पत्तिः दुर्भाग्यरूपेण परिणमनम्, अभावमुखेन अभाग्यादितिरीत्या; तथाच अस्माकं भाग्यं नास्तीति न, परन्तु येनैव भवद्भ्रातृत्वाद्यनुबन्धिना भाग्येन आजन्मसुखिनो वयं, तदेव अधुना दुःखफलदमस्माकमिति ध्वनितम्।

(१७१) इमनिजा तद्धितेन सुकुमाराक्षरेण तादृशमेव नवं वयः प्रतीयते, 'तरुणत्वे' इत्युक्तौ तु त्वप्रत्ययस्य प्रौढ़ाक्षरतया वयसोऽपि प्रौढ़त्वं प्रतीयेत। अनुमदनधनुरिति पूर्व्वपदार्थप्रधानाव्ययीभावेन उत्तरपदार्थीभूतधनुषोऽप्राधान्यं प्रकाशयता तन्निरपेक्षवशीकरणसामर्थ्यं भ्रूलतायाः प्रत्याय्यते; तथा मौलिमितिकर्म्मप्रत्ययेन कर्म्मीभूतसकलललनामौलिव्याप्तिसूचनद्वारा सौन्दर्य्यातिशयो व्यज्यतेइति।

(१७२) 'वर्णेष्वपि'-इत्यपिशब्दात्।

(१७३) पदवाक्यप्रकाशाभ्यामित्यर्थः। पद-वाक्य-पदैकदेश

Digitized by Google

**भेदास्तदेकपञ्चाशत्**

व्याख्याताः (१७४)।

**तेषां चान्योन्ययोजनम्॥ ४२॥**

**सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।**

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति, यावत्तेषां स्वप्रभेदैरेकपञ्चाशता (संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति) त्रिविधेन सङ्करेण, परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने (१७५)

---

रचना-वर्ण-प्रबन्ध-प्रकाश्यतया षड्भेदोरसादिरित्यर्थः।

(१७४) व्याख्याताः व्याख्यातप्रायाः, तथाहि अविवक्षितवाच्यस्य अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यतया द्वौ भेदौ, तौ च पदवाक्ययोरिति चत्वारः; विवक्षितान्यपरवाच्येषु असंलक्ष्यक्रमव्यङ्ग्यस्य उक्तरीत्या षट्; संलक्ष्यक्रमव्यङ्ग्यस्य तु एकचत्वारिंशत् भेदाः, (शब्दशक्तिमूलस्य द्वौ भेदौ, तौच पदवाक्ययोरिति चत्वारः; अर्थशक्त्युद्भवस्य द्वादश भेदाः प्रत्येकं पदवाक्यप्रबन्धगताइति षट्त्रिंशत्; उभयशक्त्युद्भवस्त्वेक इति एकचत्वारिंशत्) इति मिलित्वा शुद्धस्य ध्वनेरेकपञ्चाशत् भेदाः।

(१७५) तेषां एकपञ्चाशतो भेदानां, स्वप्रभेदैरेकपञ्चाशता चतुर्भिर्गुणने इत्यन्वयः। साक्षात् परम्परया वा यथाकथञ्चित् परस्परसापेक्षः संयोगः संकरः, तद्भिन्नः स संसृष्टिः। संकरस्थले हि क्वचित् साधकबाधकमानाभावादेकतरानवधारणेन अयं अयं वा इति भवति संशयः, क्वचित्तु स्वत एवोपादेयतया प्रधानयोरपि एकस्य कथञ्चिदपरानु-

वेदखाब्धिवियच्चन्द्राः [१०४०४] १(७६)

शुद्धभेदैः सह

---

गुणप्रमात्रेण अङ्गाङ्गिभावापरनामकानुग्राह्यानुग्राहकभावः, क्वचित्तु एकव्यञ्जकव्यञ्जकतया एकाश्रयानुप्रवेशइति संकरस्य त्रैविध्यम्। इदमवधेयं, प्रधानव्यङ्ग्ययोः संसृष्टिसंकराभ्यामेव ध्वनेस्तथात्वाभावेऽपि तथात्वव्यपदेशइति एतत् सर्व्वं उदाहरणेन स्फुटीभविष्यति।

(१७६) 'अङ्कस्य वामतो गतिः' इतिनियमेन चतुरुत्तरचतुःशताधिकायुतपरिमिताः(१०४०४) भेदाः सम्पद्यन्तेइत्यर्थः, तथाहि एकपञ्चाशतो भेदानां एकपञ्चाशता गुणने एकाधिकषट्शतोत्तरसहस्रद्वयं (२६०१) भवति, योजनञ्च संसृष्ट्यादिचतुःप्रकारैरिति तावतां चतुर्भिर्गुणने यथोक्तसंख्या (१०४०४) सम्पद्यते। एकस्मिन्नपि श्लोके एकविधध्वनिद्वयसम्भवेन स्वस्य स्वेन योजनं नासम्भवि। अत्र "अत्रार्वाचीनाः, [गणनेयमयुक्ता, अग्रिमाग्रिमभेदस्य योजने एकैकभेदह्रासात्, तथाहि अर्थान्तरसंक्रमितवाच्यस्य अत्यन्ततिरस्कृतवाच्येन योजने यो भेदः सएव अत्यन्ततिरस्कृतवाच्यस्यार्थान्तरसंक्रमितवाच्येन योजनायाम्, एवमन्यत्रापि, तस्मात् 'एकोराशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु। समार्द्धेनासमोगुण्यः, एतत् संकलितं लघु' इत्युक्तदिशा द्विपञ्चाशदर्द्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्, तथाच रसपच्चाग्निभेदिन्यइति त्रयोदशशतानि षड्विंशत्यधिकानि (१३२६) जायन्ते, योगश्चतुःप्रकारइति तेषु चतुर्भिर्गुणितेषु वेदाभ्रदहनेषवइति पञ्चसहस्राणि चतुरधिकं शतत्रयं (५३०४) संकीर्णभेदाः इत्येव

शरेषुयुगखेन्दवः (१०४५५) ॥ ४२ ॥

तत्र दिङ्मात्रमुदाह्रियते

खणपाहुणिआ देअर! जाआए सुहअ! किं पि दे भणिआ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई (१७७)॥

---

ज्यायः इति वदन्ति। अत्र ब्रूमः, अनुभवसिद्धौ तावत् पुण्ड्रकेक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिशयानतिशयौ, तथा चार्थान्तरसङ्क्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृत-वाच्येन तद्योजना, यत्र तु तद्वैपरीत्यं, तत्रात्यन्ततिरस्कृत-वाच्यस्येतरेण योजनमिति व्यपदेशः, एवमन्यत्राप्यूह्यम्, एतदेव प्राधान्यमादाय गणना सौत्री। नन्वेवं यत्रोभयो-स्तुल्यमेव चारुत्वं, तस्य भेदान्तरत्वं स्यादिति, मैवं, अप-कर्षाभावस्यातिशयपदेन स्वीकारात्, तत्रोभयभेदसङ्करस्वी-कारात्। एतादृशे चास्थाने पदालम्बनमेव महत् पौरुष-मिति सहृदयभावमास्थायालोचनीयमिति" इति प्रदीप-प्रभया सुतरामेव दर्पणमालिन्यमजनि। अत्र "पदैकदेश-पदवाक्यमहावाक्यानामेकव्यङ्ग्यस्यान्यतरेणाव्यञ्जनात् कथं तेषामेकव्यञ्जकानुप्रवेशः? इत्येतावताऽपि बहुतरहासः" इति-महेश्वराक्षेपस्येदं समाधानम्,—'एकव्यञ्जकानुप्रवेशः' इत्यत्र व्यञ्जकत्वं व्यञ्जने यथाकथञ्चिदानुगुण्यमित्यवश्यमङ्गीकार्य्यम्, अतएव रामोऽस्मीत्यादौ लक्ष्यार्थस्य व्यञ्जकतायां सहकारि-तामात्रेणैव रामपदं व्यञ्जकमिति वक्ष्यति, एवञ्च वाक्य-व्यङ्ग्येऽपि तदेकदेशपदादेः सहकारितारूपेण व्यञ्जकतया, यत्र वाक्यतदेकदेशपदयोर्द्वयोरेव 'व्यङ्ग्यद्वयमस्ति, तत्रैव तत्-पदरूपैकव्यञ्जकानुप्रवेशः सम्भवति, इत्यलम्॥

(१७७) क्षणप्राघुणिका देवर! जायया सुभग!

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे सङ्क्रमितः, किमनुरणनन्यायेनोपभोगे एव व्यङ्ग्ये व्यञ्जकः ? इति सन्देहः (१७८)।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः,
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु, दृढं कठोरहृदयो रामोऽस्मि, सर्वं सहे, (क्रिया)
वैदेही तु कथं भविष्यति, हहा हा देवि ! धीरा भव ॥

अत्र लिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः (१७९)। ताभ्यां सह रामोऽस्मीत्यर्थान्तरसङ्क्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन (१८०) रामपदलक्षणै-

---

किमपि ते भणिता । रोदिति गृहपश्चात्भागवलभीगृहेऽनुनीयतां वराकीति सं०। क्षणे उत्सवे, प्राघुणिका निमन्त्रणेन समागता । पडोहरव्दो गृहपश्चात्भागे देशीति बहवः ।

(१७८) तथाचात्र व्यङ्ग्यसन्देहेनैतन्मूलक एवाविवक्षितवाच्यध्वनिविवक्षितान्यपरवाच्यध्वन्योरपिः सन्देहसङ्करः ।

(१७९) द्रवद्रव्यसंयोगविशेषस्य लेपनस्य अमूर्त्ते वियति कान्त्याऽसम्भवात्, अचेतने तु मेघे चित्तवृत्तिविशेषस्य सौहृदस्यासम्भवाच्च लेपनं व्यापने, सौहृदञ्च केकाद्यनुबन्धित्वेऽत्यन्ततिरस्कृतम्, अत्र च लक्ष्यार्थयोरातिशय्ये व्यङ्ग्ये, तयोश्च परस्परं निरपेक्षतयाऽवस्थानात् संसृष्टिः, तन्मूलकैव ध्वन्योरपि संसृष्टिः ।

(१८०) ताभ्यां अत्यन्ततिरस्कृतवाच्यध्वनिभ्यां सह अर्थान्तरसङ्क्रमितवाच्यध्वनेरनुग्राह्यानुग्राहकभावेन सङ्कर इत्यन्वयः, तथाहि रामपदस्य सकलदुःखपात्रतया प्रसिद्धरूपोऽर्थो लक्ष्यः, तेन च रामस्य स्वावधीरणं व्यङ्ग्यं, तदानीं तस्य

Digitized by Google

व्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः (१८१) सङ्करः । एवमन्यदप्युदाहार्य्यम् ।।

इतिकाव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थ उल्लासः ।।

---

स्वावधीरणं तु लिप्तपदसुहृत्पदव्यङ्ग्ययोः मेघस्याकाशव्यापनकेकाद्यनुबन्धित्वातिशय्ययोरुद्दीपकयोः प्रयोज्यमेवेति तयोरनुग्राहकत्वं, स्वावधीरणस्य तु अनुग्राह्यत्वमिति व्यङ्ग्याभ्यां व्यङ्ग्यस्य उक्तरूपसङ्करमूलक एव ध्वनिभ्यां ध्वनेस्तद्व्यपदेशः ।

(१८१) उक्तरूपेण स्वावधीरणमिव विप्रलम्भस्यापि कथञ्चित् रामपदव्यङ्ग्यत्वात्, वाक्यव्यङ्ग्यस्य विप्रलम्भस्य तदेकदेशरामपदव्यङ्ग्यत्वानपायाद्वा व्यङ्ग्ययोः स्वावधीरणविप्रलम्भरसयोः रामपदरूपैकव्यञ्जकानुप्रवेशरूपः संकरोऽस्तीति तन्मूलको ध्वन्योरपि तथाव्यपदेशः ।



Digitized by Google

## ॥ पञ्चम उल्लासः ॥



एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ १ ॥**
**व्यङ्ग्यमेवं (१) गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।**

कामिनीकुचकलशवत् गूढं चमत्करोति, अगूढन्तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।

अगूढं यथा

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचिव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि ! (२) ॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य (३) ।

---

(१) एवं एतेन कारणेन ।

(२) बृहन्नलारूपेणावस्थितस्यार्ज्जुनस्याक्षेपोक्तिरियम् । मया कृता तिरस्कृतिः पराभवो यस्य सः । शरणागतस्य रिपोः तप्तलौहशलाकया कर्णवेधो देशाचारसिद्ध इत्युदाहरणचन्द्रिकादयः सर्व्वे ।

(३) व्यङ्ग्यं अगूढमित्यन्वयः, एवं परत्र । अत्र जीवनं अभिमतकार्य्याक्षमत्वेनाप्रशस्तजीवनं लक्षयति, तेन च मरणमेव श्रेयः इति व्यङ्ग्यमसहृदयैरपि गम्यमिति ।

Digitized by Google

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु।
एतच्चकास्ति च,रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम्॥

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य (४)।

अत्रासीत् फणिपाशबन्धनविधिः, शक्त्या भवद्देवरे
गाढ़ं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः,
केनाप्यत्र मृगाक्षि! राक्षसपतेः कृत्ता च कण्ठाटवी॥ [१]

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य। 'तस्याप्यत्र' इति युक्तः पाठः (५)।

'अपरस्य' रसादेर्वाच्यस्य वा (वाक्यार्थीभूतस्य) अङ्गं रसादि अनुरणनरूपं वा (६)

(४) अत्र चुम्बतिर्वक्त्रसंयोगरूपे मुख्यार्थे सबाधः सन् संयोगत्वरूपेण उदयाचलसूर्य्यबिम्बसंयोगं लक्षयन् प्रभातं वाच्यवत् प्रकाशयति। संयोगत्वसामान्यरूपेणापि वक्त्रसंयोगरूपमुख्यार्थस्यान्वयाप्रवेशात् अत्यन्ततिरस्कृतवाच्यत्वम्।

(५) अत्रानुनायकोपनायकप्रतिनायकेषु निर्द्दिष्टेषु, चतुर्थवाक्ये नायको राम एवार्थशक्त्या प्रतीयते, स च 'केनापि' इत्युपादानेन वाच्यायमानतयाऽगूढ़ः कृतः, तस्याप्यत्रेति पाठे गूढ़तया ध्वनित्वमव्याहतमेवेति प्रदीपः।

(६) वाक्यार्थीभूतस्य वाक्यतात्पर्य्यविषयतया प्रधानस्य, निष्पन्नरसभावस्य अङ्गत्वाभावात् रसपदं स्थायिभावपरम्। अत्र यथासंख्यान्वयस्तु प्रमाणशून्यतया उपेक्ष्यः, उदात्तालङ्कारोदाहरणे "नात्र वीरो रवः,

Digitized by Google

अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र शृङ्गारः करुणस्य ।

कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्द्धाबन्धसमृद्धयेव सुदृढ़ं रूढ़ा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्य्यते (७) ॥

अत्र भावस्य रसः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः, स्फारास्तथाम्भोधयः,
तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्य्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवः,
तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

वन्दीकृत्य नृप! द्विषां मृगदृशस्ताः पश्यतां प्रेयसाम्,
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे!
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे (८) ॥

---

तस्येहाङ्गत्वात्" इति वदता ग्रन्थकृतैव रसादेर्वाच्याङ्गतायाः स्वीकृतत्वेन तस्यात्रानन्तर्भावे पृथक्प्रभेदत्वापत्तिः ।

(७) प्रणतिपरे भगवति भवे भवान्या मानभङ्गेन नेत्रारुण्यनाशवर्णनमिदम् ।

(८) प्रेयसामिति अनादरे षष्ठी । लान्ति गृह्णन्ति ।

अत्र भावस्य रसाभासभावाभासौ (९) प्रथमद्वितीयार्द्ध-
द्योत्यौ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः, स गतः क्वापि तवेक्षणे क्षणात्॥

अत्र भावस्य भावप्रशमः (१०)।

सार्कं कुरङ्गकदृशा मधुपानलीलां
कर्त्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते।
अन्याभिधायि तव नाम विभो! गृहीतं
केनापि तत्र विषमामकरोदवस्थाम्॥

अत्र त्रासोदयः।

असोढ़ा तत्कालोल्लसदसहभावस्य तपसः,
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः।
प्रमोदं वो दिश्यात्कपटवटुवेशापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः॥

अत्रावेगधैर्य्ययोः सन्धिः।

पश्येत्कश्चित् चल चपल रे! का त्वराऽहं कुमारी,
हस्तालम्बं वितर, ह्हहा, व्युत्क्रमः, क्वासि यासि।
इत्थं पृथ्वीपरिवृढ़! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कश्चित् फलकिसलयान्याददानाऽभिधत्ते॥

---

(९) प्रथमार्द्धे शृङ्गारोऽननुरक्तविषयकतया, द्वितीयार्द्धे तु रतिरूपो भावः शत्रुविषयकतया आभासः।

(१०) वैरिणोगर्व्वरूपोभावस्तस्य प्रशमः राजविषयकरतिभावेऽङ्गम्।

Digitized by Google

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता।

एते च रसवदाद्यलङ्काराः (११) ; यद्यपि भावोदयभावसन्धिभावशबलत्वानि नालङ्कारतयोक्तानि (१२), तथापि कश्चित् (१३) ब्रूयादित्येवमुक्तम्। यद्यपि स नास्ति कश्चिद्विषयः, यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति, तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद्व्यवहारः (१४)।।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया,
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्त्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं, कुशलवसुता न त्वधिगता (१५)।।

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः (१६) ।।

---

(११) एते गुणीभूता रसादयः, गुणीभूतोरसो रसवत्, भावस्तु प्रेयः, रसाभासभावाभासौ ऊर्ज्जस्वि, भावशान्त्यादिः समाहित इति।

(१२) व्यक्तिविवेककृद्भिः।

(१३) ध्वनिकारः।

(१४) प्राधान्यञ्च अतिशयितचमत्कृतिमत्तया ; तथाच अङ्गीभूतरसादीनां चमत्कृत्यातिशय्ये गुणीभूतव्यङ्ग्यत्वं, अङ्गित्वस्थाले ध्वनित्वमिति।

(१५) कनकविषये मृगतृष्णा, देहीतिवचः, भर्त्तुः पालकस्य परिपाटीषु सेवारचनासु का घटना आयासः अलं अत्यर्थं न कृता तद्वद्, कुशलं वसु धनं यस्य तस्य भावस्तत्ता, अथच कुशलवौ सुतौ यस्या सा सीता।

(१६) शब्दशक्तिमहिम्ना पादत्रयद्योत्या उपमा वाच्याया रामत्वप्राप्तेः

Digitized by Google

आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्
अम्भोजिनीं क्वचिदपि चपितत्रियामः।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि! पादपतनेन सहस्ररश्मिः॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपणेनैव स्थितः (१७)॥ [२]

वाच्यसिद्ध्यङ्गं यथा

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥

---

रूपकारकतयैव कवेरभिप्रेतेत्यङ्गत्वम्। 'रामत्वं आप्तम्' इत्यनेनैव वाच्यार्थसिद्धिरिति नास्याः वाच्यसिद्ध्यङ्गत्वम्, उपमाया वाच्यत्वाभावान्नात्रोपमालंङ्कारः। 'वाच्यतां नीतः' इति पाठे तु 'पादत्रयद्योत्यापि रामेण सहोपमा मयाप्तं रामत्वमित्यनेन वाच्यतां नीता, तदङ्गञ्च शब्दशक्तिमूलानुरणनरूपो द्वितीयोऽर्थः' इति प्रदीपानुसरणमेव साधीयः।

(१७) दर्शितोदाहरणे विनैवानुनयं अपगतमाना नायिका सख्या उपालभ्यते, तथाहि सहस्ररश्मिरिति बहुनायिकावत्त्वं ध्वन्यते, क्वचिदेवेति उपनायिकागृह एवेति निश्चयाभावः, तत्रापि यामत्रयमेव नाधिकमिति, तथाप्ययं पादपतनेनानुनयति, ईदृशो हि कामिनोर्व्यवहारः, त्वं पुनर्बहुकालं परनायिकासक्ते विनैवानुनयं प्रसन्नासीत्युपालम्भः, एवञ्च नायकनायिकावृत्तान्तकथनमेवाभिप्रेतम्, स च वृत्तान्तो व्यज्यमानः वाच्ये रविकमलिनीवृत्तान्तेऽभिन्नतया च आरोप्यमाणः तस्य प्रकृतार्थतां सम्पादयन् तदुत्कर्षमाधत्ते इत्यङ्गतयैवास्ते। यत्र स्वतएव सिद्धरूपस्य वाच्यस्य व्यङ्ग्येनोत्कर्षाधानमात्रं तत्रायं प्रभेदः, यत्र



Digitized by Google

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धि-कृत् (१८) । यथा वा

गच्छाम्यच्युत! दर्शनेन भवतः किं तृप्तिरुत्पद्यते?
किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्
आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥

अत्र अच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य (१९) । एतच्चैकत्र एकवक्तृगतत्वेन अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः। [३]

अस्फुटं यथा

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥

अत्रादृष्टो यथा न भवसि, वियोगभयञ्च यथा नोत्पद्यते, तथा कुर्य्या इति क्लिष्टम् । [४]

सन्दिग्धप्राधान्यं यथा

---

पुनर्व्यङ्ग्यं विना वाच्यमेवात्मानं न लभते तत्र वाच्यसिद्ध्यङ्गत्वमिति व्यङ्ग्यस्यापेक्षानिरपेक्षसिद्धिभ्यामनयोर्भेदः । अयमेव समासोक्त्यलङ्कारः ।

(१८) जलद एव भुजग इतिरूपणं वाच्यं तावत् न सिध्यति यावत् विषमित्यनेन जलवाचकेन हालाहलं व्यज्यत इति । निहतार्थत्वं श्लेषादौ न दोषः ।

(१९) अच्युत ! मद्विधनायिकासन्निधावपि अस्खलितधैर्य्य ! यतो नोपभोगाय यतसे, दर्शनेन न तृप्तिः किन्तु उपभोगेन, उपभोगे सति दुर्जनसम्भावनापि न दुःखायेति वाक्यम्, सिद्धिकृदिति शेषः ।

Digitized by Google

हरस्तु किञ्चित्परिवृत्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं, किंवा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः । [५]

तुल्यप्राधान्यं यथा

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रम्, अन्यथा दुर्मनायते ॥

अत्र जामदग्न्यः सर्व्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् । [६]

काक्वाक्षिप्तं यथा

मथ्नामि कौरवशतं समरे न कोपात्,
दुःशासनस्य रुधिरं न पिवाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू,
सन्धिं करोतु भवतां नृपतिः पणेन ॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् (२०) । [७]

असुन्दरं यथा

---

(२०) कौरवकुलनिधननिहितप्रतिज्ञस्य भीमस्य न मथ्नामीत्याद्युक्तिरेव बाधिता, अतो न मथ्नामीति काकुः न मथ्नामीति नेत्येवं मथननिषेधनिषेधेन मथनावधारणात्मकं व्यङ्ग्यं हठेनैव उपस्थापयत् मथननिषेधस्य वाक्यार्थभूतस्य प्रतीतिसमकालमेव प्रत्याययति, काकुं विना वाक्यार्थस्य बाधितत्वेनाप्रतीतेः ।

Digitized by Google

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावड़ाए वहुए सीअन्ति अङ्गाइं (२१) ।।

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्टइतिव्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ।। [८]

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ।। २ ।।**

यथायोगमिति 'व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा । ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् (२२)' इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् (२३) ।

---

काकाक्षिप्तं व्यङ्ग्यं वाक्यार्थस्य सिद्धरूपस्य बाधमपाकरोति, वाच्यसिद्ध्यङ्गे तु पदार्थस्य सिद्धिकृदिति ।

(२१) वाणीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः गृहकर्म्मव्यापृतायाः वध्वाः सीदन्त्यङ्गानीति सं० ।

(२२) ध्वन्यङ्गता वाच्यवस्तुमेवयाऽलङ्कारत्वेनैवातिशायितया ध्वनित्वनिर्व्वाहकता, काव्यवृत्तेः काव्यव्यवहारस्य, तदाश्रयात् अलङ्कारसापेक्षत्वात् । अयं भावः, वाच्यात् वस्तुनोऽलङ्कारस्य चारुत्वनियमेन आगूढत्वादिना व्यङ्ग्यत्वाधीनचारुत्वापनयेऽपि अलङ्कारत्वकृता चारुताऽव्याहतैवेति सर्व्वत्रैव वस्तुव्यङ्ग्यालङ्कारस्थले ध्वनित्वम् ।

(२३) स्वतःसम्भवि-कविप्रौढ़ोक्तिसिद्ध-कविनिबद्धप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यालङ्काराणां पदवाक्यप्रबन्धगतत्वेन त्रिरूपतया वस्तुव्यङ्ग्यालङ्कारस्य नवविधत्वमिति ध्वनिभेदसंख्यैकपञ्चाशतो नवन्यूनेन अष्टानां भेदानां प्रत्येकं द्वाचत्वारिंशद्विधत्वमिति मिलित्वा गुणीभूतव्यङ्ग्यस्य षट्त्रिंशदधिकत्रिशतभेदाः (३३६) शुद्धाः,

Digitized by Google

**सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।**

सालङ्कारैरिति तैरेवालङ्कारैः (२४) अलङ्कारयुक्तैश्च तैः, तदुक्तं ध्वनिकृता

'स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा' इति ।

**अन्योन्ययोगादेवं स्यात् भेदसङ्ख्याऽतिभूयसी ॥ ३ ॥**

'एवम्' अनेन प्रकारेण अवान्तरभेदगणनेनातिप्रभूततरा गणना, तथाहि शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यं, का

(महेश्वरस्तु वस्तुव्यङ्ग्यालङ्कारस्य प्रभेदान् विस्तारन् 'सप्ताधिकचतुःशतरूपम् ४०७' इति बभाम) एवमस्य संसृष्टिसंकराभ्यां चतुरशीत्यधिकपञ्चशताधिकैक-पञ्चाशत्सहस्रोत्तरचतुर्लक्षभेदाः (४५१५८४) संकीर्णाः, शुद्धैः सह विंशत्यधिक-नवशतोत्तरैकपञ्चाशत्सहस्राधिकचतुर्लक्षभेदाः (४५१९२०), गणनप्रकारस्तु ध्वनिस्थलीयोक्तदिशाऽवसेयः ।

(२४) तैरेव गुणीभूतव्यङ्ग्यप्रभेदैरेव, अलङ्कारैः रसवदादिपदाभिधेयैः । अत्र च सालङ्कारैरिति भिन्नार्थकयोरेकरूपपदयोरेकशेषः, एकत्र (अलङ्कारपदस्य भावप्राधान्येन निर्दिष्टस्यालङ्कारत्वार्थकतया) सालङ्कारपदस्य अलङ्कारोऽर्थः, अपरत्र तु अलङ्कारसहितोऽर्थः । सर्व्वत्रैव काव्येऽलङ्कारसद्भावनियमेन अल-ङ्कारासंकीर्णो ध्वनिगुणीभूतव्यङ्ग्ययोरन्योन्ययोगएव दुर्लभ इत्याशङ्कापनुत्तये रसवदाद्यलंकारस्थलएव स्वभिन्नालङ्कारान्तराभावसम्भवेन तत्सम्भव इति प्रदर्श-नार्थमित्यमुक्तम् । वस्तुतः गुणीभूतव्यङ्ग्येन अलङ्कारेण च ध्वनेरन्योन्ययोग इत्येव परमार्थः । एतैः प्रभेदैरुपनिबध्यमानः पुरातनोऽप्यर्थो नवनवीभवतीति सप्रयोजनं ध्वनिभेदप्रदर्शनमिति प्रदीपः ।

Digitized by Google

गणना तु सर्व्वेषाम् । सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्, तथाहि किञ्चिद्वाच्यतां सहते, किञ्चित्त्वन्यथा, तत्र वाच्यतासहमविचित्रं विचित्रं चेति ; अविचित्रं वस्तुमात्रं, विचित्रं त्वलङ्काररूपं (यद्यपि प्राधान्येन तदलङ्कार्य्यं, तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते) ; रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः, स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत ! नचाभिधीयते, तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्य अप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते, तेनासौ व्यङ्ग्य एव, मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः ।

अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् [२१ । २] प्रतिपादितम् । शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य, तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम् । अर्थशक्तिमूलेऽपि, विशेषे संङ्केतः कर्त्तुं न युज्यत इति (२५) सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात्परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्त्ता व्यङ्ग्यस्याभिधेयतायाम् (२६) ।

---

(२५) विशेषे सन्निहितगवादिव्यक्तौ, आनन्त्यादिदोषात् न तत्र शक्तिः ।

(२६) 'सामान्यरूपाणां' सामान्यतो गोत्वादिना सर्व्वेषां गवादिव्यक्तीनां,

Digitized by Google

येऽप्याहुः (२७), 'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति। श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया। अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्। अर्थापत्त्याऽवबुध्येत सम्बन्धन्त्रिप्रमाणकम्' (२८) इति प्रतिपादितदिशा 'देवदत्त ! गामानय'-

'यत्र' मते, 'विशेषरूपः' इतित्वानुकूलत्वादिविशेषात्मकः, 'अपदार्थः' अभिधयाऽनुपस्थितः, 'वाक्यार्थः' तात्पर्य्यवृत्त्या वाक्यप्रतिपाद्यः। अपदार्थोऽपीत्यपिर्भिन्नक्रमे, वाक्यार्थोऽपि अपदार्थ इत्यन्वयः। अयम्भावः, यन्मते वाच्यार्थबोधविषयीकृतमपि संसर्गं शक्योपस्थापनपरिक्षीणशक्तिरविधा नावभासयतीति तदर्थं तात्पर्य्यवृत्तिरवलम्ब्यते, तन्मते वाक्यार्थबोधोत्तरकालीनायां व्यङ्ग्योपस्थितौ नैवाभिधाप्रभाव इति किमु वक्तव्यम्।

(२७) ये 'अन्विताभिधानवादिनः' आहुरित्यन्वयः।

(२८) 'शब्दः' देवदत्त ! गामानयेत्यादि वाक्यं, 'वृद्धौ' उत्तममध्यमौ प्रयोज्यप्रयोजकौ, 'अभिधेयः' गवानयनादिरूपः। 'श्रोतुः' मध्यमवृद्धस्य, 'प्रतिपन्नत्वं' वाक्यार्थाभिज्ञत्वं, 'चेष्टया' गवानयनानुकूलव्यापारेण (हेतुना), 'अनुमानेन' "श्रुतादेव गामानयेति वाक्यात् मध्यमवृद्धो 'गवानयनं मत्कर्त्तव्यतया उत्तमवृद्धानुमतम्' इति जानाति"-इति रीत्याऽनुमानेन बुध्यत इत्यन्वयः। 'द्वयात्मिकां' वाचकत्वं वाच्यत्वञ्चेति द्विविधां, 'शक्तिं' सङ्केतापरनामकं वाक्यवाक्यार्थयोः सम्बन्धं, 'अन्यथानुपपत्त्या' 'गामानयेत्यादिवाक्यश्रवणात् गवानयनाद्यर्थज्ञानं एतद्वाक्येनैतदर्थस्य वाच्यवाचकसम्बन्धं विना अनुपपन्नम्'-इत्यनुपपत्त्या (हेतुभूतया), 'अर्थापत्त्या' प्रमाणेन बोधेदित्यन्वयः। अनन्तरञ्च 'त्रिप्रमाणकं' उक्तरीत्या प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयाधिगतं, 'सम्बन्धं' सङ्केतं 'अवबोधेत' आवापोद्वापाभ्यां गोशब्दस्य गौरेवार्थः, अम्विभक्तेः कर्म्मत्वमिति रीत्या विशेषतो पदपदार्थनिष्ठतया निर्णयेत, सर्व्वत्र बालकः कर्त्ता। एतत् सर्व्वं वृत्तौ स्पष्टम्।

इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्नः'-इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणसम्बन्धमवधार्य्य बालस्तत्र व्युत्पद्यते; परतः 'चैत्र ! गामानय, देवदत्ताश्वमानय, देवदत्त ! गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति (२९) अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानां अन्वितैः पदार्थैरन्वितानामेव संकेतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थः, नतु पदार्थानां वैशिष्ट्यम् (३०)। यद्यपि वाक्यान्तर-

---

(२९) आवापोद्वापाभ्यां विशेषे सङ्केतं दर्शयति परत इति, चैत्र ! गामानयेति आवापः, देवदत्तेत्यादिकस्तु उद्वापः। अयमभिसन्धिः, गोपदसत्त्व एव गवार्थप्रतीतिः, तदसत्त्वे च तदप्रतीतिरिति गोपदस्यैव गौरर्थः, एवमन्यत्रापि ।

(३०) 'अन्वितानां' अन्वितेषु पदार्थेषु, 'विशिष्टाः' अन्विताः, 'पदार्थाः' पदशक्याः, 'वाक्यार्थः' वाक्यप्रतिपाद्यः, 'वैशिष्ट्य' सम्बन्धः, स च पदाशक्योऽपि तात्पर्य्यवृत्त्या वाक्यप्रतिपाद्य इत्यर्थः । अत्रायं निष्कर्षः, सङ्केतग्रहो हि उक्तरीत्या व्यवहारादेव प्रथमतो भवति (व्याकरणादीनामन्येषां सङ्केतग्राहकाणां शाब्दबोधसापेक्षतया प्राथम्याभावात्), व्यवहारश्च मध्यमवृद्धस्य गवानयनप्रवृत्त्यादिरूपः सर्व्वदैव उत्तमवृद्धोक्तगामानयेतिवाक्यश्रवणादेव भवति, न कदापि गोपदमात्रश्रवणात् वाक्यस्थितानान्तु पदानामर्थाः (गामानयेत्यादौ आनयनेन, गां रक्षेत्यादौ रक्षणेनेत्येवं रीत्या) नियतमेवापरपदार्थान्विताः, अतो व्यवहारमूलकः सङ्केतग्रहोऽन्वितगवादिष्वेव भवतीति तदुत्तरभाविनोऽपि

Digitized by Google

प्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानीति निश्चीयन्त इति पदार्थान्तरमात्रेणान्वितः पदार्थः संकेतगोचरः, तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते, व्यतिसक्तानां पदार्थानां तथाभूतत्वात् (३१)-इत्यन्विताभिधानवादिनः। तेषामपि मते सामान्यविशेषरूपः पदार्थः संकेतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते, तत्र दूरे अर्थान्तरभूतस्य

---

व्याकरणादिभ्यः शक्तिग्रहात्तस्यैवान्वितपदार्थविषयका इति नान्वयबोधार्थं तात्पर्य्यवृत्तिः स्वीकार्य्येति।

(३१) कथं सारः, गामानयेत्यादौ यदेव आनयपदं, तदेव अश्वमानयेत्यादावपीति-(पूर्व्वज्ञातस्य ज्ञानं प्रत्यभिज्ञा)-प्रत्यभिज्ञाबलेनोभयत्रैकमेवानयपदमिति निर्णीयते, एवञ्च आनयपदस्य गवान्वितत्वं अश्वान्वितत्वं वा नार्थः, किन्तु उभयसाधारण्याय सामान्यतोऽपरपदार्थान्वितानयनत्वेनापरपदार्थान्वितानयनमेवार्थः इत्येव वाच्यं, तथाच गामानयेत्यादौ गवान्वयरूपविशेषान्वयबोधनाय तात्पर्य्यवृत्तिः स्वीकार्य्येत्याशङ्का, यथा न्यायमते गोत्वेन सामान्यतः शक्तिग्रहेऽपि आकाङ्क्षादिवशात् गोविशेषबोधस्तथा सामान्यतोऽपरपदार्थान्वितत्वेन विशेषे शक्तिग्रहेऽपि आकाङ्क्षादिवशात् समभिव्याहृतगामितिपदार्थान्वयबलाच्च गवान्वितत्वरूपविशेषान्वयस्य बोधः, गामितिपदार्थेन अन्वितस्यानयपदार्थस्यैव गवान्वितानयनरूपत्वादिति परिहरति यद्यपीति। वाक्यान्तरप्रयुज्यमानानि गामानयेतिवाक्यभिन्ने अश्वमानयेतिवाक्ये उक्तानि, सामान्यावच्छादितः गोत्वेन सकलगव इव, अपरपदार्थान्वितानयनत्वादिसामान्यधर्म्मप्रकारेण गृहीतसङ्केतः सर्व्वएव आनयनाद्यर्थः, व्यतिसक्तानां परस्परमन्वितानां, तथाभूतत्वात् विशेषरूपत्वात्।



Digitized by Google

निःशेषच्युतेत्यादौ विध्यादेश्चर्चा (३२) ; अनन्वितो(३३)ऽर्थो ऽभिहितान्वये, पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने, अन्वितविशेषस्त्ववाच्य एव, इत्युभयनयेऽप्यपदार्थएव वाक्यार्थः।

यदप्युच्यते, 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते'-इति (३४)। तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा? शब्दस्य प्रकाशकत्वान्न कारकत्वम्; ज्ञापकत्वन्तु अज्ञातस्य कथं? ज्ञातत्वं च सङ्केतेनैव, स चान्वितमात्रे, एवञ्च निमित्तस्य

---

(३२) 'सामान्येन' अपरपदार्थान्वितानयनत्वादिसाधारणधर्म्मेण, 'विशेषरूपः' वस्तुगत्या गवानयनादिरूपोऽर्थः, 'यत्र' मते अतिविशेषभूतः (गवानयनत्वादिना गवानयनादिरूपविशेषस्वरूपः) पदार्थोऽसङ्केतितत्वादवाच्यएव वाक्यार्थान्तर्गतः (गामानयेत्यादिवाक्यार्थमध्यनिविष्टः) प्रतिपद्यते इत्यन्वयः, चर्चा अनुसन्धानं, वाच्यत्वस्येति शेषः। अयं भावः, वस्तुत्वेन वस्तुपदवाच्योऽपि घटो यथा घटत्वेन तद्वाच्यः, तथा अपरपदार्थान्वितानयनत्वेन (अभिहितान्वयवादे केवलेनानयनत्वेन) आनयपदवाच्यमपि गवानयनं गवानयनत्वेन तद्वाच्यमेवेत्यसङ्केतिते तस्मिन् वाक्यगम्ये प्राथमिकबोधविषयीकृतेऽपि नाभिधाव्यापार इति नितरामेव अनन्तरभाविनि व्यङ्ग्यबोधेऽभिधाविरामः।

(३३) उभयमतसारमनूद्य दोषमुद्घाटयति अनन्वित इति, अनन्तरोक्तभावार्थेन व्याख्यातप्रायमेतत्।

(३४) यस्मिन् सति ज्ञाते वा यावान् अर्थो जायते ज्ञायते वा तावत्स्वेव तस्मिन् तस्य (यथाक्रमं कारकत्वरूपो ज्ञापकत्वरूपो वा) निमित्तभाव इतिन्यायेन शब्दश्रवणानन्तरं यावानर्थः (वाच्यो वा व्यङ्ग्यो वा) प्रतीयते तत्र सर्व्वत्रैव उपस्थितत्वात् शब्द एव निमित्तमिति किमनेन विचाराडम्बरेण इति पूर्व्वपक्षः।

Digitized by Google

नियतत्वं यावन्न निश्चितं, तावन्नैमित्तिकस्य प्रतीतिरेव कथम् ? इति 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इति अविचारिताभिधानम् (३५) ।

ये (३६) त्वभिदधति, 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति, 'यत्परः शब्दः स शब्दार्थः' इति च विधिरेवात्र वाच्य इति । तेऽप्यतात्पर्य्यज्ञास्तात्पर्य्यवाचो युक्तेर्देवानां-

(३५) 'प्रकाशकत्वात्' अर्थबोधकत्वात्, 'न कारकत्वं' नार्थजनकत्वम्, 'सङ्केतेन' शक्तिरूपसङ्केतवत्तया, 'नियतनिमित्तत्व' अव्यभिचरितनिमित्तभावः, 'नैमित्तिकस्य प्रतीतिः' इदमेतन्निमित्तकमिति ज्ञानम् । अयं सिद्धान्तसारः, व्यङ्ग्योपस्थितौ शब्दस्य ज्ञापकत्वरूपं निमित्तत्वमस्माकमपि सम्मतं, तत्र नास्माकं विवादः, परन्तु व्यञ्जनाया अस्वीकारे तन्न सम्भवति, शब्दस्य अर्थनिमित्तत्वं हि व्यापारसापेक्षमेव नियतम्, यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणे व्यापारौ, तथा इहापि कोऽपि व्यापारोऽवश्यमङ्गीकार्य्यः, अन्यथा हि शब्दस्य निमित्तत्वानिश्चयेन नैमित्तिको व्यङ्ग्यार्थ इत्येव भवदभिमतोऽपि न सिद्ध्यति, यदि तु व्यापारं विनाऽपि शब्दस्य निमित्तत्वं स्यात् तदा अभिधालक्षणे अपि दत्तजलाञ्जली स्यातामित्यस्माभिरुच्यते, इत्यभिप्रायमबुद्ध्वाऽभिधानं अविचारविजृम्भितमेव ।

(३६) यथा सुनिपुणेन संहितेषुरेक एकेनैव वेगरूपव्यापारेण रिपोर्वर्म्मच्छेदमर्म्मभेदप्राणप्रयाणानि विधत्ते, तथा कविप्रयुक्त एक एव शब्द एकेनैवाभिधाव्यापारेण पदार्थोपस्थित्यन्वयबोधव्यङ्ग्यप्रतीतीः जनयतीति वाच्य एव व्यङ्ग्यार्थः, अपिच यत्र यदर्थे यस्य शब्दस्य तात्पर्य्यं, तत्र सएव तच्छब्दार्थ इत्यर्थकेन 'यत्परः'-इतिनियमेन निःशेषेत्यादौ अन्तिकगमनविधिस्तात्पर्य्यविषयतया वाच्य एवेति निश्चीयते, इति मतमुत्थापयति ये त्विति ।

Digitized by Google

प्रियाः (३७), तथाहि (३८) 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्त्तकस्वक्रियाभिसम्बन्धात्साध्यायमानतां प्राप्नुवन्ति (३९), ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते (४०), यथा ऋत्विक्प्रचरणे प्रमाणान्तरात् (४१) सिद्धे

(३७) तात्पर्य्यवाचः 'यत्परः' इति मीमांसकनियमोक्तेः, देवानांप्रियाः पशवः ।

(३८) 'यत्परः' इति नियमस्येत्यमर्थो मीमांसकैर्निरणायि, वाक्यान्तर्वर्त्तिपदार्थेषूपस्थितेषु सिद्धरूपाणां प्राप्ततया विधानमनर्थकमिति साध्यरूपस्यैव विधेयत्वं, यस्य च विधेयत्वं तत्रैव तद्वाक्यस्य तात्पर्य्यं यस्मिंश्च तात्पर्य्यं स एव वाक्यार्थः, तदर्थबोधनायैव तद्वाक्यं प्रयुक्तं, तदंशस्य प्रमाणान्तराप्राप्ततया तदंश एव तद्वाक्यस्यानवगतार्थबोधकत्वेन प्रामाण्यनिर्व्वाहः, एतदेव प्रथमतः तथा हीत्यादिना 'उपात्तशब्दार्थ एव तात्पर्य्यम्' इत्यन्तेन दर्शयति ।

(३९) भूतं सिद्धं कारकादि, भव्यं साध्यं क्रियारूपं, समुच्चारणे सहोच्चारणे, कारकपदार्थाः गामानयेत्यादौ गामित्यादयः, क्रियापदार्थेन आनयपदार्थेन, अन्वीयमानाः सम्बद्धाः, प्रधानक्रियाया आनयनरूपायाः, निर्व्वर्त्तिका सम्पादयित्री, या स्वस्य गोः क्रिया चलनरूपा, तस्या अभिसम्बन्धात् आश्रयत्वात् साध्यायमानतां प्राप्नुवन्ति, साध्या इव भवन्ति ; यथा पूर्व्वमुत्पन्नस्यापि घटस्य रक्ततादशायां रक्तो घटो जात इति व्यवहारः, तथा सिद्धरूपाणामपि कारकानां साध्यक्रियासम्बन्धात् साध्यरूपत्वं भाक्तमिति भावः ।

(४०) 'ततश्च' उपदेशस्य भव्यार्थकत्वादेव । यथा तृणान्वितभस्मराशावग्निरदग्धमेव तृणं दहति न भस्म, तथा साध्यान्वितसिद्धेषु साध्यमेव विधीयते न सिद्धमिति ।

(४१) 'लोहितोष्णीषा विनीतवसना ऋत्विजः प्रचरन्ति' इति वाक्यात्, लोहितोष्णीषमात्रं उष्णीषस्य लौहित्यमात्रम् ।

Digitized by Google

‘लोहितोष्णीषा ऋत्विजः प्रचरन्ति’ इत्यत्र लोहितोष्णीषत्वमात्रं विधेयं, हवनस्यान्यतः (४२) सिद्धेः ‘दध्ना जुहोति’ इत्यादौ दध्यादेः करणत्वमात्रं विधेयं; क्वचिदुभयविधिः, क्वचित्त्रिविधिरपि, यथा रक्तं पटं वयेत्यादौ एकविधिर्द्विविधिस्त्रिविधिर्वा, (४३) ततश्च ‘यदेव विधेयन्तत्रैव तात्पर्य्यम्’ इत्युपात्तस्यैव शब्दस्यार्थे तात्पर्य्यं नतु प्रतीतमात्रे, एवं हि पूर्व्वो धावतीत्यादौ अपराद्यर्थेऽपि क्वचित्तात्पर्य्यं स्यात् (४४)। यत्तु (४५)

---

(४२) ‘अग्निहोत्रं जुहोति’ इति वाक्यात् ।

(४३) रक्तगुणपटभाववयनानां मध्ये एकस्य द्वयोस्त्रयाणां वा असिद्धाविति शेषः ।

(४४) उपात्तस्य उच्चरितस्य, अर्थे वृत्त्योपस्थितेऽर्थे, प्रतीतमात्रे तत्कालं येन केनापि ज्ञायमाने, पूर्व्वत्वं हि नियतमेवापरसापेक्षमिति पूर्व्वत्वज्ञानकालज्ञायमानः पश्चिमार्थः कदाचित् तात्पर्य्यविषयः सन् पूर्व्वशब्दवाच्यतां भजेत ।

(४५) यदि हि उपात्तशब्दार्थ एव तात्पर्य्यं स्यात्, तदा विषं भक्षयेति मा चास्य गृहे भुङ्क्था इति च आख्यातान्तक्रियाद्वयघटितत्वेन वाक्यद्वयस्य एकस्मिन् एतद्गृहे न भोक्तव्यमित्यर्थे तात्पर्य्यं न स्यात्! अस्यार्थस्य विषं भक्षयेति वाक्यार्थत्वाभावादिति पूर्व्वपक्षः । सिद्धान्तस्त्वयं, मा चास्येति चकारेणानन्वयप्रयोजकेनानयोरेकवाक्यत्वमेव लभ्यते, एकवाक्यत्वञ्चाख्यातक्रियाद्वयान्वितयोर्यथाश्रुतार्थे निरपेक्षयोरनयोर्न सम्भवति, नापिच विषभक्षणं सुहृदुपदेशयोग्यमिति विषं भक्षयेति वाक्यं स्वार्थे सबाधं सत् विषभक्षणादपि दुष्टमेतद्गृहे भोजनमित्यर्थं लक्षयत् मा चास्येति वाक्यस्य हेतुत्वेनाङ्गतामापन्नञ्च सत् परस्परमेकवाक्यत्वं भजत इति एकवाक्यान्तर्व्वर्त्तिपदार्थ एव तात्पर्य्यमिति नियमस्य न व्यभिचारः ।

Digitized by Google

'विषं भक्षय मा चास्य गृहे भुङ्क्थाः'-इत्यत्र 'एतद्गृहे न भोक्तव्यम्'-इत्यत्र तात्पर्य्यमिति सएव वाक्यार्थइत्युच्यते, तत्र चकार एकवाक्यतासूचनार्थः, नचाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति 'विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्व्वथा माऽस्य गृहे भुङ्क्थाः' इति उपात्तशब्दार्थे एव तात्पर्य्यम् ।

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते, तावति शब्दस्याभिधैव व्यापारः, ततः कथं ब्राह्मण ! पुत्रस्ते जातः, ब्राह्मण ! कन्यका ते गर्भिणीत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् ? कस्माच्च लक्षणा ? लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः, किमितिच श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्व्वपूर्व्वबलीयस्त्वम्? (४६) इत्यन्वि-

(४६) भगवता जैमिनिना "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति सूत्रेण यथाक्रमसुक्तानां एकत्र उपनिपाते परपरस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वमभिदधता पूर्व्वपूर्व्वस्य श्रुत्यादेः प्राबल्यं निरणायि ; यदि शब्दश्रुतेरनन्तरोपस्थितान् सर्व्वानेव प्रत्ययान् प्रति अभिधैव व्यापारः स्यात्, तदा श्रुत्युपस्थितार्थस्येव लिङ्गाद्यनुगृहीतार्थानामप्यभिधेयतया सर्व्वेषां समकालमर्थोपस्थापकत्वप्रसक्त्या अर्थविप्रकर्षाभिधानं मुनेरनुचितं स्यात् । सूत्रार्थस्तु मीमांसाभाष्यादौ प्रदीपे च विशेषतः सोदाहरणं प्रदर्शितोऽपि प्रकृतानुपयोगितयोपेक्षितः, श्रुत्यादयस्तु "श्रुतिर्द्वितीया, क्षमता च लिङ्गं, वाक्यं पदान्येव तु संहतानि, सा प्रक्रिया या कथमित्यपेक्षा, स्थानं क्रमो, योगबलं समाख्या" इति सामान्यतो ज्ञेयाः । अत्रैकमुदाहरामि, "कदाचनस्तरीरसि" इत्यादिकाया ऋचः विनियोजनाय श्रुतिरियं प्रवर्त्तते

ताभिधानवादेऽपि(४७)विधेरपि सिद्धं व्यङ्ग्यत्वम्। किञ्च, कुरु रुचिमिति पदयोर्वैपरीत्ये काव्यान्तर्वर्त्तिनि कथं दुष्टत्वम्? नह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वितः। इत्यनभिधेयएवेति एवमादि अपरित्याज्यं स्यात्। (४८)।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते, तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमितिविभागकरणमनुपपन्नं स्यात्। न चानुपपन्नं,

---

"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति, तत्र सन्देहः, किं ऐन्द्री इन्द्रसम्बन्धिनीतीन्द्रप्रकाशनसामर्थ्यात् लिङ्गात् गार्हपत्यपदस्येन्द्रपरत्वं प्रकल्प्य इन्द्रोपस्थापनएव विनियोगः, किंवा गार्हपत्यमिति द्वितीयारूपया श्रुत्या ऐन्द्रीपदस्य गौणार्थत्वेन गार्हपत्याग्न्युपस्थापनएव विनियोगः? इति सन्देहे श्रुत्या सामर्थ्यं बाध्यत इति सिद्धान्तः, तथाहि द्वितीया हि कारकविभक्तिः कामपि क्रियामपेक्षन्ती उपस्थापयेदितिक्रिययाऽन्विता सती प्रथमत एवाभिधया अग्न्युपस्थापने इमामृचं विनियोजयति, नैवं सामर्थ्यम्, ऐन्द्रीति पदं इन्द्रप्रकाशकमिति प्रथमं ज्ञानं, ततः अन्यप्रकाशकमन्त्रस्य नान्यत्र विनियोगः सम्भवतीत्यनुपपत्तिज्ञानं, ततश्च इन्द्रोपस्थापन एव विनियोग इति रीत्या सामर्थ्येन कल्पनीयमिति विलम्बः। तस्मात् श्रुतेः प्रबलतया तदानुगुण्येन सामर्थ्ये नीयमाने इन्द्रपदं ऐश्वर्य्यवत्परतया गार्हपत्यतात्पर्य्यकमिति कल्पनीयम्।

(४७) विधेस्तदन्तिकगमनस्य।

(४८) अयं निर्गलितार्थः, रुचिङ्कुर्वित्युक्तौ स्त्रीगुह्याङ्गवाचकचिङ्कुपदत्वेन चिङ्कित्यनेन व्यञ्जनया स्त्रीगुह्याङ्गोपस्थित्याऽश्लीलत्वदोष इति नैवमुच्यते, तच्च 'अन्वित एवार्थोऽभिधेयः' इत्यन्विताभिधानमते व्यञ्जनाया अस्वीकारे न सम्भवति, तादृशार्थस्य केनाप्यनन्वितत्वेनानभिधेयत्वादिति।

Digitized by Google

सर्व्वस्यैव विभक्ततया प्रतिभासात्, वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयेण तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था (४९)। "इयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः"- इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वं (५०)?। अपिच वाच्योऽर्थः सर्व्वान् प्रतिपत्तॄन् प्रति एकरूप एवेति नियतोऽसौ, नहि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति, प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते ; तथा च, गतोऽस्तमर्क इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्म्मकरणान्निवर्त्तामह इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्य प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थः तत्र तत्र प्रतिभाति ।

(४९) असाधुत्वादयोहि सर्वत्रैव हेया इति नित्यदोषाः, कष्टत्वादयस्तु शृङ्गाराद्यभिव्यक्तिप्रतिकूलतया तत्रैव हेया अपि रौद्रादौ व्यङ्ग्येऽनुगुणतयोपादेया एवेत्यनित्यदोषाः, इत्यञ्च व्यङ्ग्यव्यञ्जकभावे प्रातिकूल्यानुकूल्याभ्यामेव नित्यानित्यदोषविभागः, स च व्यञ्जनाया असत्त्वे नोपपन्नः, वाच्यवाचकभावे हि कष्टत्वादीनामौदासीन्येन सर्वत्रैव दुष्टत्वमदुष्टत्वं वा अन्यतरत् नियतमेव स्यात् ।

(५०) व्यञ्जनाङ्गीकारे कपालिपदेन जुगुप्सा व्यज्यते इति तस्यैव उपयोगः ।

Digitized by Google

वाच्यव्यङ्ग्ययोः (५१) (निःशेषेत्यादौ निषेधविध्यात्मना,

"मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य्य-
मार्य्याः समर्य्यादमुदाहरन्तु।
सेव्या नितम्बाः किमु भूधराणाम्
उत स्मरस्मेरविलासिनीनाम्"

इत्यादौ संशयशान्तशृङ्गार्य्यन्यतरगतनिश्चयरूपेण (५२),

"कथमवनिप! दर्पो यन्निशातासिधारा-
दलनगलितमूर्द्धां विद्विषां स्वीकृता श्रीः।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्व्वल्लभा कीर्त्तिरेभिः"

इत्यादौ निन्दास्तुतिवपुषा) स्वरूपस्य, (पूर्व्वपश्चाद्भावेन प्रतीतेः) कालस्य, (शब्दाश्रयत्वेन, शब्दतदेकदेशतदर्थवर्ण-संघटनाश्रयत्वेन च) आश्रयस्य, (शब्दानुशासनज्ञानेन, प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति) निमित्तस्य, (बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचम-

(५१) वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपीत्याद्यभिमेणान्वयः, एवं कालस्येत्यादावपि।

(५२) संशयो वाच्यः, शान्ते शृङ्गारिणि वा वक्तरि तदुचित एव भूधराणामिति विलासिनीनामिति वा निश्चयो व्यङ्ग्यः।



Digitized by Google

त्कृत्याश्च करणात्) (५३) कार्य्यस्य, (गतोऽस्तमर्क इत्यादौ प्रदर्शितनयेन) संख्यायाः,

("कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरं ।
सभमरपउमग्घाइणि ! वारिअवामे ! सहसु एण्हिं"-

(५४) इत्यादौ सखीतत्कान्तादिगतत्वेन) विषयस्य च भेदेऽपि यद्येकत्वं, तत्क्वचिदपि (नीलानीलादौ) भेदो न स्यात् ! उक्तं हि, "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्म्माध्यासः कारणभेदश्च" इति । वाचकानामर्थापेक्षा, व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम् ।

किञ्च वाणीरकुडङ्गेत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति (५५), तत्र गुणीभूतव्यङ्ग्येऽतात्पर्य्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयताम् अवलम्बताम्? इति ।।

ननु रामोऽस्मि सर्वं सहे इति, रामेण प्रियजीवितेन तु

---

(५३) वाच्येन सर्वबोद्धृसाधारणी प्रतीतिरेव केवला, व्यङ्ग्येन सहृदयानामेव प्रतीतिश्चमत्कृतिश्चेति ।

(५४) कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् । सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीमिति सं० ।

(५५) विश्राम्यति चारुत्वेन तात्पर्य्यविषयीभवन् आस्वाद्यो भवति, अयमभिसन्धिः, यत्र गुणीभूतव्यङ्ग्ये वाच्यस्य प्राधान्येन तात्पर्य्यविषयत्वं, तत्र व्यङ्ग्यार्थेऽभिधातात्पर्य्यशक्त्योरुभयोरप्यभावेन कथमस्योपस्थितिरिति तदर्थमवश्यं व्यञ्जना स्वीकार्य्या ।

Digitized by Google

कृतं प्रेमृग्धः प्रिये! नोचितमिति, रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परामित्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते, विशेषव्यपदेशहेतुश्च भवति, तदवगमश्च शब्दायत्तः, प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम? (५६)। उच्यते, लक्षणीयस्यार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवन्नियतत्वमेव, न खलु मुख्येनार्थेनानियतसम्बन्धो (५७) लक्षयितुं शक्यते, प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसम्बन्धः, अनियतसम्बन्धः, सम्बद्धसम्बन्धश्च द्योत्यते। न च,

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ! रत्तिअंधअ सेज्जाए मह णिमज्जिहिसि(५८)"

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः! तत्कथमत्र लक्षणा? लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति

(५६) अयं पूर्वपक्षः, व्यङ्ग्यस्येव लक्ष्यस्य अनियतत्वम् (असंलक्ष्यक्रमत्वादिनेवार्थान्तरसंक्रमितवाच्यत्वादिना) काव्यस्य विशेषव्यवहारहेतुत्वं, प्रकरणाद्यधीनशब्दजन्यप्रतीतिविषयत्वञ्चास्तीति उभयत्रैव लक्षणैव व्यापारोऽस्तु। लक्ष्यार्थस्य अनियतत्वं उद्धृतोदाहरणद्वये स्पष्टं, तत्र हि यथाक्रमं दुःखसहिष्णुत्वेन प्रसिद्धे, निष्करुणे, खरादिहन्तरि चार्थे एकस्यैव रामपदस्य लक्षणा।

(५७) अनियतः सामीप्यसादृश्यादिप्रसिद्धसम्बन्धान्यः कादाचित्को वा सम्बन्धो यस्य सः, नहि यदाकदाचित् गङ्गामनुसरन्ती गौरनुसरणसम्बन्धेन गङ्गापदलक्ष्या भवति।

(५८) श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय। मा पथिक! रात्र्यन्ध! शय्यायामावयोर्निमङ्क्ष्यसीति सं०।

[२१] प्रतिपादितम् । यथाच समयसव्यपेक्षा अभिधा, तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा ; अत एवाभिधापुच्छभूता सेत्याहुः (५८) ।

नच लक्षणात्मकमेव ध्वननं, तदनुगमेन (६०) तस्य दर्शनात् ; नच तदनुगतमेव, अभिधावलम्बनेनापि तस्य भावात्, न चोभयानुसार्य्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः, नच शब्दानुसार्य्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेरिति अभिधातात्पर्य्यलक्षणात्मकव्यापारत्रयातिवर्त्ती ध्वननादिपर्य्यायो व्यापारोऽनपह्नवनीय एव ।

तत्र अत्ता एत्थेत्यादौ नियतसम्बन्धः (६१), कस्स व ण होइ रोसो इत्यादौ अनियतसम्बन्धः,

"विपरीअरए लच्छी बह्मं दट्ठूण णाहिकमलट्ठं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ (६२)"

---

(५८) समयः सङ्केतः, समयविशेषः मुख्यार्थे संकेतः, यतः संकेतापेक्षा, अतः अभिधानुविधायिनीत्यर्थः ।

(६०) तदनुगमेन लक्षणामूलत्वे लक्षणापश्चाद्भावेन ।

(६१) शय्याप्रवेशरूपे व्यङ्ग्ये तदप्रवेशरूपस्य वाच्यस्य विरोधसम्बन्धोऽस्ति, स च प्रसिद्धतया क्लृप्त इति नियतत्वम् । उत्तरोदाहरणे तु नायकेनावगते 'भ्रमरेणास्या आस्यं दष्टं नतूपपतिना' इति व्यङ्ग्यार्थे वाच्यार्थस्य न कोऽपि प्रसिद्धसम्बन्धोऽस्तीति कोऽपि कल्पनीय इति अनियतत्वम् ।

(६२) विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् । हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयतीति स० ।

Digitized by Google

इत्यादौ सम्बद्धसम्बन्धः, अत्र हि हरिपदेन दक्षिणनयनस्य सूर्य्यात्मकता व्यज्यते, तन्निमीलनेन सूर्य्यास्तमयः, तेन पद्मस्य संकोचः, ततो ब्रह्मणः स्थगनं, तत्र सति गोप्याङ्गस्यादर्शनेन अनिर्यन्त्रणं (६३) त्रिभुवनविलसितमिति।

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यार्थः, वाक्यमेव च वाचकम्' इति येऽप्याहुः, तैरप्यविद्यापथपतितैः पदपदार्थकल्पना कर्त्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव (६४)। ननु वाच्यादसंबद्धं तावन्न प्रतीयते, यतः-कुतश्चित् यस्यकस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्, एवञ्च सम्बन्धात् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धे अवश्यं न भवतीति व्याप्तत्वेन नियतधर्म्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्, तद्रूपः पर्य्यवस्यति (६५), तथाहि

(६३) अनिर्यन्त्रणं अप्रतिबन्धम्, अत्र 'चन्द्रसूर्य्यात्मके विष्णोः चक्षुषी वामदक्षिणे' इति पौराणिकी गाथाऽनुसर्त्तव्याः।

(६४) क्रियाकारकभावमुरीकृत्य जायमाना धीः खण्डा, तदन्या अखण्डा। अविद्यापथपतितैः संसारदशायामाविद्यिकव्यवहारावलम्बिभिः। अयं भावः, क्रियाकारकभावोऽहि धर्म्मधर्म्मिभावमपुरस्कृत्य न सम्भवति, धर्म्मधर्म्मिभावश्च संसारस्य मिथ्यात्वेन न सम्भवति, नापि च ब्रह्मणः, निर्धर्म्मत्वात्, अतः पदपदार्थविभागमन्तरेणैव सत्यं ज्ञानमित्यादिमहावाक्यमखण्डमेवाखण्डं ब्रह्म बोधयतीति वैदान्तिकमतानुसारेण व्यङ्गेऽपि वाक्यगम्ये वाक्यस्य शक्तिरेवेति पूर्व्वः पक्षः। सिद्धान्तस्तु, संसारदशायां वैदान्तिकैरपि क्रियाकारकभावस्वीकारेण नैवं सम्भवति।

(६५) सम्बन्धादिति व्यङ्ग्यव्यञ्जकभावान्वयि, अप्रतिबन्धेऽनियतसम्बन्धे

Digitized by Google

"भम धम्मिअ ! वीसत्थो सो सुणओ अज्ज मारिओ देण ।
गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण" (६६)

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति, यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्, गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः (६७)। अत्रोच्यते (६८) भीरोरपि गुरोः प्रभोर्वा निदेशेन, प्रियानुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः, शुनो

---

व्याप्तिसम्बन्धरहिते इति यावत्, व्याप्तत्वेन (वाच्यार्थस्य) व्यङ्ग्यार्थव्याप्तिमत्तया, नियतधर्म्मिनिष्ठत्वेन (व्याप्योऽपि वाक्यार्थो न स्वानाश्रये व्यङ्ग्यं प्रतिपादयतीति) व्यङ्ग्यार्थाश्रयाश्रितत्वेन च हेतुना, तृतीयान्तद्वयस्य पर्य्यवस्यतीत्यपिमेयान्वयः । त्रिरूपात् पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वलक्षणरूपत्रयवतः, तद्रूपः (तेन अनुमानेन रूप्यते इति व्युत्पत्त्या) अनुमेयानुमापकभावो विधेयः, अत्र 'व्यङ्ग्यव्यञ्जकभावः' इति उद्देश्यपदमूह्यम् ।

(६६) भ्रम धार्म्मिक ! विश्वस्तः स श्वा अद्य मारितस्तेन । गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेनेति स० ।

(६७) भीरुभ्रमणव्यापकस्य भयकारणनिवृत्त्युपलब्धिरूपस्य विरुद्धा सिंहोपलब्धिः, तथाच विरुद्धया सिंहोपलब्ध्या भयकारणनिवृत्त्युपलब्धौ निवृत्तायां तद्व्याप्यमपि भ्रमणं निवृत्तिमेतीति ।

(६८) अयं सिद्धान्तः, भीरोरवीरस्य वीरस्य वा अभ्रमणमनुमितं ? आद्येऽनैकान्तः, अन्त्ये विरोधः, स्पर्शादिशङ्कया अपौरुषेयत्वशङ्कया वा शुनो बिभ्यतोऽपि वीरस्य मृगयादिकुतूहलतया वीररसोचितस्य सिंहवति देशे भ्रमणस्यैव सम्भवात् ।

Digitized by Google

न्निश्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात्, न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धात्(६८) इत्यसिद्धश्च ; तत् कथमेवंविधात् हेतोः साध्यसिद्धिः। तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्य्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानि इत्यनैकान्तिकानि।

व्यक्तिवादिना (७०) चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तं ; नचात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्? एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इतिव्यक्तिवादिनः पुनस्तत् अदूषणम्॥

इति काव्यप्रकाशे ध्वनिगुणीभुतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चम उल्लासः॥

---

(६८) अप्रतिबन्धात् (पुंश्चलीवाक्यत्वेन) अर्थेन सम्बन्धनियमाभावात्।

(७०) ननु अन्तिकगमनस्य व्यञ्जनरूपा व्यक्तिरेव कथमिति अत आह व्यक्तीति, एषां चन्दनच्यवनादीनां। अधमपदसहायानामेषां हेतुत्वमेवास्तु इति पूर्व्वपक्षं मनसि निधाय, नायकस्य अधमत्वानिश्चयेन सन्दिग्धासिद्धिदोष इति परिहरति नचेति, व्यञ्जनरूपव्यक्तिपक्षे तु नैते दोषाः सम्भवन्ति, व्यञ्जनायां व्याप्त्यादेरनपेक्षणादित्याह एवंविधेति उपपत्तिर्व्याप्त्यादिः, तत् अनैकान्तादि।



## ॥ षष्ठ उल्लासः ॥



**शब्दार्थचित्रं यत्पूर्व्वं काव्यद्वयमुदाहृतम् ।**
**गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥१॥**

न तु शब्दचित्रेऽर्थस्याचित्रत्वम्, अर्थचित्रे वा शब्दस्य, तथा चोक्तम्,

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ।
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङाञ्च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ।
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः" (१) इति ।

शब्दचित्रं यथा

---

(१) बाह्यं काव्यार्थप्रतीत्युत्तरवर्त्तिनं, शब्दश्रवणानन्तरं शब्दालङ्कारेण चित्ते आकृष्टेऽर्थप्रतीत्यनन्तरं हि रूपकाद्यनुसन्धानमिति । व्युत्पत्तिः विशेषेण अनुप्रासादिरूपेण सन्निवेशः । सौशब्द्यं शोभनशब्दस्य काव्यस्य शोभनत्वम् । अभिधेयोऽर्थः, नः ध्वनिकाराणाम् ।

Digitized by Google

प्रथममरुणच्छायस्तावत्ततः कनकप्रभः,
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥

अर्थचित्रं यथा,

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति (२)॥

यद्यपि सर्व्वत्र काव्येऽन्ततो विभावादिरूपतया पर्य्यवसानम्, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम्।

अत्र च शब्दार्थालङ्कारभेदाद्बहवो भेदाः, ते चालङ्कारनिर्णये निर्णेष्यन्ते॥

इति काव्यप्रकाशे षष्ठ उल्लासः॥

---

(२) अलीकं ललाटं मिथ्या च, कालता कृष्णरूपता भयानकत्वेन यमस्वरूपता च, कुटिलता वक्रता कापट्यं च। अत्र दीपकमलङ्कारः।

## ॥ सप्तम उल्लासः ॥



काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि(१)सः॥१॥**

हतिरपकर्षः (२), शब्दाद्याः-इत्याद्यग्रहणाद्वर्णरचने।

विशेषलक्षणमाह

---

(१) मुख्यार्थहतिः मुख्यस्य प्राधान्येन उद्देश्यस्य, अर्थस्य प्रयोजनस्य हतिर्यस्मात्, सः। रसः (रसनीयः) रसभावादिः, तदाश्रयात् (आश्रय आश्रयणमपेक्षणं, रसेनोपकारकतयाऽपेक्षणात्) वाच्यः (शब्दबोध्यः) मुख्य इत्यन्वयः। उभौ रसवाच्यौ, स रसः।

(२) अपकर्ष उद्देश्यप्रतीतिविघातः, उद्देश्या च प्रतीतिः रसवति अनपकृष्टरसविषया, नीरसे तु अर्थविषयाऽपि चमत्कारिणीत्युभयरूपाऽविलम्बिता प्रतीतिः, दुष्टेषु हि क्वचित् रसस्यार्थस्य वा प्रतीतिरेव न, क्वचित् विलम्बेन प्रतीतिः, क्वचित् रसस्य नोत्कर्षः, क्वचिदर्थप्रतीतिरपि न चमत्कारिणी; तत्कारणाञ्च तत्तत्स्थले तत्तद्दोष एव, तत्र रसदोषाणां साक्षात्विघातकत्वम्, अर्थदोषाणां क्वचित् साक्षात् क्वचिच्च परम्परया, शब्ददोषाणान्तु परम्परयैव, तत्रापि असमर्थादौ अर्थोपस्थितिरेव न, निहतार्थादौ उपस्थितिविलम्बः, च्युतसंस्कृत्यादौ वाक्यार्थबोधाभावः, क्लिष्टादौ तद्विलम्बः, निरर्थकादौ सहृदयवैमुख्यव्यापतापादनेन व्याघातः, विरुद्धमतिकृत्त्वादौ तु विपरीतार्थोपस्थापनेन व्याघातः। विघातकत्वञ्च कस्यचित् ज्ञातस्य यथा व्याहतत्वादेः, कस्यचित्स्वरूपसत एव, यथा

Digitized by Google

दुष्टं पदं (३) श्रुतिकटु
च्युतसंस्कृत्यप्रयुक्तमसमर्थम्।
निहतार्थमनुचितार्थं
निरर्थकमवाचकं त्रिधाऽश्लीलम्॥ २॥
सन्दिग्धमप्रतीतम्
ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम्।
अविमृष्टविधेयांशं
विरुद्धमतिकृत्समासगतमेव॥ ३॥

श्रुतिकटु (परुषवर्णरूपं) दुष्टं यथा,

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा॥

अत्र कार्तार्थ्यमिति (४)॥ च्युतसंस्कृति (व्याकरणलक्षणहीनं) यथा,

---

निहतार्थत्वादेः। तेनेदं दोषसामान्यलक्षणं, उद्देश्यप्रतीतिविघातको दोष इति। स चायं द्विविधः नित्यश्चानित्यश्च, सर्व्वदैव हेयो नित्यः यथा च्युतसंस्कारादिः, तदन्यस्त्वनित्यः यथा शृङ्गारादौ हेयमपि श्रुतिकटु रौद्रादौ उपादेयमेवेति।

(३) दुष्टंपदमिति विधेयं सर्व्वत्रान्वयि, श्रुतिकटुपदाद्यन्यतमत्वं पददोषसामान्यलक्षणमपि तन्मात्रलक्षणत्वेन दोषविशेषलक्षणमेवेति न प्रतिज्ञाहानिः।

(४) निरर्थं प्रयुक्तो दुःश्रवः शब्दः श्रोतुर्व्विरक्तिमापादयति। यमकाद्यर्थं प्रयुक्तस्तु न दुष्ट इति बोध्यम्।

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।
तत्पल्लीपतिपुत्रि! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः(५)॥

अत्रानुनाथते इति, सर्पिषो नाथते इत्यादावाशिष्येव नाथतेरात्मनेपदं विहितम्, 'आशिषि नाथः' इति, (१।३।२१ सू॰ वा॰) अत्र तु याचनमर्थः; (तस्मादनुनाथति स्तनयुगमिति पठनीयम्)॥ अप्रयुक्तं (तथाम्नातमपि कविभिर्नादृतं) यथा,

यथायन्दरुणाचारः सर्व्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा॥

अत्र दैवतशब्दो "दैवतानि पुंसि वा" (अ॰ को॰ १ व॰) इति पुंस्याम्नातोऽपि न केनचित्प्रयुज्यते (६)॥ असमर्थं (यत्तदर्थं पठ्यते न च तत्राऽस्य शक्तिः (७)) यथा,

---

(५) स्तनयोरनावृतत्वे तदाकृष्टमनसः पुलिन्दस्य प्रहारपाटवं न भवतीति, अनयोः कतरः कुम्भ इति संशयेन, तत्सादृश्येन कुम्भस्य प्रहारायोग्यत्वबुद्ध्या वा कुम्भाभयं स्यादिति भावः याचनस्य च मा कृथा इत्यन्तवाक्यार्थः कर्म्म।

(६) अत्र तादृशकविसमयलङ्घने प्रयोजनानुसन्धानव्यग्रतया प्रतीतिविघातः। यमकादिप्रयोजनसत्त्वे तु नायं दोषः।

(७) तदर्थेऽभिधारूपशक्तिविधुरस्यापि तदर्थतया पाठोऽन्यसहकारेण तदर्थबोधनाय, अतएव गतौ शक्तिशून्योऽपि हन्तिः पदादिपदसहकारेण पद्भ्यां हन्तीत्यादौ निरूढलक्षणया गतिं वक्ति, (निरूढलक्षणासम्पादकस्य पदादिपदसह-

Digitized by Google

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ।।

अत्र हन्तीति गमनार्थम् ।। निहतार्थं (यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तं) यथा,

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ।।

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो (८) व्यवधीयते ।। अनुचितार्थं यथा,

तपस्विभिर्या सुचिरेण लभ्यते,
प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो
रणाश्वमेधे पशुतामुपागताः ।।

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् (९) ।। निरर्थकं (पादपूरणमात्रप्रयोजनं चादिपदं) यथा,

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।
अभिवाञ्छितं प्रसिद्ध्यतु भगवति ! युष्मत्प्रसादेन ।।

अत्र हिशब्दः ।। अवाचकं यथा,

---

कार एव, तेन न केवलात् हन्तेर्गतिबोधः) अतएव च अवाचकात् भेदः अवाचकं हि विवक्षितार्थं कुत्रापि न वक्ति । नित्यदोषोऽयमिति ।

(८) ईषदारक्तीकृतत्वस्वरूपः ।

(९) विवक्षितार्थापकर्षव्यञ्जकत्वमनुचितार्थत्वमिति विरुद्धमतिकृत्त्वाद्भेदः ।

Digitized by Google

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना,
न जातहार्द्देन न विद्विषादरः ॥

अत्र जन्तुपदमदातर्य्यर्थे (१०) विवक्षितं, तत्र च नाभिधायकं ; यथा वा,

हा धिक् सा किल तामसी! शशिमुखी दृष्टा मया यत्र सा,
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम्! ।
किं कुर्म्मः, कुशले सदैव विधुरो धाता, न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥

अत्र दिनमिति प्रकाशमयमित्यर्थे (११) अवाचकं ; यच्चोपसर्गसंसर्गादर्थान्तरगतं, यथा,

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिशलयो मञ्जुमञ्जीरभृङ्गः ।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः(१२) ॥

---

(१०) पूर्व्वार्द्धे आपद्विघातकतया दातृत्वमुक्तमिति द्वितीये तद्वैपरीत्यप्रदर्शकं जन्तुपदमदातरि प्रयुक्तमिति प्रदीपः ।

(११) तामसीत्यनेन लब्धस्य तमोमयत्वस्य वैपरीत्येन दिनपदेन प्रकाशमयत्वं बोधनीयम् ।

(१२) "नृत्यं पदार्थाभिनयो नृत्तं ताललयाश्रितम्" इति, "प्रसह्योद्वीक्षितः पादो दण्डपादोऽभिधीयते" इति च चन्द्रिकाधृतम् ।

Digitized by Google

अत्र दधदित्यर्थे विदधदिति(१३) ।। त्रिधेति व्रीड़ाजुगुप्सामङ्गलव्यञ्जकत्वात्, यथा,

साधनं सुमहत् यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेताराळितां भुवम् ।। [१]

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्त्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ।।[२]

मृदुपवनविभिन्नो मत्प्रियाया विनाशात्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हः ।।[३]

एषु साधनवायुविनाशशब्दा व्रीड़ादिव्यञ्जकाः (१४) ।। सन्दिग्धं यथा,

आलिङ्गितस्तत्रभवान् संपराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ।।

---

(१३) दधातेर्धारणे शक्तिरूपसामर्थ्यसत्त्वेऽपि उपसर्गेण करणे एव शक्तेर्नियमितत्वेन विदधातिर्धारणेऽर्थेऽवाचकः न त्वसमर्थ इति ।

(१४) अश्लीलार्थोपस्थित्या श्रोतुर्वै मुख्यं दूषणबीजं, येषां पुनः शिवलिङ्गभगिनीभञ्जाखडादिशब्दानां विवक्षितार्थस्य प्रसिद्धतयाऽश्लीलार्थो नोपतिष्ठते, न तेषु दुष्टत्वम् ।

Digitized by Google

अत्र वन्द्यां किं हठहृतमहिलायां, किं वा नमस्यामिति सन्देहः ।। अप्रतीतं (यत्केवले शास्त्रे प्रसिद्धं) यथा,

सम्यक्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म्म बन्धनम् ।।

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः (१५) ।। ग्राम्यं (यत्केवले लोके स्थितं) यथा,

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ।।

अत्र कटिरिति (१६) ।। नेयार्थं ("निरूढ़ा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् । क्रियन्ते साम्प्रतं (१७) काश्चित्काश्चिन्नैव त्वशक्तितः" इति यन्निषिद्धं लाक्षणिकं) यथा,

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि ! चपेटापातनातिथिम् ।।

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।। अथ (१८) स-

---

(१५) वासना चात्र संसारनिदानं मिथ्याज्ञानजन्यः संस्कारविशेषः ।

(१६) सामाजिकैर्नितम्बादिकमेव प्रयुज्यते न तु कटिरिति ग्राम्यत्वम् । ग्राम्यशब्दश्रवणाद्वक्तुरवैदग्धोन्नयनात् श्रोतुर्वैमुख्यं दूषणबीजम् ।

(१७) प्रयोजनेनेति शेषः, रूढ़िप्रयोजनविशेषयोरभावेऽपि अपरविधरचनासामर्थ्यनिबन्धनं लक्षकमिति समुदायार्थः, तथाहि अस्योदाहरणे न रूढ़िः नापि च कविसमयसिद्धनिर्ज्जितत्वलक्षकपदसमुदायपरित्यागेन चपेटापातनपदोक्तौ प्रयोजनविशेषः ।

(१८) अथ भवेत्क्लिष्टमिति कारिकांशं व्याचष्टे अथेति क्लिष्टादित्रयाणां

मासगतमेव दुष्टमिति सम्बन्धः, अन्यत् केवलं, समासगतञ्च ॥

क्लिष्टं (यत्रार्थप्रतिपत्तिर्व्यवहिता) यथा,

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः।
सदृशं शोभतेऽत्यर्थं भूपाल! तव चेष्टितम्॥

अत्र अत्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः॥

अविमृष्टः प्राधान्येनानिर्द्दिष्टो (१९) विधेयांशो यत्र तत्, यथा,

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणाम्
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत्प्रयासः॥

अत्र मिथ्यामहिमत्वं (२०) नानुवाद्यं, अपि तु विधेयम्।

---

विवक्षितविशिष्टार्थप्रतिपत्तिव्याघातो दूषकताबीजम्. केवलपदस्य विशिष्टार्थ एव न सम्भवतीति नासमासे एतेषां सम्भवः।

(१९) प्राधान्यञ्च विधिप्रतीतियोग्यता, सा च कुत्रास्ति कुत्र वा नेत्यत्र विद्वदनुभव एव प्रमाणं, केवलमुदाहरणैरेतत्प्रदर्शितं,-विधेयस्य, समासान्तर्गतत्वेन इतरविशेषणतयोपस्थितौ, (एकस्मिन् वाक्ये) 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति नियमविपरीतनिर्द्देशे, उद्देश्यगतविशेषणान्तरमहिम्ना विधानात् पूर्व्वमेव सिद्धौ, यच्छब्दसान्निध्येन प्रसिद्धार्थ एव नियमितशक्तिकेन तदादिपदेन निर्द्देशे च विधेयतानवगम इति; एतच्च वाक्योदाहरणेषु सुस्पष्टम्।

(२०) मिथ्यामहिमत्वं 'महिमा मिथ्या' इतिरीत्या महिम्नो मिथ्यात्वम्, अनुवाद्यम् उद्देश्यं, प्राप्तस्य धर्म्मान्तरप्राप्तये कथनमुद्देशः; विधेयं साध्यम्,



Digitized by Google

यथा वा,

स्रस्तां नितम्बादवरोधयन्ती पुनःपुनः केशरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्व्वीमिव कार्मुकस्य ॥

अत्र द्वितीयत्वमात्रमुत्प्रेक्षितं, (मौर्वीन्द्वितीयामिति युक्तः पाठः) । यथा वा,

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि ! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ! ॥

अत्रालक्षिता जनिरिति वाच्यम् । यथा वा,

आनन्दसिन्धुरतिचापलशालिचित्त-
संदाननैकसदनं क्षणमप्यमुक्ता ।
या सर्व्वदैव भवता, तदुदन्तचिन्ता
तान्तिं तनोति तव सम्प्रति, धिग्धिगस्मान् ॥

अत्र न मुक्तेति निषेधो विधेयः, ( यथा,

नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः ;
सुरधनुरिदं दूराकृष्टं, न तस्य शरासनम् ।
अयमपि पटुर्धारासारः, न वाणपरम्परा ;
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्व्वशी ॥

---

अप्राप्तस्य प्राप्तये कथनं विधानम् । उद्देश्यविधेययोः पृथग्निर्देश एवोद्देश्यविधेयभावप्रतीतिः ।

इत्यत्र) सत्यमुक्तानुवादेनान्यदत्र किञ्चिद्विहितं, (यथा,

जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।

अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥

इत्यत्र अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादि) ॥

विरुद्धमतिकृद्यथा,

सुधाकरकराकारविशारदविचेष्टितः ।

अकार्य्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥

अत्र कार्य्यं विना मित्रमिति विवक्षितम्, अकार्य्येषु मित्रमिति प्रतीतिः । यथा वा,

चिरकालपरिप्राप्तिलोचनानन्ददायिनः ।

कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥

अत्र कण्ठग्रहमिति वाच्यम् (२१) । यथा वा,

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः

तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।

तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः

स्कन्दः, स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ! ॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति । यथा वा,

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।

सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ॥

---

(२१) रोगविशेषोऽर्द्धचन्द्रदानं वा प्रतीयते ।

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति (२२)।।

श्रुतिकटु समासगतं (२३) यथा,

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ।।

एवमन्यदपि ज्ञेयम् ।।

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः(२४)सन्त्येते, पदस्यांशेऽपि केचन।।४।।**

केचन, न पुनः सर्व्वे । क्रमेणोदाहरणम्,

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत्सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च।। (श्रुति०)

स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान् ।। (अप्रयु०)

---

(२२) अम्बिकापदस्य गौरीव मातापर्य्यर्थः, एवं रमणपदस्य प्रीतिकरत्वासभ्योऽप्यर्थोऽस्तीति ।

(२३) श्लिष्टादीनां समासगतत्वनियमनादन्येषामनियमः उक्तप्राय इति सूचयन् असमासगतमुक्त्वा समासगतमाह श्रुतीति ।

(२४) विशिष्टैकार्थतात्पर्य्यकपदसमूहो वाक्यम्, तदपेक्षदोषत्वमेव वाक्यदोषत्वं, तदपेक्षत्वञ्च केषाञ्चिदात्मलाभाय केषाञ्चिच्च स्वोत्कर्षाय, तथाहि ये केवला वाक्यदोषाः येऽपि च विधेयाविमर्षादयो वाक्यगतास्ते वाक्य एव सम्भवन्तीत्यात्मलाभाय वाक्यमपेक्षन्ते ; ये पुनः श्रुतिकट्वादयः पददोषा अपि वाक्यघटकपदद्वयत्रयादिगतत्वेनातिशयदोषतामापद्यन्ते, ते स्वोत्कर्षलाभायैव वाक्यसापेक्षा इति । च्युतसंस्कारासमर्थयोः स्वत एवातिशयदोषयोर्न वाक्य-

Digitized by Google

अत्र हुत्रावन इन्द्रः, अनेड़मूको मूकबधिरः (२५) ।

सायकसहायवाहो ! मकरध्वजनियमितक्षमाधिपते ! ।
अब्जरुचिभास्वरस्ते भातितरामवनिप ! श्लोकः ।। (निह०)

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्य्यायाः शराद्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितः
यशो गायन्त्येते दिशिदिशि च लग्नास्तव विभो ! ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्व्वाङ्गसुभगा
तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह ।।

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः (२६) ।।

प्राप्याभ्यद्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ।।

---

घटकपदद्वयादिगतत्वेन कोऽपि विशेषः, निरर्थकपदस्य वाक्यघटकत्वमेव नास्तीति नैषां वाक्यदोषत्वम् । एकस्य विवक्षितार्थावाचकपदस्य प्रसिद्धार्थमादायापि कथञ्चित् वाक्यार्थबोधोपपत्तिः सम्भवतीति नावाचकत्वदोषस्य स्वतएवातिशय इति पदद्वयादिगतत्वेनातिशयितो वाक्यदोषोऽयम् इति यथाकथञ्चित् विभजनीयम् ।

(२५) 'अनेड़मूक उद्दिष्टः शठे वाक्श्रुतिवर्ज्जिते' इति मेदिनी ।

(२६) अत्र कुविन्दः लब्धवित्तिकः, पटयसि पटूकरोषि (प्रख्यापयसि), लग्नाः स्तुतिपाठका इति विवक्षितार्थः । अन्यार्थस्तु कुविन्दः तन्तुवायः, पटयसि पटं (वस्त्रं) करोषि, गुणग्रामं तन्तुसमूहम् अभितः सव्यापसव्यतुरीचालनेन ।

Digitized by Google

अत्र प्राम्भ्राड्विष्णुधामविषमाश्वनिद्रापर्णशब्दाः प्रकृष्टजलदगगनसप्ताश्वसङ्कोचदलाशाभवाचकाः (२७) ।

नृपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥

अत्रोपसर्पणप्रहणनमोहनशब्दा व्रीडादायित्वादश्लीलाः ॥

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्त्तनम् ॥

अत्र वान्तोत्सर्गप्रवर्त्तनशब्दा जुगुप्सादायिनः ॥

पितृवसतिमहं व्रजामि तां सह परिवारजनेन, यत्र मे ।
भवति सपदि पावकान्वये(२८)हृदयमशेषितशोकशल्यकम् ॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ॥

सुरालयोल्लासपरः प्राप्तपर्य्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यते ॥

अत्र किं सुरादिशब्दा देवसेनाशरविभूत्यर्थाः, किं मदिराद्यर्थाः ? इति सन्देहः ।

---

(२७) अश्मभ्राज्शब्दस्य संज्ञाशब्दत्वेन तेन सह प्रशब्दस्यान्वयायोगः, विष्णुपदपदस्यैव गगनवाचकत्वं न तु हरिपदविष्णुधामादीनाम्, एकत्रिपञ्चाश्वानामपि विषमाश्वतया न सप्ताश्व एव विषमाश्वपदवाच्य इति ।

(२८) पावकान्वये पवित्रवंशे, अत्र वह्निसम्बन्धे इति व्यज्यते ।

Digitized by Google

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः।

दृढ़भूमिः प्रियप्राप्तौ यत्नः स फलितः प्रभो! (२९)॥

अत्राधिमात्रोपायादयः शब्दाः योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः॥

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः।

करोति खादनं पानं सदैव तु यथा, तथा॥

अत्र गल्लादयः शब्दा ग्राम्याः॥

वस्त्रवैदूर्य्यचरणैः क्षतसत्वरजःपरा।

निष्कम्पा रचिता, नेत्रयुद्धं वेदय साम्प्रतम्॥

अत्राम्बररत्नपादैः क्षततमाः अचला (भूः) कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता (३०)॥

---

(२९) अधिमात्रस्तन्नामकः (उत्कटः) उपायः श्रद्धादिर्यस्य, तथाभूतस्य; दृढा व्युत्थानसंस्काराद्यैरनभिभूता भूमिः चित्तैकाग्रतारूपविषयो यस्य सः। अत्र "उपायाः श्रद्धादयः मृदुमध्याधिमात्राः संवेगो वैराग्यं, तस्य मृदुमध्यतीव्रता" इति पातञ्जलभाष्यव्याख्यायां वाचस्पत्युक्तं "तीव्रसंवेगानामासन्नः" इति सूत्रञ्चानुसन्धेयम्।

(३०) अत्र वस्त्रवैदूर्य्यचरणसत्वरजःपरनिष्कम्पायुद्धवेदयेति पदैः स्ववाच्यवस्त्रादिवाचकत्वसम्बन्धेन यथाक्रमं अम्बररत्नपादतमोऽचलाद्वन्द्वबोधयेति पदानि लक्ष्यन्ते, तैश्च क्रमेण आकाश-मणि (सूर्य्य)-किरण-अन्धकार-पृथिवी-युगल-उन्मीलयेत्यर्था उपस्थाप्यन्ते इति केचित्। अपरे तु वस्त्रादिपदैरेव स्ववाच्यवस्त्रादिवाचकाम्बरादिपदवाच्यत्वसम्बन्धेन आकाशादय एव लक्ष्यन्ते इति वदन्ति; उभयमतेऽपीदृशलक्षणाङ्गीकारे रूढिप्रयोजनविशेषयोरभावान्नेयार्थता।

Digitized by Google

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामकुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्व्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ॥

न्यक्कारो ह्ययमेव मे, यदरयस्तत्राप्यसौ तापसः !
सोऽप्यत्रैव निहन्ति राक्षसकुलं ! जीवत्यहो रावणः ! ।
धिक् धिक् शक्रजितं, प्रबोधितवता किं कुम्भकर्णेन वा,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

अत्रायमेव न्यक्कार इति वाच्यम्, उच्छूनत्वमात्रं चानुवाद्यं, न वृथात्वविशेषितम् (२१) । अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य । यथा वा,

अपाङ्गसंसर्गि तरङ्गितं दृशो-
र्भ्रुवोररालान्तविलासि वेल्लनम् ।
विसारि रोमाञ्चितकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे ! तवागतः ॥

अत्र योऽसाविति पदद्वयमनुवाद्यमात्रप्रतीतिकृत् ;

---

(२१) अयंभावः, किमेभिरित्यनेन वृथात्वविधाने नीलघटस्य नीलत्वविधिवत् वृथोच्छूनस्य वृथात्वविधानमसङ्गतम् स्यात् ; वैफल्यविधाने च वृथोच्छूनस्य वैफल्यम् औचित्येन सिद्धमेवेति तद्विधानमनर्थकमिति वृथात्वविशेषणासत्त्वे विधेयत्वप्रतीतिव्याघात इतीत्थमपि विधेयाविमर्षदोषः ।

Digitized by Google

[तथाहि (३२), प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते, क्रमेणोदाहरणम्,

कातर्य्यं केवला नीतिः, शौर्य्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ।। (प्रक्रा०)

द्वयं गतं सम्प्रति शोचनीयताम्
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ।। (प्रसि०)

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन, न वीक्षितासि ! ।। (अनु०)

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात् पूर्व्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते,

---

(३२) 'यत्तदर्थयोर्नित्योऽभिसम्बन्धः' इति नियमेन पूर्व्वनिर्द्दिष्टोद्देश्यवाक्यगतो यच्छब्दो नियतमेव विधेयवाक्यगतं तच्छब्दं तच्छब्दसमानार्थकं वा अदःशब्दादिकमपेक्षते, अत्र च विधेयवाक्ये तच्छब्दो नोपात्तः, यश्च 'असौ' इति उक्तः, सोऽपि यच्छब्दसान्निध्यात् यदर्थविशेषणतया प्रसिद्धार्थमभिदधत् उद्देश्यवाक्य एवान्तर्भवति न तु विधेयवाक्ये, इति विधेयवाक्यस्यासंपूर्णतया उद्देश्यविधेयभावानवगम इति । 'इममेवार्थं यत्तदर्थयोः साकाङ्क्षत्वप्रतिपादनपूर्व्वकं प्रदर्शयति तथाहीत्यादिना 'तथाभूतमेव तच्छब्देन परामृश्यते' इत्यन्तेन ।



Digitized by Google

यथा,

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः, यथा, अत्रैव श्लोके आद्यपादयोर्व्यत्यासे, द्वयोरुपादाने तु निराकाङ्क्षत्वमप्रसिद्धम् । अनुपादानेऽपि सामर्थ्यात्क्वचिद्द्वयमपि गम्यते, यथा,

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां,
जानन्ति ते किमपि, तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

अत्र य उत्पत्स्यते तं प्रतीति । एवञ्च ] तच्छब्दानुपादानेऽत्र (३२) साकाङ्क्षत्वम् । नचासाविति तच्छब्दार्थमाह,

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥

अत्र हि न तच्छब्दार्थप्रतीतिः, प्रतीतौ वा,

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्य्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥

अत्र स इत्यस्यानर्थक्यं स्यात् ।

---

(३२) अत्र अपाङ्गसंसर्गीति श्लोके ।

अथ

योऽविकल्पमिदमर्थमण्डलं पश्यतीश ! निखिलं भवद्वपुः।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्ते इति। उच्यते, तच्छब्दस्तत्रैव वाक्यान्तरे उपादानमर्हति न तत्रैव, यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति, यथा,

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥

इत्यत्र तच्छब्दः। ननु कथं

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते !
धुर्य्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥

अत्र यद्यदित्युक्त्वा तन्मे इत्युक्तम् ? (३४)। उच्यते, यद्यदिति येनकेनचिद्रूपेण स्थितं सर्व्वात्मकं वस्त्वाक्षिप्तं, तथाभूतमेव तच्छब्देन परामृश्यते (३५)।

---

(३४) यदि यच्छब्दस्य नियतमेव तच्छब्दसाकाङ्क्षता, तदा कथमत्र श्लोके निराकाङ्क्षतानिर्व्वाहः, अत्र हि एकेन तत्पदेन एकस्य यत्पदस्य निराकाङ्क्षत्वेऽपि द्वितीयस्य साकाङ्क्षत्वमस्त्येवेति पूर्व्वपक्षः।

(३५) पूर्व्वोपस्थितार्थपरामर्शकेन तत्पदेन पूर्व्वोक्तानां सर्व्वेषामेवाविशेषेण परामर्शसम्भवादत्रत्येन तत्पदेन एकेनापि यत्पदद्वयोक्तज्ञाताज्ञातरूपसर्व्वप्रकारं पापरूपं वस्तु परामृशता यद्यत्पदद्वयमेव निराकाङ्क्षीक्रियते इति

यथा वा,

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
माता, स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्य्यानुजोऽसौ, गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥

अत्रार्य्यस्येति तातस्येति च वाच्यं, नत्वनयोः समासे गुणीभावः कार्य्यः; एवं समासान्तरेष्वप्युदाहार्य्यम् । विरुद्धमतिकृद्यथा,

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः (३६) ॥

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धा प्रतीतिः (३७) ॥

पदैकदेशे यथासम्भवं क्रमेणोदाहरणम्,

अलमतिचपलत्वात्स्वप्नमायोपमत्वात्
परिणतिविरसत्वात्सङ्गमेनाङ्गनायाः ।

---

भावः । प्रदीपकृतस्तु 'यद्यदिति न पदद्वयं किन्तु नित्यवीप्सयोरितिसूत्रेण वीप्सायां यदो द्वित्वापन्नोऽयमादेशः, तथाचादेशिना यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण पापपरामर्शः, आदेशस्तु साकल्येन सम्बन्धपरतायाहकः, एकत्वैव तेन तदुपपत्तौ न तच्छब्देऽपि तदपेक्षा' इति प्राहुः ।

(३६) विरुद्धपक्षे गता असवः प्राणाः खानि इन्द्रियाणि च येषां ते ।

(३७) अमतपरार्थे विरुद्धोऽप्यर्थो विवक्षितः, प्रकाशितविरुद्धेऽर्थस्य व्यञ्जकत्वम् अत्र तु शब्दस्येति आभ्यामस्य भेद इति प्रदीपः ।

Digitized by Google

इति यदि शतकृत्वस्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

अत्र त्वादिति । यथा वा,

तद्गच्छ सिद्ध्यै कुरु देवकार्य्यमर्थोऽयमर्थान्तरलभ्य एव ।
अपेक्षते प्रत्ययमङ्ग लब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥

अत्र द्ध्यै ब्ध्यै इति कटु (३८) ।

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्तरागाम्
अकालसन्ध्यामिव धातुमत्ताम् ॥

अत्र मत्ताशब्दः क्षीवार्थे निहतार्थः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म्म (३९) कुरुते कामं कुरङ्गेक्षणा ॥

अत्र दृशामिति बहुवचनं निरर्थकं, कुरङ्गेक्षणाया

(३८) एकत्र पदे बहुवर्णानां कटुत्वे पददोषत्वं, तेन हि पदस्यैव कटुत्वप्रतीतेः, एकस्य वर्णस्य तथात्वे च पदैकदेशदोषत्वम् ।

(३९) धारायाः तैक्ष्ण्यार्थं शस्त्रं पङ्केन लिप्त्वाऽग्नौ सन्ताप्य पयसि निषिच्यते इति, एतदेव पानकर्म्मेत्युच्यते इति नागोजीभट्टाः ।

Digitized by Google

एकस्या एवोपादानात्, नचालसवलितेत्यादिवत् (४०) व्यापारभेदाद्बहुत्वं; व्यापाराणामनुपात्तत्वात्, न च, व्यापारेऽत्र हक्शब्दो वर्त्तते । अतैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम्, प्रधानक्रियाफलस्य कर्तृसम्बन्धे कर्त्रभिप्रायक्रियाफलाभावात् (४१) ।

चापाचार्य्यस्त्रिपुरविजयी, कार्त्तिकेयो विजेयः,
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।

---

(४०) अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः क्षणमतिसुखैर्लज्जालोलैर्निमेषपराङ्मुखैः । हृदयनिहितं भावाकूतं रमद्भिरिवेक्षणैः कथय सुकृती कोऽयं मुग्धे ! त्वयाद्य विलोक्यते इत्यत्रेवेत्यर्थः ।

(४१) प्रधानस्य मुख्यस्य क्रियाफलस्य (प्रकृते) सकलविलासिजनविजयरूपस्य, कर्त्तरि कुरङ्गेक्षणालक्षणे असम्बन्धेऽविद्यमानत्वे । ननु दीनं त्वामनुनाथते इत्यत्रेव च्युतसंस्कृतिरेवात्र दोष आस्तामिति चेत् । न, वैषम्यात् तथाहि, 'आशिषि नाथः' इति सूत्रेण आशिषि आत्मनेपदं नियमयता तद्भिन्ने याचनाद्यर्थे विवक्षिते आत्मनेपदं व्यवच्छिद्यते इति याचनार्थे प्रयुक्तं आत्मनेपदं च्युतसंस्कृतमस्तु, प्रकृते तु एकत्वादिसंख्याविशेषाविवक्षायां क्रियाफलस्य पराभिप्रेतत्वाद्यविवक्षायाञ्च प्रयुक्तं बहुवचनमात्मनेपदं च न च्युतसंस्कृतं, 'बहुषु बहुवचनम्' इत्यनेन 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनेन च सूत्रेण यथाक्रमं बहुषु बहुवचनं कर्त्रभिप्रेतक्रियाफले विवक्षिते आत्मनेपदञ्च नियमयता एकत्वादिविवक्षायां बहुवचनं, पराभिप्रेतक्रियाफलविवक्षायाञ्चात्मनेपदञ्च व्यवच्छिद्यते, न तु तत्तदविवक्षास्थलेऽपि तस्य तस्य व्यवच्छेदः, परन्तु तत्तदर्थाविवक्षायां तेषां प्रयोगो निरर्थक इति यथोक्तमेव सम्यक्, एवमेव प्रदीपः ।

Digitized by Google

अस्त्येवैतत्, किमु कृतवता रेणुकाकण्ठबाधाम्
बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः (४२) ॥

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः (४३) ॥

अतिपेलवमतिपरिमित-
वर्णं लघुतरमुदाहरति शठः ।
परमार्थतः स हृदयं
वहति पुनः कालकूटघटितमिव ॥ (व्रीड़ा०)

अत्र पेलवशब्दः ॥

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥ (जुगु०)

अत्र पूयशब्दः ॥

---

(४२) हन्तकारः षोड़शग्रासात्मिका भिक्षा, 'ग्रासप्रमाणा भिक्षा स्यादग्रन्त्वा तच्चतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः' इति मार्कण्डेयात् । पुरा किल परशुरामः कार्त्तिकं विजितवान्, कश्यपाय पृथिवीं दत्त्वा शस्त्रेण समुद्रमुत्सार्य्य तत्रावासं चकार, परशुना रेणुकानाम्नीं स्वमातरं जघान चेति पौराणिकी गाथा ।

(४३) अतीर्थे विहितेन यप्रत्ययेनातीतकालोपस्थापनासम्भवः । यप्रत्यय-मात्रगतत्वेनात्र पदैकदेशदोषोऽयम् । 'विदधदभिनवः इत्यादौ' तु धातूपसर्गयोः सम्बन्धात् सम्पन्नोऽयं दोषस्तदुभयगतत्वात् पददोषः ।

Digitized by Google

विनयप्रणयैककेतनं सततं योऽभवदङ्ग तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ।। (अमङ्ग०)

अत्र प्रेतशब्दः ।।

कस्मिन् कर्म्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ।।

अत्र किं पूर्व्वं साधुरुत साधुषु चरतीति सन्देहः (४४) ।।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोवाणैस्तेजो यस्य विभाव्यते ।। (नेया०)

अत्र वचःशब्देन गीःशब्दो लक्ष्यते । अत्र खलु न केवलं पूर्व्वपदं, यावदुत्तरपदमपि पर्य्यायपरिवर्त्तनं न क्षमते । जलध्यादावुत्तरपदमेव, वड़वानलादौ पूर्वपदमेव ।।

यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः ; तथाप्यन्यैरलङ्कारकारैर्विभागेन दर्शिता इति, भेदप्रदर्शनेनोदाहर्त्तव्या इति च विभज्योक्ताः (४५) ।।

---

(४४) अत्र चरभागो 'भूतपूर्व्वे चरट्' इति चरट्प्रत्ययः किंवा 'चरेष्टः' इति टान्तश्चरधातुः ? इति सन्देहादुक्तार्थसन्देहः ।

(४५) सामान्यतो विवक्षितार्थप्रतीतिसामर्थ्यविरहएवासामर्थ्यपदेनोच्यतां, स च अप्रयुक्तावाचकनिहतार्थसाधारण इति किमुक्तसूक्ष्मप्रभेदकरणेनेति पूर्व्वपक्षयित्वा, प्राचीनप्रणाल्यवलम्बनेन, शिष्याणां प्रभेदप्रदर्शनद्वारा उदाहरणज्ञापनानुरोधेन च एवं कृतमिति सिद्धान्तयति यद्यपीति ।

Digitized by Google

प्रतिकूलवर्णमुपहत-
लुप्तविसर्गं विसन्धि हतवृत्तम्।
न्यूनाधिककथितपदम्
पतत्प्रकर्षं समाप्तपुनरात्तम्॥ ५ ॥

अर्द्धान्तरैकवाचकम्
अभवन्मतयोगमनभिहितवाच्यम्।
अपदस्थपदसमासं
सङ्कीर्णं गर्भितं प्रसिद्धिहतम्॥ ६ ॥

भग्नप्रक्रममक्रमम्
अमतपरार्थं च वाक्यमेव तथा (४६)।

रसानुगुणत्वं वर्णानां वक्ष्यते, तद्विपरीतं प्रतिकूलवर्णं, यथा शृङ्गारे,

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि! माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर॥

रौद्रे यथा,

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः,
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।

(४६) इदमत्रावधेयम्. क्लिष्टत्वमिव प्रतिकूलवर्णादीनामपि केषाञ्चित् समासगतत्वेन पददोषत्वं सम्भवतीति प्रदीपः।

तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे,
यद्रामेण कृतं, तदेव कुरुते द्रोणात्मजः क्रोधनः ॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम् । (यथा,

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भव-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते (४७) ॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः । )

उपहत उत्वं (४८) प्राप्तो लुप्तो वा विसर्गो यत्र तत्,

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः (४९) ॥

विसन्धिः सन्धेर्वैरूप्यं,-विश्लेषो-(५०)-ऽश्लीलत्वं कष्टत्वञ्च ।

---

(४७) निशुम्भो नमनं । हरेण खपरशोरेकः खण्डः परशुरामाय दत्त इति चन्द्रिका ।

(४८) 'अतो रोरप्लुतादप्लुते' (६।१।११३ पा०) इति सूत्रेण उत्वप्राप्तिः ।

(४९) बुद्धिप्रभावयुक्ताः, (इतच्प्रत्ययः) । पूर्वार्द्धे उपहतविसर्गत्वं, उत्तरार्द्धे तु लुप्तविसर्गत्वमिति । उपहतविसर्गाणां लुप्तविसर्गाणाञ्च बहूनां मिलने दोषः ।

(५०) असन्धिरूपविश्लेषः पुनर्द्विविधः, 'वाक्ये तु सा विवक्षामपेक्षते' इत्यनुसारेण ऐच्छिकः, आनुशासनिकश्चेति, तत्रान्त्योऽपि प्रगृह्यहेतुकोऽसिद्धि-

Digitized by Google

आद्यं यथा,

राजन्विभान्ति भवतश्चरितानि तानि,
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः॥

यथा वा,

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः।
निजवंश उदात्तकान्तकान्तिर्वत मुक्तामणिवच्चकास्त्यनर्घः॥

(संहितां न करोमीति स्वेच्छया सकृदपि दोषः, प्रगृह्यादिहेतुकत्वे त्वसकृत्॥)

वेगादुड्डीय गगने चलण्डामरचेष्टितः।
अयमुत्पतते पत्री ततोऽत्रैव रुचिङ्कुरु (५१)॥

अत्र सन्धावश्लीलता॥

---

हेतुकश्चेति द्विविधः, तत्रोदाहृतपूर्व्वश्लोकस्य पूर्व्वार्द्धे तानि इन्दोरित्यत्रैच्छिककोटसन्धिः। उत्तरार्द्धे तु 'ईदूदेद् द्विवचनं प्रगृह्यम्' (१। १। ११) इत्यनेन द्विवचनस्य प्रगृह्यसंज्ञकस्य 'प्लुतः प्रगृह्या अचि नित्यम्' (६।१।१२५) इति सूत्रेण प्रकृतिवद्भावविधानात् प्रगृह्यहेतुकानुशासनिकोटसन्धिः। उत्तरश्लोके तु 'लोपः शाकल्यस्य' (८। ३। १९) इति सूत्रेण विहितस्यापि लोपस्य 'आद्गुणः' (६। १। ८७) इत्यनेन विहितं गुणं प्रति 'पूर्व्वत्रासिद्धम्' (८।२।१) इत्यनेनासिद्धिविधानादसिद्धिहेतुकोटसन्धिरिति।

(५१) नायकाधिष्ठितं सङ्केतस्थानं बोधयन्त्या दूत्या इयमुक्तिः। चलण्डेति जुगुप्साव्यञ्जकः, चिङ्कु इति व्रीडाव्यञ्जकः।

Digitized by Google

उर्व्वसावत्र तर्व्वाली मर्व्वन्ते चार्व्ववस्थितिः ।
नात्र्ज्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ।। (स०मु०क०)

इतं लक्षणानुसरणेऽप्यश्रव्यं (५२), अप्राप्तगुरुभावान्तलघु, रसाननुगुणञ्च वृत्तं यत्र, तत् हतवृत्तं ; क्रमेणोदाहरणम्,

अमृतममृतं कः सन्देहो मधुन्यपि नान्यथा,
मधुरमधिकं चूतस्यापि प्रसन्नरसम्फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु, यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात् ।।

अत्र यदिहान्यत्स्वादु स्यात् इत्यश्रव्यम् (५३) । यथा वा,

जो परिहरिउं तीरइ मणम्मि ण सुन्दरत्तणगुणेण ।
अह णवर जस्स दोसो पडिवक्खेहिम्पि पड़िवन्नो (५४) ।। [१]
अत्र द्वितीयतृतीयगणौ सकारभकारौ ।।

---

(५२) लक्षणं गुर्व्वादिनियामकम्, अपिशब्दात् तदननुसरणं समुच्चीयते । इतस्य अश्रव्यत्वञ्च छन्दोभङ्गात् यतिभङ्गात् स्थानविशेषे गणविशेषयोगाच्च, तत्राद्यं प्रसिद्धत्वादुपेक्ष्यान्त्ये उदाहृते ।

(५३) अत्र हि हरिणीच्छन्दसि 'वदतु यदिहा' इति षष्ठाक्षरस्थाने उचितायामपि यतिभंग्ना, षष्ठाक्षरस्य 'हा'-इत्यस्य परपदसम्बन्धापेक्षत्वात् । 'न स म र स ला गः षड्वेदैर्हयैर्हरिणी मता' इति हरिणीलक्षणम् ।

(५४) यः परिहर्त्तुं तीर्य्यते मनागपि न सुन्दरत्वगुणेन । अथ केवलं यस्य दोषः । प्रतिपक्षैरपि प्रतिपन्न इति सं० । णवरशब्दो केवलवाची, ऋपिरेवार्थः । अत्र आर्य्यायां द्वितीयस्य हरिउं इत्यन्तगुरोः सगणस्य, तृतीयस्य च तीरइ इत्यादिगुरोर्भगणस्य अव्यवधानादश्रव्यत्वमानुभविकम् ।

Digitized by Google

विकसितसहकारभारहारि-
परिमलपुञ्जितगुञ्जितद्विरेफः।
नवकिसलयचारुचामरश्री-
र्हरति मुनेरपि मानसं वसन्तः॥

अत्र हारिशब्दः, (हारि-प्रमुदितसौरभेति पाठो युक्तः)।

यथा वा,

धन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा,
सम्भाराः खलु तेऽन्य एव, विधिना यैरेष सृष्टो युवा।
श्रीमत्कान्तिजुषां द्विषां करतलात्, स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढ़मनसामस्त्राणि वस्त्राणि च॥

अत्र वस्त्राण्यपीति पाठे लघुरपि गुरुतां भजते (५५)॥ [२]

हा नृप! हा बुध! हा कविबन्धो! विप्रसहस्रसमाश्रय! देव!।
मुग्धविदग्धसभान्तररत्न! क्वासि गतः क्व वयञ्च तवैते॥ [३]

हास्यरसव्यञ्जकमेतद्वृत्तम् (५६)॥

---

(५५) प्रथमं पुष्पिताग्राहत्तं, 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा' इति तल्लक्षणम्। उत्तरन्तु शार्दूलविक्रीड़ितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितमिति तल्लक्षणम्। अत्र 'तथा पादान्तकोऽपि वा' इति गुरुत्वनियामकलक्षणानुसरणेऽपि बन्धशैथिल्यात् गुरुकार्य्यकरणाक्षमत्वेन दोषः, वस्त्राण्यपीति पाठे तु बन्धदार्ढ्येन गुरुभावप्राप्तिरिति न दोषः। तथा च पादान्तलघोर्गुरुत्वे बन्धदार्ढ्यमेव हेतुः।

(५६) करुणे पुष्पिताग्रादीनां, शृङ्गारादौ पृथ्वीस्रग्धरादीनां, वीरे शिखरिणीमन्दाक्रान्तादीनां, हास्ये च दोधकस्य आनुगुण्यमिति नागोजीभट्टाः।

न्यूनपदं यथा,

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां,
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतम्,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ! ॥

अत्रास्माभिरिति, 'खिन्ने'-इत्यस्मात्पूर्व्वमित्थमिति (५७) च ॥

अधिकं यथा,

स्फटिकाकृतिनिर्मलः प्रकामं
प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तः
प्रतिमल्लास्तमयोदयः स कोऽपि (५८) ॥

अत्राकृतिशब्दः ।

---

(५७) येन विना वाक्यत्वहानिः क्रियाकारकाद्यन्यतमरूपस्य तस्य पदस्य, तत् पदं यत् पदं विना साकाङ्क्षं, तस्य च अकथन एव न्यूनपदत्वं, यथोदाहरणे, अस्माभिरिति कारकपदस्य, खिन्ने इति कारकपदसाकाङ्क्षस्य इत्थमिति पदस्य चानभिधानम्। एतदतिरिक्तपदानभिधानं वाच्यानभिधानस्य विषयः । उभयत्रैव प्रकरणादितो विवक्षितार्थप्रतीतिर्भवति । साकाङ्क्षस्थले तु नैवमिति भेदः ।

(५८) प्रतिमल्लानामस्तमयस्य (पराभवस्य) उदयः प्रारम्भो यस्मात्, सः । पूर्व्वं केनाप्यपराभूतानामपि ततः पराभवारम्भ इत्यर्थः, स च उदयपदादेव लभ्यत इति नोदयपदव्यर्थता ।

यथा वा,

इदमनुचितमक्रमश्च पुंसां,
यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥

अत्र कृतमिति कृतं (५९), प्रत्युत प्रक्रमभङ्गमावहति । तथाच, यदपि च न कुरङ्गलोचनानामितिपाठे निराकाङ्क्षैव प्रतीतिः ॥ कथितपदं यथा,

अधिकरतलतल्पं कल्पितस्वापलीला-
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु ! कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् (६०) ॥

अत्र लीलेति ॥ पतत्प्रकर्षं यथा,

कः कः कुत्र न घुर्घुरायितघुरी घोरो घुरेच्छूकरः,
कः कः कं कमलाकरं विकमलं कर्त्तुं करी नोद्यतः ।

---

(५९) कृतं अधिकं कृतं ; पूर्व्वार्द्धे विकाररूपधर्म्मस्यानौचित्यमुक्तम् ; उत्तरार्द्धे तु जीवितरतयोर्धर्म्मियोः स्तनपतनावधित्वाकरणस्येति प्रक्रमभङ्गः । एवं यदपि चेतिसमुच्चयार्थकेण चकारेण समुच्चितमन्यत् किमपि न कृतमित्यनेनान्वेतुमाकाङ्क्षितमस्तीति ।

(६०) इदं स्मरः स्वेनाप्यवशीकृतां त्वां वशीकुर्व्वन्तं तं जनमवलोक्य अवश्यमेव रमणीजयलक्षणे स्वराज्येऽभिषेक्ष्यतीति भावः ।

के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ।।

समाप्तपुनरात्तं (६१) यथा,

क्रेङ्कारः स्मरकार्मुकस्य, सुरतक्रीड़ापिकीनां रवः,
झङ्कारो रतिमञ्जरीमधुलिहां, लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ।।

द्वितीयार्द्धगतैकवाचकशेषप्रथमार्द्धं यथा(६२),

मसृणचरणपातं गम्यतां, भूः सदर्भा,
विरचय सिचयान्तं मूर्ध्नि, घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिः शिक्षिता वीक्षिता च ।।

---

(६१) क्रियाकारकान्वयेन समाप्तेऽपि वाक्ये विशेषाभिधित्सां विना पुनस्तद्वाक्यान्वयिपदाभिधानं यत्र, तत् । तथाह्यस्योदाहरणे 'एतादृशः क्वाणः प्रेम तनोतु वः'-इत्यनेन वाक्यसमाप्तावपि पुनः तत्क्वाणस्य कर्त्तुः नवेत्यादि-विशेषणाभिधानं, न च तत्र विशेषणादानादन्यत् प्रयोजनमस्ति ।

(६२) द्वितीयार्द्धगतम् एकं वाचकं शेषम् (अवशिष्टम्) यस्य, तादृशं प्रथमार्द्धं यत्र, तत् ; यत्र प्रथमार्द्धगतवाक्यं, द्वितीयार्द्धगतेन एकेन पदेन परिपूर्य्यते ; तत् अर्द्धान्तरैकवाचकमिति फलितम् । तथाहि भूः सदर्भा ; तत् (तस्मात्) मसृणचरणपातं गम्यतामिति प्रथमार्द्धगतं वाक्यं, द्वितीयार्द्ध-गतेन तदित्यनेन परिपूर्य्यते इति ।

अभवन् मतः (इष्टः) योगः (सम्बन्धः) यत्न, तत् (९३), यथा,

येषान्ताखिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः चपाचारिणां,
किन्तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम्॥

अत्र "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात्"-इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन यैरित्यत्र विशेष्यस्याप्रतीतिरिति। (चपाचारिभिरिति पाठे युज्यते समन्वयः (९४))।

---

(९३) अत्र पदार्थयोरन्वयस्यैवासम्भवः; विधेयाविमर्षस्थले तु अन्वय-सम्भवेऽपि उद्देश्यविधेयभावानवगम इति भेदः।

(९४) गुणानामप्रधानानां, परार्थत्वात् प्रधानान्वयापेक्षित्वात्, असम्बन्धः परस्परमनन्वयः, समत्वात् प्रधानापेक्षित्वतौल्यात्। गुणानां परस्परमनाकाङ्क्षतया न परस्परमन्वयः, किन्तु प्रधानेनैव गुणानामिति सिद्धान्तः। प्रकृते तु यैरिति यदर्थस्य विशेष्यतया चपाचारिसम्बन्धो विवक्षितः; स च न घटते, विभिन्नविभक्तिकत्वात्। यदपि [ 'यो गुणवान् तस्य यशः' इत्यादौ यत्तदर्थयोरिव यदर्थयोरपि भिन्नविभक्तिकयोरभेदान्वयः स्वीक्रियतामिति येषां प्रतापोष्मभिः पीताः, यैः पानभुवः कल्पिताः, येषां हुङ्कृतय इति रीत्या सर्व्वेषामेव यदर्थानामभेदान्वये सति एकत्र चपाचारिपदार्थस्य विशेष्यत्वे सर्व्वत्रैव तस्य विशेष्यताप्रतीतिर्भवतीति]। तदपि न, यदर्थानामुद्देश्यतयाऽप्रधानानां परस्परमन्वयासम्भवादिति। चपाचारिभिरिति पाठे तु चपाचारिपदार्थस्य तैरिति तत्पदार्थविशेष्यतया प्रतीतौ तत्पदार्थानां सर्व्वेषामेव यदर्थानां विशेष्यताप्रतीतिः।

यथा वा,

त्वमेवं सौन्दर्य्या, स च रुचिरतायाः परिचितः,

कलानां सीमानं परमिह युवामेव भजथः।

अपि द्वन्द्वं दिष्ट्या तदिति सुभगे! संवदति वाम्,

अतः शेषं यत् स्याज्जितमिह तदानीं गुणितया (६५)॥

अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति। चेत्स्यादिति युक्तः पाठः। यथा वा,

संग्रामाङ्गणमागतेन भवता चापे समारोपिते

देवाकर्णय येन येन सहसा यद्यत्समासादितम्।

कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलं,

तेन त्वं, भवता च कीर्त्तिरतुला, कीर्त्त्या च लोकत्रयम्॥

अत्राकर्णनक्रियाकर्म्मत्वे कोदण्डं शरानित्यादि (६६),

(६५) तत् तस्मात्, इति एवंविधं, वां युवयोः, द्वन्द्वं मिथुनं, दिष्ट्या भाग्येन, संवदत्यपि योग्यमपि भवति, अतः पूर्व्वोक्तात्, शेषं अवशिष्टं, समागमरूपं, यदि स्यात्, तदानीम् इह द्वन्द्वे गुणितया सौन्दर्य्यादिना, जितम्, अन्यथा योग्यसमागमाभावे गुणवत्त्वमेव विफलमित्यर्थः। अत्र यत् शेषं, तत् यदा स्यादित्यर्थो न भवति तत्पदयदापदयोरभावादतो यदर्थस्य तदानींपदेनैवान्वयोऽभिधित्सितः, स च न सम्भवति यत्पदेन तदानींपदस्यान्वये निराकाङ्क्षत्वादिति।

(६६) अस्य प्राप्तमित्यनेनान्वयः। अत्र हि प्रथमार्द्धवाक्यार्थे उत्तरार्द्धस्य सम्बन्धो विवक्षितः, स च न सम्पद्यते, तथाहि आकर्णनक्रियायां कोदण्डादिप्रातिपदिकार्थानां प्रत्येकं कर्म्मतयाऽन्वये कोदण्डं शरानिति द्वितीया स्यात्। अथ [कोदण्डादीनां सर्व्वेषाम् परस्परमनन्वितानामपि एकदैव वाक्या-

वाक्यार्थस्य कर्म्मत्वे कोदण्डः शरादिति प्राप्तम् । नच यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि । नच केन केनेत्यादिप्रश्नः ।

यथा वा, "चापाचार्य्यस्त्रिपुरविजयी"-इत्यादौ भार्गवस्य निन्दायां तात्पर्य्यं, क्षतवतेति परशौ सा प्रतीयते (६७) । (क्षतवत इति तु पाठे मतयोगो भवति) । यथा वा,

चत्वारो वयमृत्विजः, स भगवान् कर्म्मोपदेष्टा हरिः,
संग्रामाध्वरदीक्षितो नरपतिः, पत्नी गृहीतव्रता ।

---

र्थविधया कर्म्मत्वमिति न द्वितीयाप्रसङ्गः, प्रातिपदिकादेव द्वितीयाविधानेन वाक्यात्तदसम्भवादिति चेत् ] । न, "यो यो वीरः समायातस्तांस्तान् शृणु महीपते ! । भीष्मो द्रोणो कृपः कर्णः सोमदत्तिर्धनञ्जयः"-इत्यादिवत् परस्परमनन्वितार्थकत्वात् कोदण्डादिशब्देभ्यः कोदण्डाः शरा इति प्रथमा स्यात् । यदपि [यच्छब्दस्य बुद्धिस्थवाचकतया कोदण्डादिपदार्थएव यच्छब्दार्थ इति यच्छब्दार्थस्य क्रियान्वये कोदण्डादीनामन्वयो लब्धव एवेति] । तन्न, एवं सति कोदण्डादीनां पुनरुपादानं व्यर्थं स्यात्, यच्छब्दस्य साकाङ्क्षत्वप्रसङ्गश्च । [अथ यदर्थयोः कर्तृकर्म्मणोर्व्विशेषणानि कोदण्डादीनीति चेत् । न, तथा सति येन कोदण्डेन यत् शराः समासादितं तदाकर्णयेति वाक्यार्थपर्य्यवसानेन पुनर्व्विशेषाकाङ्क्षाया अनिवृत्तेः, भिन्नविभक्तिकतया यत् शराः समासादितमित्यन्वयासम्भवाच्च । [ननु येन यदिति सामान्यतोऽवगमेन केन केन किं किमिति विशेषप्रश्ने सति तदुत्तरतया कोदण्डेन शरा इत्युत्तराद्ध मुक्तमिति] । न, प्रश्नवाचकपदाभावात्, येन येन यत् यदासादितं तदाकर्णयेतिप्रतिज्ञयैव कोदण्डादीनामुक्तत्वादिति ।

(६७) अत्र परशुनिन्दामुखेन भार्गवनिन्दायां वैदग्ध्यातिशय इति तदेवाभिप्रेतमिति न वाच्यं, यथा स्वर्द्धायोग्यत्वोपपत्तये परशुस्वामिनः शिवशि-

Digitized by Google

कौरव्याः पशवः, प्रियापरिभवक्लेशोपशान्तिः फलं,
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते । यथा वा,

अङ्गाकाण्डोत्थनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

अत्र दण्डपादगता निजतनुः प्रतीयते, भवान्याः सम्बन्धिनी तु विवक्षिता (६८) ॥

अवश्यंवक्तव्यमनुक्तं यत्र, यथा,

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैरपहृतस्य तथापि नास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥

अत्रापहृतोऽस्मीत्यपहृतत्वस्य विधिर्वाच्यः । तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः (६९) ।

---

यत्वादीनि विशेषणानि, तथा तदयोग्यत्वप्रतिपादनाय तस्यैव कश्चिद्धर्मो वक्तुमुचितः, अन्यथा प्रक्रमभङ्गः स्यादिति, यथोक्तमेव सम्यक् ।

(६८) 'समम्बन्धिकानां निजादिपदार्थानां क्रियान्वयिकारकपदार्थ एवान्वयः' इतिनियमेन निजपदार्थस्य दण्डपाद एवान्वयः स्यादिति ।

(६९) तथापीति तच्छब्दार्थः पूर्ववाक्योक्तं किमप्यर्थमपेक्षते इति पृथक्-

यथा वा,

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्त्ती।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय॥

अत्र मनोरथानामपि दूरवर्त्तीत्यप्यर्थो वाच्यः। यथा वा,

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः।
कमपराधलवं मम पश्यसि? त्यजसि मानिनि! दासजनं यतः॥

अत्रापराधस्य लवमपीति वाच्यम्॥

अस्थानस्थपदं यथा,

प्रियेण संग्रथ्य विपक्षसन्निधौ
उपाहितां वक्षसि पीवरस्तने।
स्रजन्न काचिद्विजहौ जलाविलां,
वसन्ति हि प्रेम्णि गुणा न वस्तुनि॥

अत्र काचिन्न विजहाविति वाच्यम् (७०)। यथा वा,

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम्।

---

वाक्यसम्पादयित्री प्रथमा विभक्तिरत्रावश्यंवाच्या। अत्र विधेयाविमर्षाभव-न्मतयोगावपि स्तः।

(७०) यथाश्रुते, न काचित् विजहौ, अपि तु, सर्व्वा एव विजह्रुरिति प्रतीयेत।

Digitized by Google

पार्व्वत्या नखलक्ष्मशङ्कितसखीनर्म्मस्मितव्रीड़या
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ।।

अत्र नखलक्ष्मेत्यतः पूर्व्वं कुटिलाताम्रेति वाच्यम् ।।

अस्थानस्थसमासं यथा,

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ।।

अत्र क्रुद्धस्योक्तौ समासो न कृत, कवेरुक्तौ तु कृतः ।।

संकीर्णं, यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति । यथा,

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ।।

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं मुञ्चेति । (एकवाक्यतायान्तु क्लिष्टमिति भेदः )।।

गर्भितं, यत्र वाक्यस्य (७१) मध्ये वाक्यान्तरमनुप्रविशति ।

---

(७१) वाक्यस्य स्वभावत एकवाक्यस्य, वाक्यैकवाक्यताक्रमेण एकवाक्यतापन्नस्य वा वाक्यसमुदायस्य ; यथाक्रममुदाहरणद्वयम् ।

Digitized by Google

यथा,

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।<br>
'वदामि भवतस्तत्त्वं' न विधेया कदाचन ॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः । यथा वा,

लग्नं रागावृताङ्ग्या सुदृढ़मिह ययैवासियष्ट्यारिकण्ठे,<br>
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।<br>
तत्सक्तोऽयं न किञ्चिद्गणयति, विदितं तेऽस्तु, तेनास्मि दत्ता<br>
भृत्येभ्यः, श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्त्तिः ॥

अत्र विदितं तेऽस्त्विति, एतत्कृतं (७२), प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत् ॥

"मञ्जीरादिषु रणितप्रायं, पक्षिषु च कूजितप्रभृति, स्तनितमणितादि सुरते, मेघादिषु गर्जितप्रमुखम्"-इति प्रसिद्धिमतिक्रान्तं, यथा,

महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-<br>
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।<br>
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः<br>
कुतोऽद्य समरोदधेरयमभूतपूर्व्वः पुरः ॥

---

(७२) 'कृतं' प्रयोजनं विनैव गर्भितं कृतं । 'विदितं तेऽस्तु'-इत्यनेनार्थशक्तिमहिम्ना 'उत्तरकालं पतिपरित्यागोत्थमपराधं त्वं माऽभिदध्याः-इति पूर्व्वमेव मया पत्यसद्वृत्ततां ज्ञापितस्त्वम्' इत्यर्थाभिव्यक्तिद्वारा ततोऽपसरतीति व्यज्यते इति भावः ।

Digitized by Google

अत्र रवो मण्डूकादिषु प्रसिद्धो नतु क्षविशेषणाके सिंहनादे ॥ भग्नः प्रक्रमः (प्रस्तावः(७३) ) यत्र, यथा,

नाथे निशायाः नियतेर्नियोगात्
अस्तं गते हन्त निशाऽपि याता ।
कुलाङ्गनानां हि दशानुरूपं
नातः परं भद्रतरं समस्ति ॥

अत्र गतेतिप्रक्रान्ते यातेतिप्रकृतेः । (गता (७४) निशाऽपीति तु युक्तम्) । [ ननु 'नैकं पदं द्विःप्रयोज्यं प्रायेण'-इत्यन्यत्र(७५), कथितपदं दुष्टमिति चेहैवोक्तं, तत्कथमेकस्य पदस्य द्विःप्रयोगः ]। उच्यते, उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य (७६), तद्वति विषये प्रत्युत तस्यैव पदस्य सर्व्वनाम्नो वा प्रयोगं विना दोषः ।

---

(७३) प्रस्तावः उपक्रमः, येन क्रमेणोपक्रमः तेनोपसंहार इति नियमस्य भङ्ग इत्यर्थः, ।

(७४) अत्र हि, विभिन्नशब्दाभ्यां गम-या-प्रकृतिभ्यामुपस्थित एकोऽप्यर्थो भिन्नवदापाततो भातीति । अत्र 'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते' इति हरिवाक्यानुसारेण, ज्ञाने शब्दस्यापि भानमङ्गीकुर्व्वन्तः केचन यथाश्रुतमेव ग्रन्थं सङ्गमयन्ति । अस्मिन् मते, सर्व्वनाम्ना पूर्व्वपदविशिष्ट एवार्थः परामृश्यते, एवमेव नागोजीभट्टाः ।

(७५) अन्यत्र वामनसूत्रे ।

(७६) प्रतिनिर्द्देश्यमिति आवश्यके यत्प्रत्ययः । (उद्देश्यः) निर्द्देश्योऽर्थः, (प्रतिनिर्द्देश्यः) पुनरप्यवश्यंवक्तव्यो यत्र, तस्मादतिरिक्तः, पूर्व्वापरयोरैकरूप्यरक्षार्थं यत्र पूर्व्वनिर्द्दिष्टस्यार्थस्य तेन शब्देन तेन च क्रमेण पुनर्निर्द्देशावश्यकत्वं

Digitized by Google

तथाहि,

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता॥

अत्र, रक्त एवास्तमेतीति यदि क्रियेत, तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति। यथा वा,

यशोऽधिगन्तुं, सुखलिप्सया वा,
मनुष्यसङ्ख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः॥

अत्र प्रत्ययस्य। (सुखमीहितुं वेति युक्तः पाठः।)

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥

अत्र सर्व्वनाम्नः। (अनेन विसृष्टा इति तु वाच्यम्।)

---

तदन्यत्र दोष इति फलितोऽर्थः। तस्यावश्यकत्वञ्च कुत्र भवति कुत्र वा नेत्यत्र विद्वदनुभव एव प्रमाणम्। तथापि किञ्चित् संक्षिप्योच्यते, वाक्यद्वये यद्येकस्य उद्देश्यत्वं, विधेयत्वं वा स्यात्, यदि वा पूर्व्वस्मिन् विधेयस्य उद्देश्यस्य वा परस्मिन् उद्देश्यत्वं विधेयत्वं वा भवेत्, तदा तदावश्यकम्। यथा उदेति सवितेत्यादौ उभयत्रैव सवितुरुद्देश्यत्वं ताम्रत्वस्य विधेयत्वं। कोदण्डेन शरा इत्यादौ पूर्व्वत्र विधेयस्य शरादेः परस्मिन् वाक्ये उद्देश्यत्वम्। एवं 'चन्द्रायते शुक्लरुचापि हंसः, हंसायते चारुगतेन कान्ता' इत्यादौ पूर्व्ववाक्ये उद्देश्यस्य हंसस्य परस्मिन् विधेयतेति। उद्देश्यविधेयान्तर्गतानामपि उद्देश्यविधेयत्वं वाच्यम्।



Digitized by Google

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥

अत्र पर्य्यायस्य । (महीभृतोऽपत्यवतोऽपीति युक्तम्(७७)। )

अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूदिति केचित्समर्थयन्ते (७८) ।

विपदोऽभिभवन्त्यविक्रमं, रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥

अत्रोपसर्गस्य पर्य्यायस्य च । (तदभिभवः कुरुते निरायतिं, लघुतां भजते निरायतिः, लघुतावान्न पदं नृपश्रियः इति युक्तम् (७९) । )

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीः,
अश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः, प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्य्यः शशंसुः ॥

अत्र वचनस्य । (काश्चित्कीर्णा रजोभिर्दिवमनुविदधु-

---

(७७) अत्र पुत्रापत्यशब्दौ पुत्रकन्योभयसाधारणौ। पुत्रा अस्य सन्तीति बहुत्वविवक्षायां मतुप् ।

(७८) केचिदित्यस्वरसः, दृष्टान्ते प्रदर्शितस्य सामान्यविशेषभावस्य दार्ष्टान्तिकेऽपि प्रदर्शयितुमुचितत्वादिति ।

(७९) प्रकृतदोषजिहीर्षयैव कल्पितेऽस्मिन् पाठे छन्दोभङ्गो न दोषाय निर्दोषवाक्यमात्रसमर्थनपरत्वादस्य ।

Digitized by Google

र्मन्दवक्त्रेन्दुशोभा निःश्रीका इति, कम्पमाना इत्यत्र कम्पमापुरिति च (८०) पठनीयम्। )

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितम्,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रान्तिं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥

अत्र कारकस्य। (विस्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिमित्यदुष्टम्। )

अकलिततपस्तेजोवीर्य्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति।
अभिनवधनुर्व्विद्यादर्पक्षमाय च कर्म्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च (८१)॥

अत्र क्रमस्य, पादोपसंग्रहणायेति पूर्वं वाच्यम्। एवमन्यत्राप्यनुसर्त्तव्यम्॥ अविद्यमानः क्रमो यत्र (८२), यथा,

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।

---

(८०) अन्यथा आख्यातप्रक्रमभङ्गः स्यादिति प्रसङ्गादुक्तम्।

(८१) अकलितः अपरिमितः। प्रथमद्वितीयपादार्थौ यथाक्रमं पादग्रहणधनुराकर्षणयोर्हेतू, इति तन्निर्द्देशक्रमेणैव निर्द्देशो युक्तः।

(८२) पदसन्निवेशरूपरचनायाः प्रस्तुतार्थस्याप्रत्यायकत्वे अक्रमत्वं, प्रत्यायकत्वेऽप्यनौचित्येऽस्थानस्थपदता, अर्थक्रमस्यानौचित्ये तु दुष्क्रमत्वम्, उपक्रमोक्तक्रमस्योपसंहारे भङ्गे प्रक्रमभङ्ग इत्येतेषां भेदः।

Digitized by Google

कला च सा कान्तिमती कलावतः,
त्वमस्य लोकस्य च नेत्रकौमुदी ॥

अत्र त्वंशब्दानन्तरं चकारो युक्तः। यथा वा,

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले, नाथ! दोषाकरश्री-
र्वक्त्रे, पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः।
आज्ञेयं सर्व्वगा ते विलसति च पुनः, किं मया वृद्धया ते,
प्रोच्येवेत्थं, प्रकोपाच्छशिकरसितया यस्य कीर्त्त्या प्रयातम्(८३)॥

अत्र इत्थं प्रोच्येवेति न्याय्यम्। तथा, लग्नं रागावृता-
ङ्ग्येत्यादौ इतिश्रीनियोगादिति वाच्यम्॥

'अमतः' प्रकृतविरुद्धः (८४) परार्थो यत्र, यथा,

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा॥

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः॥

---

(८३) निस्त्रिंश-दोषाकर-कुट्टिनी-सर्व्वगा-वृद्धा-प्रयातशब्दाः यथाक्रमं खड्ग-चन्द्र-च्छेदिका-सर्व्वविख्याता-महती-प्रकृष्टगमनार्थका अपि शब्दशक्तिमहिम्ना त्रिंशाधिक-दोषनिधान-जारयोजयित्री-कुलटा-जरती-पलायनरूपानर्थाननु-पस्थापयन्ति।

(८४) प्रकृतविरुद्धः प्राकरणिकरसादिप्रतिकूलः, परार्थः रसादिरूप-व्यङ्ग्यार्थो यत्र तदिति। (परार्थः नतु वाच्यार्थ इति प्रतिकूलविभावादि-ग्रहाद्भेदः।) 'द्वयौ शृङ्गारबीभत्सौ, तथा वीरभयानकौ। रौद्राद्भुतौ, तथा हास्यकरुणौ वैरिणौ मिथः' इति।

अर्थदोषानाह,

अर्थोऽपुष्टः कष्टो
व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ७ ॥
सन्दिग्धो निर्हेतुः
प्रसिद्धिविद्याविरुद्धश्च ।
अनवीकृतः सनियमा-
नियमविशेषाविशेषपरिवृत्ताः ॥ ८ ॥
साकाङ्क्षोऽपदयुक्तः
सहचरभिन्नः प्रकाशितविरुद्धः ।
विध्यनुवादायुक्त-
स्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ९ ॥

दुष्ट इति सम्बध्यते । क्रमेणोदाहरणम्,

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥

अत्र अतिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः, न त्वसङ्गताः पुनरुक्ता वा (८५) ॥

---

(८५) अत्र अतिविततत्वमतिविस्तीर्णत्वं वृहदाकारत्वमिति यावत् (न तु दीर्घत्वम्) । गगनसञ्चार एव श्रमहेतुर्न तत्रातिविततत्वं सरणित्वञ्चोपयुज्यते । एवं मरुदुल्लासितेत्यादावपि । [नन्वेवं चेत्, अतिविततत्वादि हेतुगर्भविशेषणतया स्वरूपविशेषणतया वात्राभिप्रेतम् ? आद्ये अप्रसिद्धिः, द्वितीये गगन-

**सदा मध्ये यासामियममृतनिष्यन्दसरसा**

**सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।**

प्रसादं ता एता घनपरिचिताः केन महतां

महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः (८६) ॥

अत्र यासाङ्कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा (८७) भारती चमत्कारं वहति, ताः गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु ; यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति सङ्क्षेपार्थः (८८) ॥

---

स्यातिविततत्वम् अग्नेरौष्ण्यमिव प्रसिद्धत्वात् प्राप्तमेवेति तत्कथने पुनरुक्तिदोषः] इति तु न वाच्यं, पूर्व्वोक्तस्य पुनरुक्तिरेव पुनरुक्तिर्नतु पूर्व्वप्राप्तस्यार्थस्यापीति भावः । प्रयोजनान्तराभावात्तदर्थाविवक्षायामपि तत्पदाभिधानेऽधिकपदत्वं, स्वरूपकथनार्थं प्रस्तुतानुपयोगिनोऽप्यर्थस्य विवक्षायामपुष्टार्थत्वमित्यनयोर्भेदः ।

( ८६ ) स्वकाव्यस्य गभीरार्थकतयाऽस्फुटार्थत्वमप्यदूष्यमिति समर्थयितुं कस्यचिदुक्तिरियम् । प्रकृतपक्षे रुचयोऽभिप्रायाः, प्रसादं स्फुटतां यान्त्वित्यन्वयः । अप्रस्तुतपक्षे सरस्वती नदी, परिमलः सम्बन्धः ( परिगतो मलो यस्यां क्रियायामिति व्युत्पत्त्या परिमलं सकलुषं वा क्रियाविशेषणं) प्रसादः स्वच्छकान्तिता ।

( ८७ ) वैदर्भीगौड़ीपाञ्चाल्याख्यरीतित्रयवती ।

**(८८) आदित्यप्रभारूपो द्वितीयोऽर्थः उपमानं, तेन सह वाच्यार्थस्य उपमा व्यङ्ग्या । अत्र हि विवक्षितार्थः शब्दान्तरेणोपनिबध्यमानोऽपि क्लेशेनैव प्रतीयते ; क्लिष्टादौ तु शब्दान्तरेण अन्वयान्तरेण वा विवक्षितार्थः सुखेनैव प्रतीयत इति भेदः ।**

Digitized by Google

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये, मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं, जन्मन्येकः स एव महोत्सवः॥

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिका-त्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् (८९)॥

कृतमनुमतमित्यादि,

अत्रार्जुनार्जुनेति (९०) भवद्भिरिति चोक्ते सभीमकिरी-टिनामिति किरीटिपदार्थः पुनरुक्तः। यथा वा,

अस्त्रज्वालावलीढ़प्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि, गुरौ सर्व्वधन्वीश्वराणाम्।
कर्णालं सम्भ्रमेण, व्रज कृप! समरं, मुञ्च हार्द्दिक्य! शङ्काम्,
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः॥

भूपालरत्न! निर्द्दैन्यप्रदानप्रस्तुतोत्सव!।
विश्राणय तुरङ्गं मे, मातङ्गं वा मदालसम्॥ (तुष्क्र०)

अत्र मातङ्गस्य प्राङ्निर्द्देशो युक्तः॥

---

(८९) पस्पशप्रायाः तुच्छप्रायाः। 'उत्कर्षो वाऽपकर्षो वा प्राग्यस्यैव निगद्यते। तस्यैवाथ तदन्यस्येत् व्याहतोऽर्थस्तदा भवेत्' इति।

(९०) अर्जुनं सम्बोध्य यैर्भवद्भिस्तेषामित्यनेन किरीटिपदार्थस्यार्ज्जुनस्योक्तेः।

Digitized by Google

स्वपिति यावदयं निकटे जनः,
स्वपिमि तावदहं, किमपैति ते ।
तदपि साम्प्रतमाहर कूर्परं
त्वरितमूरुमुदञ्चय कुञ्चितम् ।। (ग्रा०)

एषोऽविदग्धः ।।

मात्सर्य्यमुत्सार्य्येत्यादि,

अत्र प्रकरणाद्यभावे सन्देहः (शान्तशृङ्गार्य्यन्यतराभिधाने तु निश्चयः ) ।।

गृहीतं येनासीः परिभवभयान्नोचितमपि,
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्,
विमोक्ष्ये शस्त्र ! त्वामहमपि, यतः स्वस्ति भवते ।।

अत्र शस्त्रमोचने हेतुर्नोपात्तः ।।

इदन्ते केनोक्तं कथय कमलातङ्कवदने !
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ।।

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् । यथा वा,

उपपरिसरं गोदावर्य्याः परित्यजताध्वगाः !
सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम् ।

Digitized by Google

इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः।

(सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः।
तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः ॥

अत्रामूर्त्ताऽपि कीर्त्तिः ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् (८१)।)

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥ (वि०वि०)

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्म्मशास्त्रेण विरुद्धम्।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते।
षाड्गुण्यानुसृतिस्तस्य (८२) सत्यं सा निष्प्रयोजना ॥
एतत् अर्थशास्त्रेण।

---

(८१) एवञ्च लोकविरुद्धस्यापि कविसमयप्रसिद्धिविरोधएव दोषः।

(८२) सन्धिविग्रहयानासनद्वैधसंश्रवाः षट्। षाड्गुण्यमिति स्वार्थे ष्यञ्।



Digitized by Google

विधायं दूरे केयूरमनङ्गाङ्गणमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥

अत्र, केयूरपदे नखक्षतं न विहितमिति, एतत्कामशास्त्रेण ।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः (९३) ॥

अत्र, विवेकख्यातिस्ततः सम्प्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ, एतत् योगशास्त्रेण । एवं विद्यान्तरैरपि विरुद्धमुदाहार्य्यम् ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किम्,
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं,
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

अत्र ततः किमिति न नवीकृतम् (९४) ।

---

(९३) यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टौ अङ्गानि । दुःसाधाया दुःप्राप्यायाः सिद्धेः शक्तेर्मुक्तेर्वा सविधं निकटस्थितं पुरुषमात्रविश्रान्तमनोवृत्तिविशेषरूपमसंप्रज्ञातसमाधिम् । विवेकख्यातिं प्रकृतिपुरुषयोर्भेदज्ञानम् ।

(९४) भङ्ग्यन्तरेण निर्देशस्य नवीकृतत्वम् । किं ततः इत्यत्र 'किं तस्मात्'-इत्यादिक्रमेण शब्दपरिवर्त्तनेऽपि उत्कर्षान्तराभावात् अनवीकृतत्वमिति कथितपदात् भेदः ।

Digitized by Google

(तत्तु यथा,

यदि दहत्यनलोऽत्र किमद्भुतं, यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता ॥)

यत्रानुल्लिखिताख्यमेव निखिलं निर्म्माणमेतद्विधेः,
उत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पदः,
तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम्(९५)॥

अत्र, छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचितेति सनियमत्वं वाच्यम् (९६)॥

वक्त्राम्भोजं सरस्वत्यधिवसति सदा, शोण एवाधरस्ते,
बाहुः काकुत्स्थवीर्य्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं,
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते! तेऽम्बुपानाभिलाषः?॥

अत्र शोण एवेति नियमो न वाच्यः (९७)॥

---

(९५) चिन्तामणेराभासेनैव मणीकृतैः पाषाणैः सह चिन्तामणेर्गणने चिन्तामणेरेव वरं पाषाणत्वमस्तु, तेषान्तु मणित्वमिति सोपहासोक्तिः।

(९६) सनियमोक्तौ हि कारणान्तरव्यवच्छेदेन पाषाणानां निन्दातिशयः प्रतीयते। अर्थविशेषस्य विवक्षितत्वेऽपि तत्प्रतिपादकपदानभिधाने न्यूनपदत्वानभिहितवाच्यते दोषौ, अतएव तौ शब्दगतौ, अर्थविशेषाविवक्षायान्तु अयमिति भेदः।

(९७) अर्थविशेषाविवक्षायां अधिकपदत्वं विवक्षायां तु अयमिति भेदः।

Digitized by Google

श्यामां श्यामलिमानमानयत भोः! सान्द्रैर्मसीकूर्चकैः,
मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम्।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके,
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः (९८)॥

अत्र ज्योत्स्नीमिति श्यामाविशेषो वाच्यः॥

कल्लोलवेल्लितदृषत्परुषप्रहारै-
रत्नान्यमूनि मकरालय! माऽवमंस्थाः।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि॥

अत्र, एकेन किं न विहितो भवतः स नामेति सामान्यं वाच्यम् (९९)॥

---

प्रस्तुतोत्कर्षापकर्षयोरनुपयोगिनि स्वरूपकथन एवापुष्टत्वं, अयञ्च प्रकृतापकर्षे स्वरूपकथनाभावेऽपि च भवतीति भेदः। तथाहि शोणा एवेति नियमनेऽन्य-जलाशयानात्मकत्वप्रतीतौ पिपासानौचित्यातिशयाप्रतीत्याऽपकर्षः, भेदश्च स्वरूपकथनम्।

(९८) विद्धशालभञ्जिकायां विद्याधरमल्लदेवस्येयमुक्तिः। श्यामा रात्रिः। कूर्चकैस्तूलिकाभिः। तन्त्रम् औषधं। मुद्राङ्कः (अन्यसम्पर्कादप-रत्र समुद्भूतं चिह्नं मुद्राङ्कः) जातो यासु, ताः; चिन्तोपनीतां तां दिक्षु पश्यतो मम उद्दीपका एते प्रतिबन्धकायन्तेऽतस्तानपहरत इतिभावः।

(९९) यथाश्रुते कौस्तुभमात्रस्योपकारकत्वेनान्यावमाननिषेधहेत्वनव-गमः। एकेनेति पाठे तु भेदानवगमाद्दोषः।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः, प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।
उत्कर्षञ्च परस्य, मानयशसोर्विस्रंसनं चात्मनः,
स्त्रीरत्नञ्च जगत्पतिर्दशमुखो देवः कथं मृष्यते? ॥

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति। नहि परस्येत्यनेन सम्बन्धो योग्यः (१००)॥

आज्ञा शक्रशिखामणिप्रणयिनी, शास्त्राणि चक्षुर्नवं,
भक्तिर्भूतपतौ पिनाकिनि, पदं लङ्केतिदिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च, तदहो! नेदृग्वरो लभ्यते!
स्याच्चेदेष न रावणः, क्व नु पुनः सर्व्वत्र सर्व्वे गुणाः॥

अत्र स्याच्चेदेष न रावण इत्यत एव समाप्यम् (१०१)।

---

(१००) नहि उपादेये स्त्रीरत्नेऽमर्षसम्भवः, किन्तु तदुपेक्षायामिति। यदप्युच्यते,-[परस्येत्यनेनान्वयात् परस्त्रीष्वमर्षो युज्यत एवेति]। तन्न, परस्येत्यस्य जनितान्वयतया, आत्मन इत्यनेन व्यवहिततया च पुनरन्वयायोगात्। अत्र परस्येति पदं वा उपेक्षितुमिति वा अन्यद्वा किमपि पदं कल्प्यमिति नियमाभावात् विवक्षितप्रतीतिविरहो दूषकताबीजम्।

(१०१) यत्र यदभिधानं विवक्षितप्रतीतिविघटकं तादृशेऽनुप्रयुक्ते स्थाने तदभिधानम् अपदयुक्तता, यथोदाहरणे, स्याच्चेदेष न रावण इत्यनन्तरं क्व नु पुनरित्याद्यभिधानं समाधाने पर्य्यवस्यत् रावणस्य त्याज्यत्वप्रतीतिं स्थगयति। प्रकाशितविरुद्धेऽर्थस्य नाभिधानं नवा विवक्षितप्रतीतिप्रतिरोधः, इत्यनयोर्भेदः। केचित्तु अपदमुक्तनामाऽयं दोष इति वदन्ति।

Digitized by Google

श्रुतेन बुद्धिर्व्यसनेन मूर्खता,
मदेन नारी, सलिलेन निम्नगा ।
निशा शशाङ्केन, धृतिः समाधिना,
नयेन चालङ्क्रियते नरेन्द्रता ॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् (१०२) ॥

लग्नं रागावृताङ्ग्येत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते (१०३) ॥

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिनाम्,
अपैतु रिपुकाननातिगुरुरद्य भारो भुवः (१०४) ॥

अत्र शयितः प्रयत्नेन बोध्यसे इति विधेयम् । यथा वा,

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं,
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।

---

(१०२) सहचरितानां हि प्रायश ऐकरूप्येण सर्व्वेषाम् उपादेयत्वं हेयत्वं वा प्रतीयेत, एतदेव दूषकताबीजम् ।

(१०३) यथा च विरुद्धं प्रकाश्यते, तथोक्तं प्राक् (१६७) ।

(१०४) शेषे इति क्रियापदम् । शयितो हि बोध्यते, न तु बोधितः शेते । विधेयाविमर्षे विधेयतया विवक्षितस्य विधेयत्वेनानवगमः, अत्र तु विधातुमनुचितस्य विधानमित्यनयोर्भेदः ।

Digitized by Google

तेऽपि क्रूरचमूरुचर्म्मवसनैर्नीताः क्षयं लुब्धकैः,
दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते (१०५)॥

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ॥

अरे रामाहस्ताभरण! भसलश्रेणिशरण!
स्मरक्रीडाव्रीडाशमन! विरहिप्राणदमन!।
सरोहंसोत्तंस! प्रचलदल नीलोत्पल! सखे!
सखेदोऽहं, मोहं श्लथय, कथय, क्वेन्दुवदना?॥

अत्र विरहिप्राणदमनेति नानुवाद्यम्॥

लग्नं रागावृताङ्ग्येत्यादि,

अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः (१०६)॥

---

(१०५) दम्भस्य परापकाराद्यसत्फलाभिसन्धानपूर्व्वकधर्म्माचरणरूपकापट्यस्य स्फुरितं विश्वव्यापित्वम्। गुणान् धार्म्मिकत्वादीन् ईहते सम्भावयति, अर्थात् जनेषु। सर्व्व एव दुरभिसन्धिपूर्व्वकमेव धर्म्मं कर्म्मानुतिष्ठन्ति, न तु धर्म्मबुद्ध्या, इत्यधार्म्मिका एव सर्व्वे इति चतुर्थपादतात्पर्य्यार्थः, एष एवार्थः पादत्रयेण समर्थितः, एवञ्च जगत् निःशेषयितुं वाताहारः स्वीकृतः, तान् ग्रसितुमम्भःकणिकाव्रतमङ्गीकृतं, तान् क्षयं नेतुं चर्म्मवसनं स्वीकृतमितिरीत्या असदभिसन्धिपूर्व्वकधर्म्माचरणमेव विधातुमुचितमिति तदन्यथाभावात् दोषः। यथाश्रुतहृद्यनुसारिणस्तु मृगचर्म्मवसनं मेघतोयकणिकापानं वायुभक्षणञ्च यथोत्तरं तीव्रमिति तत्क्रमेण विधिर्युक्तः न तु अन्यथेति, एतदेव व्युत्क्रमविधानमित्याहुः।

(१०६) क्रियाकारकान्वयेन निराकाङ्क्षतया समाप्तेऽपि वाक्ये पुनः कारकान्तराभिधानं त्यक्तपुनःस्वीकृतत्वं, यथोदाहरणे, न किञ्चिद्गणयती-

Digitized by Google

इन्दुमेव प्रवृत्तस्य सम्बस्य विपरीतिषः ।
यथाऽम्बु जायते पातो न तथा पुनरुन्नतिः ॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति, तथापि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतम् ।

कर्णावतंसादिपदे
कर्णादिध्वनिनिर्म्मितिः (१०७) ।
सन्निधानादिबोधार्थम् ;

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते, तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये, यथा,

अस्याः कर्णावतंसेन जितं सर्व्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥
अपूर्व्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥

अत्र कर्णश्रवणशिरःशब्दाः सन्निधानप्रतीत्यर्थाः (१०८) ॥

---

त्यत्तेन कर्म्मकारकेण विदिक्रियान्वये समाप्तेऽपि भक्त्येभ्य इत्यादिना पुनः कर्म्मकारकाभिधानम् । समाप्तपुनरात्ते तु पूर्व्वोक्तस्यैव कारकस्य विशेषणदानमिति भेदः ।

(१०७) ध्वनिः शब्दः, निर्मितिः प्रयोगः ।

(१०८) तया च प्रतीत्या अवतंसादेः स्वरूपतो न जेतृता, किन्तु अस्याः कर्णादिस्थित्या इति अवगम्यते, तदवगमे च वर्णनीयावा उत्कर्षः ।

विद्दीर्णाभिमुखारातिकराले सङ्गरान्तरे।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव॥

अत्र धनुःशब्द आरूढ़त्वावगतये। (अन्यत्र तु,

ज्याबन्धनिस्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण।
काराग्टहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादात्॥

-इत्यत्र केवलो ज्याशब्दः।)

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् (१०९)॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः।

सौन्दर्य्यसम्पत्, तारुण्यं यस्यास्ते, ते च विभ्रमाः।
षट्पदान्पुष्पमालेव, कान्नाकर्षति सा सखे!॥

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः, निरुपपदो (११०) हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते॥

**स्थितेष्वेतत्समर्थनम्॥ १०॥**

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते।

जगाद मधुरां वाचं विशदाक्षरशालिनीम्।

-इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ,

---

(१०९) हारो मुक्तावलीविति विश्वः। हार एव स्तनद्वयस्य हासः।

(११०) निरुपपदः विशेषणरहितः।

"गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्य्यः" इति न युक्तम् (१११)। युक्तत्वे वा,

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम्।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते (११२)॥

इत्युदाहार्य्यम्॥

ख्यातेऽर्थे निर्हेतो-
रदुष्टता-

यथा,

चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः॥

अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते'-इति हेतुं नापेक्षते॥

---

(१११) सिद्धाविति हेतौ सप्तमी, अस्य न युक्तमित्यनेनान्वयः। गतार्थस्य पदान्तरेणोक्तार्थस्य। अयं निष्कर्षः, जगादेति क्रियया उक्तार्थस्यापि वाचमित्यस्य नानर्थक्यं मधुरामित्यादिविशेषणदानार्थं तदुपादानादिति वामनमतम्। मधुरं विशदाक्षरं जगादेतिरीत्या क्रियाविशेषणतया विवक्षितार्थप्रतीतिसम्भवात् वाचमित्यनर्थकमेवेति प्रकाशकृन्मतम्।

(११२) अत्र चरणत्रादीति विशेषणं न क्रियाविशेषणार्हमिति उत्तरदेशसंयोगानुकूलपादविहरणार्थकेन व्रजधातुना उक्तार्थस्यापि पादाभ्यामित्यस्य नानर्थक्यम् उक्तविशेषणदानार्थमुपात्तत्वादिति। तथा चायं सिद्धान्तः, यत्र यदुपादानं विना विशेषणदानासम्भवेन विवक्षितप्रतीतिविघातस्तत्रैव गतार्थस्यापि तस्योपादानं युक्तं, नान्यत्रेति।

Digitized by Google

ऽनुकरणे तु सर्व्वेषाम्।

सर्व्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम्, यथा,

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम्।
पश्यैष च गवित्याह सुत्रामानं यजेति च (११३)॥

वक्त्राद्यौचित्यवशाद्
दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥११॥

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः (११४), क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः; क्रमेणोदाहरणम्,

दीधीवेवीट्समः कश्चिद्गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते (११५)॥

यदा त्वामहमद्राक्षं शब्दविद्याविशारदम्।
उपाध्यायं तदास्मार्षं समस्प्राक्षञ्च सम्मदम्॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्।

---

(११३) अद्राक्षमिति श्रुतिकटु, (गौरिति वक्तव्ये) गविति च्युतसंस्कृति, सुत्रामानमिति अप्रयुक्तम्।

(११४) गुणः प्रकृतोत्कर्षकः।

(११५) दीधीवेवीटाम् (१।१।६) इति, क्ङिति च (१।१।५) इति सूत्रेण च तन्निषेधः।

पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति(११६) ॥

वाच्यवशाद्यथा,

मातङ्गाः! किमु वल्गितैः, किमफलैराडम्बरैर्जम्बुकाः!
सारङ्गाः! महिषाः! मदं व्रजत किं! शून्येषु शूरा न के।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुनः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम् ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः ॥ प्रकरणवशाद्यथा,

रक्ताशोक! कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनम्?
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः?।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः? ॥

अत्र शिरोधूननेन कुपितस्य वचसि ॥

क्वचिन्नीरसे न गुणो न दोषः, यथा,

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः, पुनरपि घटयत्येक उल्लाघयन् यः।

(११६) अन्त्रैः 'प्रोतानि' ग्रथितानि बृहन्ति 'कपालानि' शिरोस्थीनि 'नलकानि' जङ्घास्थीनि च यानि, तान्येव क्रूरं क्वणन्ति, कङ्कणानि, 'तत्प्रायाणि' तद्बहुलानि 'प्रेङ्खितानि' चलितानि यानि भूरिभूषणानि तेषां रवैः। पूर्वं पीतं पश्चात् छर्दितं रक्तमेव कर्दमस्तेन 'घने' व्याप्ते 'प्राग्भारे' उत्तरकाये घोरम् उल्लसन्तौ व्यालोलौ यौ स्तनौ तयोर्भारेण भैरवं भीषणं वपुर्यस्याः सा। अत्र बीभत्सो रसः।

Digitized by Google

धर्म्मांशोऽस्य वोऽन्तर्हदि गुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम्(११७)॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ, यथा,

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत्।
यस्याहुः शशिमच्छिरोहरइति स्तुत्यञ्च नामामराः,
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः (११८)॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ॥

अश्लीलं क्वचिद्गुणः, यथा, सुरतारम्भगोष्ठ्याम्,
("द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"-इतिकामशास्त्रस्थितौ)

---

(११७) 'घृणिभिः' जुगुप्सास्पदैः 'अघघनैः' क्लृप्तैः अर्थादवयवैरुपल-क्षितानि, 'घटयति' नूतनावयवैः संबध्नाति, 'उल्लाघयन्' नीरोगीकुर्व्वन् 'अन्तः' हृदये दिष्ट्या 'घना' निविड़ा या 'घृणा' कृपा 'तन्निघ्ना' तदायत्ता 'निर्व्विघ्ना' विघ्नविनाशिनी 'वृत्तिः' व्यवसायो यस्य। घृणयः किरणाः अंहो दुरितम्। शब्दचित्रेऽस्मिन् काव्ये सतोऽपि भावस्य न प्राधान्यमिति नीरसत्वव्यपदेशः।

(११८) माधवपक्षे, 'अभवेन' अजन्मना 'अनः' शकटं ध्वस्तम्। तस्य बलिजित्कायः 'स्त्रीकृतः' मोहिनीरूपतां प्रापितः। 'उद्वृत्तभुजङ्गस्य' कालि-यसर्पस्य हन्ता। 'रवानां' शब्दानां (नाम्नां) लयो यत्र सः, नामरूपात्मक-जगतो ब्रह्मणि लय इति वेदान्तविदनुमतम्। 'अगं' गोवर्द्धनं 'गां' पृथ्वीं। शशिनं मथातीति शशिमथो राहोः शिरोहर इति, 'अन्धकानां' यादवानां क्षयस्य निवासस्य कर्त्तेत्यर्थः। शिवपक्षे सर्व्वदा उमाधवः। बलिजित्कायः विष्णुशरीरं 'पुरा' त्रिपुरासुरबधकाले 'अस्त्रीकृतः' वाणरूपतां प्रापितः। 'अन्धकक्षयः' अन्धकासुरस्य नाश इत्यर्थः।

Digitized by Google

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोड़िते ।
उपसर्प्पन् ध्वजः पुंसः साधनान्तर्विराजते (११६) ।। (व्रीड़ा०)

अमङ्गलकथासु,

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे (१२०) ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ।। (जुगु०)

निर्वाणवैरदहनाः प्रशमादरीणाम्,
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः (१२१) ।।

अत्र भाव्यमङ्गलसूचकम् ।। सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्य्यवसायित्वे गुणः,

यथा,

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् (१२२) ।।

---

(११६) प्रकृतपक्षे पुंसो ध्वजः केतुः, साधनं सेना ।

(१२०) उत्तानः वैपरीत्येन स्थितः उच्छूनः शोथवान् ।

(१२१) प्रकृतपक्षे, प्रशमात् शान्त्यवलम्बनात्, 'रक्ता' अनुरक्ता प्रकर्षेण साधिता च भूर्यैः । 'क्षतो' निवृत्तो 'विग्रहः' कलहो येषाम् । स्वस्था निश्चिन्ता इत्यर्थः । अथ च प्रशमात् नाशात्, रुधिरेण मण्डितभुवः क्षतशरीराश्च स्वर्गस्था भवन्तु इत्यर्थो व्यज्यते ।

(१२२) कविपक्षे पृथुकानां बालानामार्त्तस्वरस्य पात्रं, भुवि उषिताः

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः, यथा,

आत्मारामा विहितरतयो निर्व्विकल्पे समाधौ,
ज्ञानोद्रेकाद्विघटितमनोग्रन्थयः सत्त्वनिष्ठाः ।
संवीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्,
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ।।

स्वयं वा परामर्शे, यथा,

षड़धिकदशनाड़ीचक्रमध्यस्थितात्मा (१२३)
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिःसाधकैर्म्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ।।

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः, यथा,

फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविड़वा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणोसरिच्छाः,
दे किंच मुद्ध विअइल्लपसूणपुञ्जा (१२४) ।।

अत, कलमकूरमहिसीदहिशब्दा ग्राम्या अपि विदूषकोक्तौ ।।

---

भूषिता भूषिताः, विलसत्कानां भूषिकानां रेणुभिरित्यर्थः । राजपक्षे पृथूनि कार्त्तस्वरस्य सुवर्णस्य पात्राणि यत्न, करेणुः हस्ती ।

(१२३) षड़धिका दश षोड़श या नाड्यः इड़ा-पिङ्गलादयस्तासां चक्रं मणिपूराख्यं (हृदयस्थितं) तन्मध्ये स्थितं आत्मा स्वरूपं यस्य ।

(१२४) पुष्पोत्करं कलमभक्तनिभं वहन्ति ये सिन्धुवारविटपा मम वल्ल-

न्यूनपदं क्वचिद्गुणो, यथा,

गाढ़ालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद ! माति मामलमिति चामाक्षरोल्लापिनी
सुप्ता किं नु ! मृता नु किं ! मनसि किं लीना ! विलीना नु किम् ! ॥

क्वचिन्न गुणो न दोषः, यथा,

तिष्ठेत्कोपवशात्प्रभावपिहिता ! दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता ! भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं,
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥

अत्र पिहितेत्यतोऽनन्तरं नैतद्यतइत्येतैर्न्यूनैः पदैर्विशेषविधेरकरणान्न गुणः, उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं वाधतइति न दोषः (१२५) ॥ अधिकपदं क्वचिद्गुणः, यथा,

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्य्योन्मुखः खलजनः कृतकं ब्रवीति ।

---

भाखे । ये गालितस्य मल्लिपीठभ्रः सदृशाः, ते किन्न मुग्धविचकिलप्रसूनपुञ्जा इति स० । कलमः शालिधान्यं, कुरं भक्तमिति देशी । विचकिलं मल्लिका ।

(१२५) उत्तरा दीर्घं न सा कुप्यतीत्यादिरूपा, प्रतिपत्तिर्ज्ञानं, पूर्व्वां तिष्ठेत् कोपवशादित्यादिरूपाम् । अयंभावः, नैतदित्यादेरनुपादानेऽपि निषेधहेतुभूतस्य दीर्घं न सा कुप्यतीत्यादेरत्रैव निषेधो वाच्यवत् प्रतीयते, अतस्तदनुपादानं न दोषाय ।

Digitized by Google

तत्साधवो न, न विदन्ति, विदन्ति, किन्तु,
कर्त्तुं तथा प्रणयमस्य न पारयन्ति ॥

अत्र, विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम्(१२६)।

यथा वा,

वद वद! जितः स शत्रुः? न हतो जल्पंश्च तव तवास्मीति।
चित्रं चित्रम्! अरोदीद्धाहेति परं मृते पुत्रे ॥

-इत्येवमादौ हर्षभयादियुक्ते वक्तरि (१२७)॥

कथितपदं क्वचिद्गुणः, (लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च) क्रमेणोदाहरणम्,

सितकरकररुचिरविभा
विभाकराकारधरणिधरकीर्त्तिः।
पौरुषकमला, कमला
सापि तवैवास्ति नान्यस्य (१२८)॥ (लाटा०)

ताला जाअन्ति गुणा;,
जाला दे सहिअएहिं घेप्पन्ति।
रइकिरणाणुग्गहिआइं
होन्ति कमलाइं कमलाइं (१२९)॥ (अर्था०)

---

(१२६) साधव एव विदन्ति नान्ये इत्यर्थपरम्।

(१२७) "विस्मये च विवादे च तथा दैन्येऽवधारणे। प्रसादने तथा हर्षे वाक्यमेकं द्विरुच्यते" इति।

(१२८) पराक्रमलक्ष्मीः लक्ष्मीश्चेत्यर्थः।

(१२९) तदा जायन्ते गुणाः, यदा ते सहृदयैर्गृह्यन्ते। रविकिरणा-



Digitized by Google

जितेन्द्रियत्वं विनयस्य कारणं,
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते,
जनानुरागप्रभवा हि सम्पदः ॥ (वि०अ०)

पतत्प्रकर्षमपि क्वचिद्गुणः, यथा, उदाहृते [१५४पृ०] प्रागप्राप्तेत्यादौ (१३०) ॥ समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, (यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते), यथाऽत्रैव प्रागप्राप्तेत्यादौ (१३१) ॥ अपदस्थसमासो क्वचिद्गुणः, यथा, उदाहृते [१८२पृ०] रक्ताशोकेत्यादौ (१३२) ॥ गर्भितं तथैव, यथा,

होमि अवहत्थिअरेहो
णिरङ्कुसो अह विवेअरहिओवि ।

---

नुगृहीतानि भवन्ति कमलानि कमलानीति सं० । द्वितीयकमलपदं विकाशसौरभसौन्दर्य्यादिमत्कमलपरम् ।

(१३०) अत्र हि चतुर्थे पादे क्रोधाभावात् मसृणमेव पदं युक्तम् ।

(१३१) अस्य दूषकताबीजं हि जनितान्वयस्य पुनरन्वये निराकाङ्क्षता, सा च वाक्यान्तरकरणे न भवति, तत्र जनितान्वयेन केनाप्यनन्वयात् ; विशेषणदाने तु तेन विशेषणेन पुनरन्वये, जनितान्वयस्य विशेष्यस्य नाकाङ्क्षेति दोषः ।

(१३२) अत्र हि शृङ्गारे दीर्घसमासस्यानौचित्यमित्यपदस्थसमासोऽपि उद्दीपकं प्रति कोपमुत्कर्षयन् विप्रलम्भमेव पुष्णातीति गुणः ।

सिविणेवि तुमम्मि पुणो
पत्तिहि भत्तिं ण पसुमरामि (१३३) ॥

अत्र, प्रतीहीति मध्ये, दृढ़प्रत्ययोत्पादनाय ॥ एवमन्यदपि लच्यात्लक्ष्यम् (१३४) ॥

व्यभिचारिरसस्थायि-
भावानां (१३५) शब्दवाच्यता ।
कष्टकल्पनया व्यक्ति-
रनुभावविभावयोः ॥ १२ ॥
प्रतिकूलविभावादि-
ग्रहो दीप्तिः पुनःपुनः ।
अकाण्डे प्रथनच्छेदौ (१३६),
अङ्गस्याप्यतिविस्तृतिः ॥ १३ ॥

---

(१३३) भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि । स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामीति सं० । अपहस्तिता रेखा मर्यादा येन सः । अङ्कुशोऽनुरोधः ।

(१३४) अन्यत् अदोषत्वादि, लच्यात् उदाहरणात्, लच्यम् निरूपणीयम् ।

(१३५) सिद्धान्ते रसस्य आस्वादात्मकस्य सामाजिकनिष्ठतया अवाच्यतया च रसशब्देनात्र आस्वाद्यमानोऽनुभावादिसम्बलितः स्थायिभाव उच्यते, रसादिशब्दस्य तत्रैव शक्तेः, निर्विशेषणस्थायिभावस्य स्वशब्दवाच्यतायां तृतीयो दोषः, रत्यादिपदानां केवलरत्यादावेव शक्तेः इति नाभेदः ।

(१३६) प्रथनच्छेदौ रसस्यैव ।

**अङ्गिनोऽननुसन्धानं,**
**प्रकृतीनां विपर्य्ययः ।**
**अनङ्गस्याभिधानञ्च**
**रसे (१३७) दोषाः स्युरीदृशाः ॥ १४ ॥**

स्वशब्दोपादानं व्यभिचारिणो (१३८) यथा,

सव्रीड़ा दयितानने, सकरुणा मातङ्गचर्म्माम्बरे,
सत्रासा भुजगे, सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्षा जह्नुसुतावलोकनविधौ, दीना कपालोदरे,
पार्व्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

अत्र व्रीड़ादीनाम्, (व्यानम्रा दयितानने, मुकुलिता मातङ्गचर्माम्बरे, सोत्कम्पा भुजगे, निमेषरहिता चन्द्रेऽमृतस्यन्दिनि । मीलद्भ्रूः सुरसिन्धुदर्शनविधौ, म्लाना कपालोदरे -इत्यादि तु युक्तम्) ॥

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम्, क्रमेणोदाहरणम्,

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥

---

(१३७) 'रसे' रस्यते-इति व्युत्पत्त्या रसभावादिमात्रे आस्वाद्यमाने ।

(१३८) अत्रेदं दूषणबीजम्-सति सम्भवेऽनुभावादिनाऽभिव्यक्तावेव चमत्काराखादयोरुत्कर्षः, तत्र वाच्यत्वे तु अगूढ़त्वापत्तेस्तयोरपकर्ष इति । एवञ्च यत्र यस्यानुभावादिना स्फुटतरं नाभिव्यक्तिसम्भवः, तत्र तस्य वाच्यत्वेऽपि

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिरामरूपाम् ।
पश्यैष बाल्यमतिवृत्य विवर्त्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥

स्थायिनो यथा,

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥

अत्रोत्साहस्य ॥

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभाव-पर्य्यवसायिनः स्थिता इति कष्टकल्पना (१२८) ॥

---

न तयोरपकर्ष इति स्वपदोक्तिर्न दोष इति [२०२] वक्ष्यति । एवमेषामास्वाद्यत्वएव दोषो नत्वितराङ्गतयाऽनास्वाद्यत्वेऽपीति । एवं परत्रापि आस्वादाभावो दूषणबीजम् ।

(१२८) अनुभावं पर्य्यवसाययन्ति प्रकरणाद्यनुसन्धानसापेक्षतया विलम्बेनावगमयन्ति ये ते । अयं भावः, तादृशचन्द्रनायिकयोरवलोकनेऽपि तस्य यूनोऽरसिकत्वे रतेरनुदयस्यापि सम्भवेन प्रथमं तस्य रसिकत्वमनुसन्धेयं, ततो रत्यनुभावप्रतीतिरिति विलम्बः । प्रदीपकृतस्तु 'अनुभावापर्य्यवसायिनः' इति पाठं मन्यमाना 'अनुभावाप्रतीत्या आस्वादापर्य्यवसायिनः' इत्यर्थमाहुः ।

Digitized by Google

परिहरति रतिं, मतिं लुनीते,
स्खलति भृशं, परिवर्त्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं
परिभवति प्रसभं, किमत्र कुर्म्मः ॥

अत्र, रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात्कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ॥

प्रसादे वर्त्तस्व, प्रकटय मुदं, सन्त्यज रुषं,
प्रिये ! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्च तु वचः ।
निदानं सौख्यानां क्षणमभिमुखं स्थापय मुखं,
न मुग्धे ! प्रत्येतुं प्रभवति गतः कालहरिणः ॥

अत्र, शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी (१४०) उपात्तः ।

णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि ।
सअलपरिहारहिअआ वणगमणं एव्व इच्छदि बहू (१४१) ॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ । (इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेत्, न (१४२) दोषः) ॥

---

(१४०) शृङ्गारे उपात्तत्वेनास्वाद्यितया व्यभिचारित्वम् । तेन विभावादिना प्रतिकूलरसस्याप्युपस्थित्या विरोधेन प्रकृतरसानास्वादप्रसङ्ग इति दोषः ।

(१४१) निभृतरमणे लोचनपथं पतिते गुरुजनमध्ये । सकलपरिहारहृदया वनगमनमेवेच्छति वधूरिति सं० ।

(१४२) निबध्यते इति शेषः । तथात्वे हि शृङ्गार एव पर्य्यवसानं न

दीप्तिः पुनःपुनर्यथा (१४३), कुमारसम्भवे रतिविलापे ॥

अकाण्डे प्रथनं यथा, वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये,प्रवृत्ते, भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्(१४४)॥

अकाण्डे छेदो यथा, वीरचरिते द्वितीयेऽङ्के कङ्कणमोचनाय गच्छामीति राघवस्योक्तौ (१४५) ॥

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं (१४६), यथा, हयग्रीववधे हयग्रीवस्य ॥ अङ्गिनोऽननुसन्धानं (१४७) यथा, रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ॥

---

तु ध्वान्त इति न दोषः । अत्र, गुरुजनसन्निधौ निभृततरमपाङ्गदर्शने प्रकाशशङ्कया वैराग्यस्यापि सम्भवात् न निभृतेत्यादिपदादेव शृङ्गारप्रतीतिः ।

(१४३) पुनःपुनर्दीप्तिर्दीपितस्यान्तरा विच्छिद्य विच्छिद्य ग्रहणम्, तत्तु अङ्कुरादीनामेव, नत्वङ्गिन इति । कुमारसम्भवे, अथ मोहपरायणा सतीत्यादिना दीपितोऽपि करुणः, अथ सा पुनरेवेत्यादिना पुनर्दीपितः । अत्रैकस्य पुनःपुनरास्वादो वैरस्यायेति दूषणबीजम् ।

(१४४) तदानीं करुणवीरादिरेवास्वाद्यते न तु शृङ्गार इति दोषः ।

(१४५) तदुक्तिर्हि व्याजेन निर्गमं प्रतिपादयन्ती रामस्यावीरत्वं पर्य्यवस्यतीति नायके रामे वीररसो नास्वाद्येत इति दोषः । कङ्कणमोचनं विवाहदशमदिनोत्सवभेदः । (मुद्रितवीरचरिते कङ्कणमोचनाय गच्छामीति पाठो नास्ति) ।

(१४६) अङ्गस्य प्रतिनायकादेर्नायकापेक्षया बहुवर्णने हि तद्गत एव रसः प्राधान्येनास्वाद्येत, न तु नायकगतो प्रधानो रस इति दोषः ।

(१४७) प्रधानस्य नायकस्य नायिकाया वा, अननुसन्धाने तद्गतरसविच्छेद इति दोषः ।

Digitized by Google

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः, उत्तमाधममध्यमाश्च (१४८); तत्र रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवत् दिव्येष्वपि (१४९), किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया, तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्।

क्रोधं प्रभो! संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥

-इत्युक्तवत् भ्रूकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव। अदिव्येषु तु यावदवदानं (१५०) प्रसिद्धमुचितं वा, तावदेवोपनिबद्धव्यम्, अधिकन्तु निबध्यमानमसत्यप्रतिभासेन, 'नायकवद्वर्त्तितव्यं, न प्रतिनायकवत्'-इत्युपदेशे न पर्य्यवस्येत्। दिव्यादिव्येषु उभयथापि। एवमुक्तस्यौचित्यस्य दिव्यादीनामिव

---

(१४८) प्रकृतयो नायकादयः। दिव्या देवतैकरूपाः (इन्द्रादयः), अदिव्या मानुषैकरूपाः (वत्सराजादयः), दिव्यादिव्याः मानुषरूपेणाप्यवतीर्णा देवाः (रामादयः)। ते पुनर्धीरोदात्तादिभेदेन प्रत्येकं चतुर्विधा भूत्वा पुनः (गुणोत्कर्षापकर्षतदुभयात्मकेन) उत्तमादिभेदेन प्रत्येकं त्रिधा भूत्वा षट्त्रिंशद्विधाः प्रकृतयः सम्पद्यन्ते।

(१४९) वर्णनीयानीति शेषः।

(१५०) अवदानं वृत्तं कर्म्म पूर्व्वं केनाप्यनुष्ठितमिति यावत्।

Digitized by Google

धीरोदात्तादीनामप्यन्यथावर्णनं विपर्य्ययः (१५१)। तत्रभवन् भगवन्नित्युत्तमेन, न अधमेन; मुनिप्रभृतौ, न राजादौ; भट्टारकेति नोत्तमेन राजादौ (१५२), प्रकृतिविपर्य्ययापत्तेर्वाच्यम्। एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम्॥

अनङ्गस्य (रसानुपकारकस्य) वर्णनं यथा, कर्पूरमञ्जर्य्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य राज्ञा प्रशंसनम्॥

'ईदृशाः'-इति(१५३) नायिकापादप्रहारादिना नायककोपादिवर्णनम्।

---

(१५१) एवं दिव्यादीनामुक्तस्यौचित्यस्यान्यथावर्णनमिव धीरोदात्तादीनामप्यौचित्यस्यान्यथावर्णनं विपर्य्यय इत्यन्वयः।

(१५२) अत्र प्रतिपुस्तकं विभिन्नः पाठः, तथाहि क्वचित् "भट्टारकेति राजादौ परमेश्वरेति च न मुनिप्रभृतौ" इति पाठः, क्वचित्तन्यथा। अयन्तु पाठो प्रदीपतट्टीकानुसारी, "तत्रभवन् भगवन्नित्युत्तमेनैव प्रयोक्तव्यं, नाधमेन; उत्तमेनापि मुनिप्रभृतावेव न तु राजादौ। भट्टारकेति न राजादावुत्तमेन, किन्तु देवादावेव" इति प्रदीपः, "न राजादाविति, अधमेन तु राजादावेव न मुनिदेवादाविति केचित्" इति तट्टीका; यदि 'न मुनिप्रभृतौ' इति इत्तिरेव स्यात्, तदा 'केचित्'-इत्यनुपपन्नं स्यात्, स्याच्च तदा प्रदीपेऽपि एतत्समानार्थकः कोऽपि पाठः, इत्तेश्छायारूपत्वात् प्रदीपस्य।

(१५३) एवंविधा अनौचित्यहेतवो रसदोषा भवन्तीत्यर्थपरेण कारिकायाम् 'ईदृशाः'-इतिपदेन एतदुक्तं भवति, अनौचित्यहेतवः सर्व्वे एव दोषा भवन्ति, परिगणितप्रकारस्तु प्रदर्शनार्थमुक्त इति परिगणितादन्यत्र उदाहरति।



Digitized by Google

उक्तं हि ध्वनिकृता,

अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परेति (१५४) ॥

इदानीं क्वचिददोषा अप्येते, इत्युच्यन्ते,

न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।

यथा,

औत्सुक्येन कृतत्वरा, सहभुवा व्यावर्त्तमाना ह्रिया,
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा, गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा, शिवायास्तु वः ॥

अत्रौत्सुक्यशब्द इव तदनुभावो न तथाप्रतीतिकृत्(१५५)। अतएव "दूरादुत्सुकम्"(५१ पृ०)-इत्यादौ व्रीडाप्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसाप्रसरणादिरूपस्य तथाप्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्॥

(१५४) उपनिषत् वेदसारभागः, नित्यरसस्वरूपब्रह्मोपस्थापकवेदभाग इव रसोपस्थितिनिदानमिति फलितार्थः ।

(१५५) अत्रौत्सुक्यस्य नैकोऽपि तादृशोऽसाधारणोऽनुभावादिरस्ति, येन उपात्तेन औत्सुक्यमसंशयं प्रतीयेत, येऽपि च त्वरादयः, ते नासाधारणाः, गुरुजनगञ्जनाभयादिनापि तेषां सम्भवात्, इति औत्सुक्यं स्वपदेनोपादीयते, व्रीडादीनान्तु असाधारणानुभावसत्त्वात् अनभावमुखेनैव उपादानं युक्तम्, अतएव अमरुकविर्दूरादुत्सुकमितिश्लोके औत्सुक्यमेव केवलं स्वपदेनाभिदधत्

सञ्चार्य्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥१५॥

बाध्यस्योक्तिः न, न परं दोषः, यावत्प्रकृतरसपरिपोषकृत्।

यथा,

क्वाकार्य्यं, शशलक्ष्मणः क्व च कुलम्-(६४४०)-इत्यादौ,

अत्र, वितर्कादीषु उद्गतेष्वपि चिन्तायामेव विश्रान्ति-रिति प्रकृतरसपरिपोषः (१५६) ॥

(पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसञ्च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः (१५७) ॥

-इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम्।)

---

व्रीड़ादीन् अनुभावमुखेन प्रतिपादयति स्म। तेनायं सिद्धान्तः, येषां व्यभिचारिणां नासाधारणानुभावादिसम्भवस्त एव स्वशब्देनोपादीयन्ते न त्वन्येऽपीति।

(१५६) अत्र हि प्रतिचरणं पूर्व्वभागोक्तानां शमाङ्गसञ्चारिणां वितर्कादीनाम्, उत्तरभागप्रतिपादितानाञ्च शृङ्गाराङ्गसञ्चारिणामौत्सुक्यादीनां यथोत्तरं बाधकतया चरमोक्तायां चिन्तायामेव बाधकत्वं पर्य्यवसन्नमिति (विपक्षजवात् सैनिकोत्कर्षद्वारा राज्ञ इव) चिन्तोत्कर्षद्वारा शृङ्गारस्यैवोत्कर्षइति। स चोत्कर्षः वितर्कादीनां बाध्यतयोक्तावेव भवतीति गुणत्वं। तैश्च बाध्यमानैः शान्तस्य प्रतीत्यनुदयात् प्रकृतशृङ्गाररसास्वादविघातो नास्तीति न दोषत्वमिति।

(१५७) सरसं अन्तरससहितं सानुरागञ्च। 'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च। अन्यदेहचिकित्साऽर्हेऽसाध्यरोगे च जायते' इति विश्वः। अत्र 'पाण्डुत्वाद्यनुभावपोषितस्य रोगस्य करुणाङ्गतया विरुद्धत्वेऽपि विप्रलम्भे समावेशात् अङ्गभावप्राप्त्या दोषत्वाभावः'-इति ध्वनिकृन्मतम्। 'एतदयुक्तं,

Digitized by Google

सत्यं मनोरमा रामाः, सत्यं रम्या विभूतयः ।

किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ।। (विरु०वि०)

-इत्यत्राद्यमर्द्धं बाध्यत्वेनैवोक्तम् । जीवितादपि (१५८) अधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति; न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः । न तु(१५९)विनेयोन्मुखीकरणमत्र परिहारः, शान्तशृङ्गारयोर्नैरन्तर्यस्याभावात्, नापि काव्यशोभाकरणम्, रसान्तरादनुप्रासमात्राद्वा तथाभावात् ।।

---

पाण्डुत्वादीनां ('व्याध्युन्मादादयपस्मारजाड्यमरणादिभिर्विप्रलम्भोऽभिनेतव्यः'-इति भरतोक्त्या ) रोगस्य विप्रलम्भसाधारणतया विरोधस्यैवासिद्धेः' इति प्रकाशकृन्मतम् ।

(१५८) मत्ताङ्गनापाङ्गेत्यनेन शृङ्गारप्रतीत्या विरोधमाशङ्क्य परिहरति जीवितादिति, अयं परिहारः, शृङ्गारस्यानुभावाद्यप्रतीत्या न एतस्मात्तस्य शृङ्गारप्रतीतिरिति न विरोधः, प्रत्युत उपमानतया उपात्तं तत् स्वस्य प्रसिद्धभङ्गुरत्वं तदातिशय्यञ्च उपस्थापयत् शान्तमेवोपकरोति, तथाहि, भङ्गुरत्वोपमायां प्रसिद्धभङ्गुरस्यैव उपमानतानियमेन, उपमानस्य आतिशय्यनियमेन च तस्य उपमानतया उपादानादेव प्रसिद्धभङ्गुरत्वतदातिशय्ये उपस्थीयेते इति । प्रसिद्धेति प्रसिद्धभङ्गुरश्च तत् उपमानञ्चेति तस्य भाव इति विग्रहः ।

(१५९) 'भवत्येवात्र शृङ्गारप्रतीतिः, परन्तु तया गुडजिह्विकान्यायेन शिष्या अभिमुखीकृत्य शान्ते निवेश्यन्ते इत्यदोषता । यद्वा काव्यशोभानिमित्तमेव तदुपादानमतोऽदोषता'-इति ध्वनिकारसमाधानं दूषयति न त्विति । अभावादिति विरोधेनेति शेषः । तथाभावात् काव्यशोभासत्त्वात् ।

आश्रयैक्ये विरुद्धो यः, स कार्य्यो भिन्नसंश्रयः(१६०)।
रसान्तरेणान्तरितः, नैरन्तर्य्येण यो रसः ॥१६॥

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्य्येण विरोध इति रसान्तरमन्तरे कार्य्यं। यथा नागानन्दे, शान्तस्य जीमूतवाहनस्य, अहो गीतम्! अहो वादित्रम्! -इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः। न परं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्त्तते। यथा,

भूरेणुदिग्धान्, नवपारिजात-
मालारजोवासितवाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान्,
सुराङ्गनाश्लिष्टभुजान्तरालाः॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः
पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः
सुगन्धिभिः कल्पलतादुकूलैः॥
विमानपर्य्यङ्कतले निषस्साः
कुतूहलाविष्टतया तदानीम्।

(१६०) अत्राश्रयसंश्रयशब्दौ आलम्बनाधारोभयपरौ, तेनालम्बनैक्येन विरोधे भिन्नालम्बनतया निवेशः, आधारैक्येन च विरोधे भिन्नाधारतयेति।

निर्दिश्यमानान् ललनाङ्गलीभि-
र्वीराः स्वदेहान् पतितानपश्यन् ॥

अत्र, बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः (१६१) ॥

स्मर्य्यमाणो विरुद्धोऽपि, साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ, तौ न दुष्टौ परस्परम् ॥१७॥

अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

एतत् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ ; अत्र पूर्व्वावस्थास्मरणम् शृङ्गाराङ्गमपि करुणं परिपोषयति(१६२) ।

दन्तैः क्षतानि, करजैश्च विपाटितानि,
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।

---

( १६१) भूरेणुदिग्धेत्यादिना कर्म्मविशेषणेन बीभत्सः, नवपारिजातेत्यादिना कर्त्तृविशेषणेन शृङ्गारः, अनयोश्च निर्द्देशक्रमेण प्रतीतिः । एवं भूरेणुदिग्धत्वादेः, नवपारिजातमालारजोवासितत्वादेश्च रणोत्साहमूलकतया रणोत्साहप्रतीत्या वीररसः । एवञ्च प्रथमो बीभत्सः, ततो वीरः, ततश्च शृङ्गारः, ततःपुनर्वीर इति व्यवधानम् । तेनानन्तर्य्याभावात् बीभत्सशृङ्गारयोरविरोधः। वीरस्य आलम्बनमत्र प्रतियोद्धा, शृङ्गारस्य तु स्वर्गाङ्गना इति आलम्बनभेदादनयोरप्यविरोधः । "यद्यपि अत्र वीर एव प्रधानोऽन्यौ च तद्व्यभिचारिणाविति न विरोधस्तथाप्येवमप्यविरोधः सम्भवतीत्युदाहृतम्" इति प्रदीपः ।

(१६२) शोच्यावस्थायां पूर्व्वावस्थास्मरणस्य करुणोद्दीपकत्वात् । शृङ्गाराङ्गस्मृत्या शृङ्गारोऽपि स्मृतः । स्मृतस्य तस्य प्राधान्येनास्वाद्यत्वाभावादविरोधः ।

दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥ (१६३)

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य । यथा वा, परः श्रृङ्गारी तदवलोकनात्सस्पृहः तद्वत् एतद्दृशो मुनय इति साम्यविवक्षा (१६४) ॥

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः, पातितयावकैरिव ; पतद्बाष्पाम्बुधौताननाः ।
भीता भर्त्तृकरावलम्बितकरास्त्वच्छत्रुनार्य्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव(१६५) ॥[१]

अत्र, चाटुके राजविषया रतिः प्रतीयते, तत्र करुण इव

(१६३) प्रसूय बुभुक्षया स्वापत्यं जिघांसवे सिंह्यै स्वशरीरं दत्तवन्तं जिनदेवं प्रतीयमुक्तिः । एकत्र परपरित्राणहर्षात् अपरत्रानुरागात् पुलकः ।

(१६४) अङ्गयोः साम्यविवक्षया अङ्गिनोरपि रसयोः साम्यं विवक्षितमित्यायाति । अत्र हि प्रकरणेन जिनस्य दयावीररस इव शब्दशक्तिमहिम्ना श्रृङ्गारोऽपि उपस्थीयते, उभयोरेव सिंही आलम्बनं, न च विरोधिनोरनयोरेकालम्बनतया प्रतीतिसम्भव इति, एवं मुनिभिरित्यनेन मुनिषु शान्त इव जातस्पृहैरित्यादिना शब्दशक्तिमहिम्ना श्रृङ्गारोऽपि प्रतीयते, न चानयोरेकत्रैककालं प्रतीतिसम्भव इति विरोधसम्भावना । साम्यविवक्षायान्तु श्रृङ्गारस्य उपमानत्वेन नायिकालम्बनतया, नायकनिष्ठतया, पूर्व्वसिद्धतया च प्रतीतिः, वीरस्य सिंह्यालम्बनतया जिननिष्ठतया च प्रतीतिः, शान्तस्य च मुनिगतत्वेन तत्कालीनत्वेन च प्रतीतिरिति न विरोधः । दयावीरस्य जिनस्य नेदृशं कर्म्म विस्मयजनकमिति नात्राद्भुतो रसः, नापिच वक्तुर्जिनविषया रतिरत्राभिप्रेतेति वीर एव प्रधानः ।

(१६५) विवाहाङ्गलाजहोमे प्रायो वधूनामेतादृशी अवस्था भवति ।

Digitized by Google

शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः (१६६), (यथा (१६७),

**एहि, गच्छ ; पतोत्तिष्ठ ; वद, मौनं समाचर ।**

**एवमाशाग्रहग्रस्तैः क्रीड़न्ति धनिनोऽर्थिभिः ॥**

अत्र, एहीति क्रीड़न्ति, गच्छेति क्रीड़न्तीति क्रीड़नापेक्षयोरागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः, प्रसभमभिहतोऽप्याददानोंऽशुकान्तं,
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः,
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥[२]

-इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम् (१६८),

(१६६) शोच्यावस्थातः करुणा, विवाहावस्थातश्च शृङ्गारः, द्वयोरप्यनयोर्नृपविषयकरतिभावेऽङ्गता, 'एतादृशो हि अस्य राज्ञः प्रतापः, येनैषामीदृशी अवस्था जाता, येन चैषां पुनर्विवाह उत्प्रेक्ष्यते' इति प्रत्ययात् । एवञ्चैककार्य्यव्ययोर्नृपभ्ययोरिवानयोः (स्वभावतो विरोधिनोरपि) नात्र विरोधः प्रसरति ।

(१६७) प्रधानाङ्गभूतयोर्विरोधिनोरप्यविरोधं दृष्टान्तेन द्रढ़यति यथेति ।

(१६८) करुणोऽङ्गमिति करुणोद्दीपनविभावस्य त्रिपुरपुरस्त्रीवैक्लव्यस्य त्रिपुररिपुप्रभावातिशयाधीनत्वात् । एवञ्च त्रिपुररिपुप्रभावातिशयस्य त्रिपुररिपुविषयकरतिभावोद्दीपनविभावत्वात् अङ्गिनि त्रिपुररिपुविषयकरतिभावे करुणोऽङ्गमिति पर्य्यवस्यति । एवं पूर्व्वं प्रणयी यथा करालम्बनादिकमकार्षीत्, तथेदानीं शराग्निरित्युपमानभावेन, पूर्व्वावस्थाप्रतीतेरुद्दीपकत्वेन च शृङ्गारः करुणाङ्गं सत् परम्परया प्रधानस्य भावस्याङ्गमिति विरोधिनोरप्यनयोः प्रधानेऽङ्गभावेनाविरोधः । यद्यपि शृङ्गारापेक्षया करुणोऽङ्गी, तथापि तत्र प्रकर्षपर्य्यवसानं नास्ति, तेनापि भावप्रकर्षणादित्यङ्गमेव तदिति तात्पर्य्यम् ।

Digitized by Google

तस्य तु शृङ्गारः; तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव । अथ वा (१६९), प्राक् यथा कामुक आचरति स्म, तथा शरान्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्वल्यते । उक्तं हि,

'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते ॥' (१७०) इति ॥

प्राक् (४३०) प्रतिपादितरूपस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवति (१७१), इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ॥

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः ॥

---

(१६९) ननु यथा छेदे औदासीन्येन खड्गनिर्म्माता तमुत्कर्षयन् वा शिल्पी नाङ्गं, तथा करुणमुत्कर्षयन्नपि शृङ्गारो नाङ्गिनि भावेऽङ्गमिति केवलकरुणस्यैव भावाङ्गतया तत्र शृङ्गारस्य औदासीन्यादित्याशङ्का पक्षान्तरमुपन्यस्यति अथ वेति, यथा केवलः खड्गो न छेदेऽङ्गं किन्तु निपातितः स इति निपातयितुः छेदेऽङ्गभावः, तथा केवलः करुणो नात्राङ्गतया विवक्षितः, किन्तु शृङ्गारेणोत्कर्षितः सः, इति तदुत्कर्षयितुः शृङ्गारस्याङ्गभावोऽच्युतः इति सिद्धान्तः । उदाहरणद्वयेनैतत् प्रतिपादितम्, यत् अङ्गिनि साक्षात् परम्परया वा अङ्गत्वमाप्तयोर्न विरोध इति ।

(१७०) गुणोऽङ्गं, संस्कारः उत्कर्षः, तथा कृतात्मसंस्कारत्वे ।

(१७१) रसस्य वेद्यान्तरसम्पर्कशून्यतया रसान्तरस्यैवाप्रवृत्तेः ।



Digitized by Google

## ॥ अष्टम उल्लासः ॥



एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह,-

ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः(१) ॥१॥

आत्मन एव हि यथा शौर्य्यादयः, नाकारस्य ; तथा, रसस्यैव माधुर्य्यादयो गुणाः, न वर्णानाम् । क्वचित्तु शौर्य्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनात् 'आकार एवास्य शूरः'-इत्यादेर्व्यवहारादन्यत्राशूरेऽपि विततात्कृतित्वमात्रेण 'शूरः' इति (२), क्वापि शूरेऽपि मूर्त्तिलाघवमात्रेण 'अशूरः'-इति अविश्रान्तप्रतीतयो (३) यथा व्यवहरन्ति ; तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेर-

---

(१) अचलस्थितयः नियतावस्थानाः, नैयत्यञ्च रसेन तदुपकारेण च बोध्यम्, तेन रसं विना ये न तिष्ठन्ति, तिष्ठन्तश्चावश्यं रसमुपकुर्व्वन्तीत्यर्थः । इदञ्च स्वरूपकथनम्, लक्षणन्तु रसोत्कर्षकत्वे सति रसधर्म्मत्वम्, तथात्वे सति रसनियतस्थितिकत्वं, नियमेन रसोपकारकत्वं चेति त्रितयं बोध्यमिति प्रदीपः ।

(२) अस्य व्यवहरन्तीत्यग्रिमेणान्वयः, एवं परत्र माधुर्य्यादि-इत्यस्यापि ।

(३) न विश्रान्ता याथार्थ्ये पर्य्यवसन्ना प्रतीतिर्येषाम् ते, अदूरदर्शिन इति ।

Digitized by Google

मधुरादिरसाङ्गानां वर्णानां सौकुमार्य्यादिमात्रेण माधुर्य्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्य्यादेरमाधुर्य्यादि रसपर्य्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति(४)। अतएव माधुर्य्यादयो रसधर्म्माः समुचितैर्व्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः (५)। यथैषां व्यञ्जकत्वं, तथोदाहरिष्यते ॥

उपकुर्व्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः(६)॥२॥

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति, ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः; यत्र तु नास्ति

(४) अयं भावः, विततकारस्य सुकुमारवर्णादीनाञ्चान्यवैलक्षण्येन व्यञ्जकत्वप्रतिपत्तये उपचारेण अस्यायमाकार एव शूरः, एते वर्णा एव मधुराः इत्यादि कचित् अभियुक्ता व्यवहरन्ति, तमवलोकयन्तोऽनभिज्ञाः विततकारस्यैव शूरत्वं, सुकुमारवर्णादीनामेव माधुर्य्यादि मन्यमाना तथैव व्यवहरन्ति, नैतावता गुणस्य वर्णधर्म्मत्वसिद्धिरिति।

(५) अभ्युपगन्तुं शक्या इति शेषः। मधुरा रचना इत्यादिव्यवहारादविशेषेण रचनायामपि तदभ्युपगमप्रसङ्गादिति भावः। तथाच गुणस्य रसैकधर्म्मत्वे लाघवं, वर्णरचनोभयवृत्तित्वे गौरवमिति सूचितम्, एतदर्थमेव वर्णमात्राश्रया इत्युक्तम्।

(६) सन्तं स्फुटतयाऽवस्थितम्, एवं परत्र। अङ्गद्वारेणेति, अनेन रसधर्म्मत्वं निरस्तम्। इदमपि स्वरूपकथनम्, लक्षणन्तु रसोपकारकत्वेऽपि तदवृत्तित्वम्, तथात्वे सति रसानियतावस्थितिकत्वम्, अनियमेन रसोपकारकत्वं वा इति प्रदीपः।

रसस्तोक्तिवैचित्र्यमात्रपर्य्यवसायिनः ; क्वचित्तु सन्तमपि नोपकुर्व्वन्ति । यथाक्रममुदाहरणानि,

अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः ।
अलमलमालि ! मृणालैः, इति वदति दिवानिशं बाला ॥

-इत्यादौ वाचकमुखेन,

मनोरागस्तीव्रं विषमिव विसर्प्पत्यविरतं,
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
छिनत्ति प्रत्यङ्गं ज्वर इव गरीयानितइतः,
न मां त्रातुं तातः प्रभवति, न चाम्बा, न भवती ॥

-इत्यादौ वाच्यमुखेन अलङ्कारौ रसमुपकुरुतः (७) ॥

चित्ते विहट्टदि, ण टुट्टदि सा गुणेसुं
सेज्जासु लोटदि, विसट्टदि दिम्मुहेसुं ।
वोलम्मि वट्टदि, पवट्टदि कव्वबन्धे,
धाणे ण तुट्टदि चिरं, तरुणी तरट्टी (८) ॥

---

(७) पूर्व्वत्र, शृङ्गारव्यञ्जकरेफानुप्रासः शब्दमलङ्कुर्व्वन् शृङ्गारमप्युपकरोति । उत्तरत्र तु, विषमिवेत्याद्युपमावशेन विसर्पणादेरातिशय्यप्रतीत्या विप्रलम्भोत्कर्ष इति प्रदीपः । स्वच्छन्दोच्छलदित्यादौ चित्रकाव्ये स्फुटरसं विनाऽपि अलङ्कारप्रदर्शनादत्र पुनर्नोदाहृतम् ।

(८) चित्ते विघटते, न त्रुट्यति सा गुणेषु शय्यासु लुठति, विसर्पति दिङ्मुखेषु । वचने वर्त्तते, प्रवर्त्तते काव्यबन्धे, ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा इति सं० । विघटते चमत्करोति, चित्तानुरूपं कर्म्म करोतीत्यर्थ इति उद्योतकृत् । तरट्टी प्रगल्भेति देशीति महेश्वरः ।

Digitized by Google

-इत्यादौ वाचकमेव (९),

मित्रे क्वापि गते, सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु, वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता,
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ।।

-इत्यादौ वाच्यमेव, नतु रसम् । अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा (१०) ।।

एष एव (११) च गुणालङ्कारप्रविभागः । एवञ्च (१२) 'समवायवृत्त्या शौर्य्यादयः, संयोगवृत्त्या तु हारादय इत्यस्तु

(९) उपकरोतीति शेषः । न तु रसमिति परेणान्वयः । अत्र हि शृङ्गारो रसः, तत्प्रतिकूलः टवर्गानुप्रासोऽलङ्कार इति ।

(१०) 'अत्र' एतादृशविप्रलम्भावस्थायां, जीवं रोद्धुं जीवनिरोधाय, न क्षमा नार्पयितुं योग्या । जीवननिरोधनिमित्तं कण्ठे बिसलतार्पणमनुचितमित्यर्थः ; विप्रलम्भोत्कर्षे हि जीवनिर्गमोपाय एवावलम्ब्यते, न तु तन्निरोधोपाय इति इयमुपमा प्रकृतं विप्रलम्भं रसमपकर्षयतीति भावः ।

(११) 'एष एव' पूर्व्वोक्त एव, नान्यः अन्योक्तप्रकारः, नापि च विभागाभावः ।

(१२) एवञ्च ( गुणालङ्कारयोरुक्तरीत्या प्रविभागसत्त्वे च ) इत्यभिधानमसदित्यन्वयः । तदभिधानमिदम्,-लौकिका गुणालङ्काराः सम्बन्धभेदेन तिष्ठन्तीति तेषां भेदोऽस्तु, काव्ये पुनरलौकिकानां गुणालङ्काराणामेकेनैव समवायसम्बन्धेनावस्थितिरिति भेदोऽनुपपन्नः । योऽपि च भेदव्यवहारः, स गड्डलिकाप्रवाहन्यायेन, यथाहि, केनापि कारणेन पुरोऽनुसरन्तीं कामपि गड्डलिकां (मेषीं) विनैव निमित्तविचारमितरा अनुगच्छन्ति, श्वभ्रे पतितामपि च तामनुपतन्ति, तथा, कश्चन प्राक्तनः केनचिदप्यभिप्रायेण गुणालङ्कारयोर्भेद-

Digitized by Google

गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनाञ्चो-भयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैषां भेदः'-इत्यभिधानमसत् ।। यदप्युक्तं, 'काव्यशोभायाः कर्त्तारो धर्म्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः(१३)'-इति ; तदपि न युक्तं, यतः, किं समस्तैर्गुणैः काव्यव्यवहारः, उत कतिपयैः, यदि समस्तैः, तत्कथमसमस्तगुणा गौड़ी पाञ्चाली च रीतिः काव्यस्यात्मा ? (१४) । अथ कतिपयैः, ततः,

अद्रावत्र प्रज्वलत्यग्निरुच्चैः, प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ।

-इत्यादावोजःप्रभृतिषु(१५)गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ।।

---

माहात्म्य, तदनुसारेण विनैव निमित्तविचारं केचनाधुनिकास्तथैव व्यवहरन्तीति । समवायवृत्तिरत्र अयुत-(अपृथक्)-सिद्धात्मकः, तत्सत्तानियतसत्ताकत्वरूपो वा कश्चन सम्बन्धः, न पुनर्वैशेषिककल्पितः समवाय इति ।

(१३) उक्तम् वामनेन । 'काव्यशोभा' काव्यव्यवहारनिदानमुत्कर्षः । तदतिशयः तस्या गुणकृतशोभाया अतिशयः आधिक्यम् ।

(१४) वामनेन हि 'रीतिरात्मा काव्यस्य, सा च पदसङ्घटनात्मिका त्रिविधा, वैदर्भी गौड़ी पाञ्चाली च ; समस्तगुणा वैदर्भी, प्रसादौजोगुणा गौड़ी ; माधुर्य्यप्रसादगुणा तु पाञ्चाली,-इत्युक्तम् । एतन्मते गुणा न रस-धर्म्माः, नापि च त्रय एव, किन्तु दश इत्यनुपदं व्यक्तीभविष्यति ।

(१५) वामनोक्तौजःप्रसादार्थव्यक्तिषु । एषां स्वरूपं वक्ष्यते ।

Digitized by Google

-इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ (१६) ॥

माधुर्य्यौजःप्रसादाख्या-
स्त्रयस्ते न पुनर्दश (१७)।

एषां क्रमेण लक्षणमाह,

आह्लादकत्वं (१८) माधुर्य्यं
शृङ्गारे द्रुतिकारणम् ॥ ३ ॥

---

(१६) पूर्व्वार्द्धे विशेषोक्तिरुत्तरार्द्धे व्यतिरेकः । 'एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्तिः'-इति, 'उपमेयस्य गुणातिरेकत्वं व्यतिरेकः'-इति च वामनेनैवोक्तम्। अयमभिसन्धिः, अत्र हि काव्यव्यवहारनिदानशोभाजनका न केऽपि गुणाः सन्ति, येऽपि च वामनमतसिद्धाः प्रसादादयः सन्ति, ते हि रौद्रादिरसव्यञ्जकाः नास्मिन् शृङ्गारप्रधाने श्लोके काव्यव्यवहारप्रवर्त्तनाय प्रभवन्तीति एतावेवालङ्कारौ काव्यव्यवहारं प्रवर्त्तयतः इत्यवश्यम् भवताङ्गीकार्य्यम्, एवञ्च अस्मिन् अलङ्कारद्वये गुणलक्षणातिव्याप्तिरव्याप्तिश्च अलङ्कारलक्षणस्य, आभ्यां गुणकृतशोभाया अनतिशायनादिति । अन्यकृता यत् काव्यस्वरूपनिरुक्तौ 'सगुणौ'-इति विशेषणं दत्तं, तत् न वामनाद्युक्तगुणयोगाभिप्रायम्, अपि तु स्वोक्तरसधर्म्मगुणयोगाभिप्रायमिति रसरूपे तद्-व्रतमिति न दोषः ।

(१७) 'श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः' इति वामनाद्युक्ता दश शब्दगुणा अर्थगुणाश्च ।

(१८) आह्लादकत्वम् ( स्वार्थे कप्रत्ययात् ) आनन्दस्वरूपता इति प्रदीपः । आस्वाद्यमानरत्यादेरेव रसरूपतया आनन्दात्मकास्वादहेतुः रत्या-

Digitized by Google

शृङ्गारे (अर्थात्) सम्भोगे, द्रुतिर्गलितत्वमिव (१८) । श्रव्यत्वं (२०) पुनरोजःप्रसादयोरपि ॥

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्(२१) ।**

अत्यन्तद्रुतिहेतुत्वात् ॥

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥४॥**

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः (२२) ॥

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।**

वीरात् बीभत्से, ततो रौद्रे सातिशयमोजः (२३) ।

---

दिगतः कश्चन धर्म्म इति महेश्वरः । द्रुतिकारणं आह्लादकत्वं माधुर्य्यं, तत्र शृङ्गारे इत्यन्वयः, एवं परत्र ।

(१८) सामाजिकानुभवसिद्धः सुकुमारश्चित्तस्यावस्थाविशेषः द्रुतिः, स च मधुररसास्वादादेव (मनःकाठिन्याद्यपगमे) जायते, न तु माधुर्य्यमेव स इति।

(२०) तेन 'श्रव्यत्वं' (श्रवणानुद्वेगकरत्वं) माधुर्य्यम्' इति भास्करोक्तं दुष्टम् ।

(२१) क्रमादिति शेषः ।

(२२) स्निग्धस्यापि सामाजिकमनसो द्वेषाद्यात्मकविषयविशेषसम्पर्केण (सूर्य्यकान्तस्यार्ककिरणसम्पर्केण ज्वलनमिव) तेजस्यवस्थाविशेषो विस्तारः ।

(२३) पारिशेष्यात् उक्तेतरेषु हास्यभयानकाद्भुतेषु उभयोरेव माधुर्य्यौजसोः स्थितिरिति बोध्यम् । तत्र हास्यादीनां शृङ्गाराङ्गविभावादिप्रभवत्वे माधुर्य्यं प्रधानं, वीराद्यङ्गविभावादिप्रभवत्वे तु ओजः प्रधानमिति उद्योतकृत् । एवञ्च तत्र तत्र रचनापि तादृशी कार्य्या। 'हास्ये सर्व्वदैव प्रकृष्टं माधुर्य्यं स्वल्पं ओजः, भयानकेऽद्भुते च ओजः प्रधानं स्वल्पं माधुर्य्यम्' इति तु निदर्शनकृत् ।

Digitized by Google

**शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः(२४)॥५॥**

**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्व्वत्र विहितस्थितिः।**

अन्यदिति व्याप्यमिह चित्तम्। सर्व्वत्रेति सर्व्वेषु रसेषु, सर्व्वासु रचनासु च॥

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्म्मता॥६॥**

गुणवृत्त्या उपचारेण (२५), तेषां गुणानाम्, (आकारे शौर्य्यस्येव)॥ कुतस्त्रय एव, न दश? इत्याह,

**केचिदन्तर्भवन्त्येषु, दोषत्यागात्परे स्थिताः।**

**अन्ये भजन्ति दोषत्वं कुत्रचित्, न ततो दश॥७॥**

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः(२६)समाधिः, या च विकटत्वलक्षणा (२७)

---

(२४) ओजसि शुष्केन्धनाग्निवत्, माधुर्य्ये स्वच्छवस्त्रजलवदिति, आश्रयतया रसे, व्यञ्जकतया च रचनायामिति च विभागः। येन गुणेन रसाः सहसैव चित्तं व्याप्नुवन्ति, स प्रसाद इति फलितार्थः। 'व्याप्नोति यः' इति कर्त्तृतया निर्द्देशोऽन्यवैलक्षण्येन करणत्वावगतये।

(२५) उपचारेण स्वव्यञ्जकतादिसम्बन्धेन लक्षणया, मधुरः शब्दः मधुरोऽर्थ इति व्यवहार इति भावः।

(२६) आरोहो गाढ़ता, अवरोहः शैथिल्यं, तयोः क्रमः, वैरस्याजनको विन्यासः, स च आरोहपूर्व्वकोऽवरोहः, अवरोहपूर्व्वको वा आरोहः।

(२७) विकटत्वं विच्छेदात् पदानां नृत्यत्प्रायत्वम्।



Digitized by Google

उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः; तेषामोजस्यन्तर्भावः(२८) । पृथक्पदत्वरूपं माधुर्य्यं भङ्ग्या(२९) साक्षादुपात्तम् । प्रसादेनार्थव्यक्तिर्गृहीता (३०) । मार्गाभेदरूपा समता क्वचिद्दोषः, तथाहि, मातङ्गाः किमु वल्गितैः-[१८८पृ०] -इत्यादौ, सिंहाभिधाने मसृणमार्गत्यागो गुणः । कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्य्यम्, औज्ज्वल्यरूपा (३१) कान्तिश्च स्वीकृता ।-एवं न दश शब्दगुणाः ॥

'पदार्थे वाक्यरचनं, वाक्यार्थे च पदाभिधा ।
प्रौढ़िर्व्याससमासौ च, साभिप्रायत्वमस्य च' (३२) ॥

---

(२८) वामनाद्युक्तस्य ओजस इव एषामपि गाढ़बन्धत्वेन ओजोगुणव्यञ्जकवर्णसादृश्येन ओजोगुणेऽन्तर्भावः । एवमन्यत्रापि ।

(२९) 'भङ्ग्या' माधुर्य्यव्यञ्जकमध्येऽसमासार्थकाद्वृत्तिपदोपादानरूपप्रकारान्तरेण ।

(३०) अर्थव्यक्तिर्झटित्यर्थोपस्थापनसामर्थ्यम् ।

(३१) कष्टत्वं श्रुतिकटुत्वम्, अपारुष्यं श्रुतिसुखावहत्वम्, औज्ज्वल्यं हालिकादिसाधारणपदविन्यासवैलक्षण्येन अलौकिकचमत्कारशालित्वम् ।

(३२) उक्तश्लेषादिनामकान् दश अर्थगुणान् दूषयति पदार्थे इति । अस्य विशेषणस्य । उक्तपञ्चप्रकारा प्रौढ़िरित्यर्थः । तत्राद्या यथा, चन्द्रे वक्तव्ये अत्रिलोचनसमुत्थं ज्योतिरिति वाक्यकथनम् । द्वितीया यथा, कान्तार्थिनी सङ्केतस्थानं गच्छतीति वाक्यार्थे वक्तव्ये अभिसारिका इति पदाभिधानम् । तृतीया परस्वं नापहर्त्तव्यमिति एकस्मिन् वाक्यार्थे वक्तव्ये पराद्य

-इति या प्रौढ़िः, ओज इत्युक्तम् (३३) तत् वैचित्र्यमात्रं न गुणः, तदभावेऽपि काव्यव्यवहारप्रवृत्तेः (३४)। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः (३५), अर्थवैमल्यात्मा (३६) प्रसादः, उक्तिवैचित्र्यरूपं माधुर्य्यम्, अपारुष्यरूपं (३७) सौकुमार्य्यम्, अग्राम्यत्वरूपा उदारता च श्लेषता।

---

नापहर्त्तव्यं, परवस्त्वापहारो अनुचितः, पराभरणाहरणम् इहामुत्रानिष्टकरमित्यादिना व्यासेन (नानावाक्येन) प्रतिपादनम्। चतुर्थी यथा, ते हिमालयमामन्त्र्येत्यादिना एकेनैव वाक्येन नानावाक्यार्थीभूतस्यामन्त्रणादेरुक्तिः। पञ्चमी यथा, कुर्य्यां हरस्यापि पिनाकपाणेरित्यादौ पिनाकपाणेरिति विशेषणस्य सार्थकत्वम्। महेश्वरानुयायिनस्तु साभिप्रायत्वमस्य चेति पाठं नाङ्गीकुर्व्वन्ति, तन्मते चतुर्व्विधैव प्रौढ़िः।

(३३) 'इति' उक्तपञ्चविधा या प्रौढ़िः ओजः-इत्युक्तं (वामनाद्युक्तार्थगुणस्वरूपं) तत् वैचित्र्यमात्रमित्यन्वयः।

(३४) अत्र तत्सत्त्वेऽपि रसाद्यभावे काव्यव्यवहाराप्रवृत्तेश्च-इत्यपि बोध्यम्। अयमभिप्रायः काव्यव्यवहारहेतुभूतानामेव गुणत्वमङ्गीकुर्व्वतां वामनादीनामताद्दशेऽस्मिन् ओजसि काव्यत्वाङ्गीकारो बाधित एवेति।

(३५) एवञ्चास्मिन् ओजसि ओजोऽन्तरेभ्यो विशेषोऽयम्। वस्तुतस्तु अत्र विशेषकथनात् सामान्यविशेषन्यायेन चतुर्ष्वेव ओजःसु वैचित्र्यमात्रं पर्य्यवस्यति।

(३६) अर्थवैमल्यम् अपेक्षितार्थमात्रपरिग्रहः।

(३७) अपारुष्यं परुषेऽप्यर्थे वाच्येऽपरुषरूपेणाभिधानं, यथा मृत इति वक्तव्ये कीर्त्तिशेषं गत इत्युक्तिरिति प्रदीपः।

Digitized by Google

**अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां (३८) च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृता । क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा(३९) श्लेषोऽपि विचित्रत्वमात्रम् । अवैषम्यस्वरूपा (४०) समता दोषाभावमात्रं न पुनर्गुणः, कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात् । अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यम् (४१), -इत्यर्थदृष्टिरूपः समाधिरपि न गुणः ॥**

(३८) रसस्य प्राधान्ये रसध्वनिना, अप्राधान्ये रसगुणीभूतव्यङ्ग्येन रसवदलङ्कारेणेति विशेषः ।

(३९) क्रमकौटिल्यं अतिक्रमः, तस्य अनुल्वणत्वम् अस्फुटता, तत्रोपपत्तिर्युक्तिस्तस्या योग इति, यथा दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरात् एकस्या नयने पिधाय विहितक्रीड़ानुबन्धच्छलः । ईषद्वक्रितकन्धरः सपुलकप्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बतीत्यत्र पिहितनयनामतिक्रम्यान्याचुम्बनादतिक्रमः, अस्य अस्फुटत्वम्, अनया तदज्ञानात्, तत्रोपपत्तिरेवमनया तु न ज्ञातव्यमिति प्रदीपतदुद्योतकृतः । दर्पणनिदर्शनादर्शकृतस्तु, क्रमः क्रियापरम्परा, कौटिल्यं विदग्धचेष्टितम्, अनुल्वणत्वं प्रसिद्धिः, उपपत्तिः उपपादकयुक्तिविन्यासः, तेषां योगो मेलनं, स एव रूपं यस्याः सा घटना आत्मा यस्य सः । तथाहि उक्तश्लोके क्रान्ता क्रियापरम्परा, पश्चादुपेत्य नयनपिधानादि विदग्धचेष्टितम्, अयमर्थो लोकप्रसिद्धः, एकासनसंस्थिते, पश्चादुपेत्य, नयने पिधाय, ईषद्वक्रितकन्धर इति चोपपादकानि, एषामत्र योग इत्याहुः ।

(४०) उपक्रान्तस्य उपसंहारे परित्यागः (प्रक्रमभङ्गदोषस्वरूपः) वैषम्यम् ।

(४१) अयोनिः केनाप्यनुल्लिखितपूर्व्वः, यथा, सद्योमुण्डितमत्तहून-

**तेन नार्थगुणाः वाच्याः,**

वाच्या वक्तव्याः ॥

**प्रोक्ताः शब्दगुणाश्च ये (४२)।**

**वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥८॥**

के कस्य? इत्याह,

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गाः, रणौ लघू।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्य्ये घटना तथा ॥९॥**

टठडढवर्ज्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः; समासाभावो मध्यमः समासो वेति समासः; 'तथा' माधुर्य्यवती (पदान्तरयोगेन (४३), रचना माधुर्य्यस्य व्यञ्जिका।

---

चिवुकप्रस्पर्द्धि नारङ्गकमित्यादि। अन्यच्छायायोनिः अन्यैरुल्लिखितमूलकोऽभिनवोऽर्थः, यथा, निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि नीलोत्पलेऽपि विमृषति करमर्पयितुं कुसुमलावीत्यादि; अत्र हि नयननीलोत्पलयोः प्रसिद्धामेवोपमामवलम्ब्यायमर्थ उद्भावितः। अयम्भावः, लोकशास्त्रकाव्यादिदर्शनजन्यनिपुणताया काव्यहेतुतया अर्थदर्शनाभावे काव्यशरीरमेव न निष्पद्यते इत्यर्थदृष्टेः काव्यशरीरनिर्व्वाहकत्वमेव न तु (पुत्रे पितुरिव) गुणत्वमिति।

(४२) ये माधुर्य्यौजःप्रसादाख्या (गुणाद्वच्या) शब्दगुणाश्च प्रोक्ताः, तेषामित्यन्वयः। शब्दगुणा इत्युक्तिस्तु शब्दात्मनां वर्णादीनां व्यञ्जकत्वसम्भवप्रदर्शनाय।

(४३) पदान्तरयोगः सन्धिः, यथा प्रतिमं तदङ्गम्-इति पदयोः सन्धौ

Digitized by Google

उदाहरणम्,

अनङ्गरङ्गप्रतिमन्तदङ्गम्भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्व्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥

योग आद्यतृतीयाभ्यामन्त्ययोः, रेण, तुल्ययोः ।
टादिः, शषौ, वृत्तिदैर्घ्यं, गुम्फ उद्धत ओजसि ॥१०॥

वर्गप्रथमतृतीयाभ्यामन्त्ययोः (द्वितीयचतुर्थयोः), रेफेण अध उपरि उभयत्र वा यस्य-कस्यचित्, तुल्ययोः (तेन तस्यैव) सम्बन्धः, टवर्गौ (अर्थात्) णकारवर्ज्जः, शकारषकारौ; दीर्घसमासः; विकटा सङ्घटना ओजसः (४४)। उदाहरणम्, मूर्द्धामुद्वृत्तकृत्तेत्यादि [१२७प०]

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् (४५)।
साधारणः समग्राणां, स प्रसादो गुणो मतः॥११॥

---

'न्त'-इति मधुरवर्णोत्पत्तिरिति महेश्वरः। वस्तुतः सन्धिं विनापि पौर्व्वापर्य्यविशेषेणापि रचना मधुरा भवति ।

(४४) व्यञ्जिका इति शेषः द्वितीयतृतीययोर्व्विजातीययोरपि सम्बन्धः, (तेन तस्येत्यस्य प्रथमेन प्रथमस्य, द्वितीयेन द्वितीयस्येत्याद्यर्थं कल्पयित्वा) विजातीयेन प्रथमादिना विजातीयप्रथमादेरपि योगोऽस्य व्यञ्जकः, णकारस्य लघोरेव वर्ज्जनमिति महेश्वरः। दीर्घसमासोऽपि विकट एवास्य व्यञ्जक इत्युद्योतकृत् ।

(४५) तथाच श्रुतिमात्रेणार्थबोधकाः सर्व्व एव (सुकुमारा वा विकटा वा) वर्णादयः प्रसादगुणस्य व्यञ्जका इत्यर्थाल्लभ्यते ।

Digitized by Google

समग्राणां रसानां सङ्घटनानाञ्च, उदाहरणम्,

परिम्लानं पीनस्तनजघनसङ्गादुभयतः,
तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः,
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

यद्यपि गुणपरतन्त्राः सङ्घटनादयस्तथापि,

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचना वृत्तिवर्णानामन्यथात्वमपीष्यते ॥ १२ ॥

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः, यथा,

मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु (४६) गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः,
केनास्मिन् सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड़ितोऽसौ ॥

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम् (४७), अभिनेयार्थञ्च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः, वक्ता चात्र भीमसेनः ॥

---

(४६) कोणः वादनदण्डः, केचित्तु 'ढक्काशतसहस्राणि भेरीशतशतानि च । एकदा यत्र वाद्यन्ते कोणाघातः स उच्यते' इति पारिभाषिकेषु ग्रन्थेषु सत्स्वपीत्यर्थमाहुः ।

(४७) अत्र वाच्यस्य प्रश्नरूपत्वात् । अभिनेयः अभिनयबोधनीयोऽर्थो

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः ।

यथा,

मौढ़च्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाक्रुष्टाश्वतिर्य्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्व्वत्काकुत्स्थवीर्य्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजाम्
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ।।

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते, तथाहि, आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः (४८) । एवमन्यदप्यौचित्यमनुसर्त्तव्यम् ।।

इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुण-
निर्णयो नाम अष्टम उल्लासः ।।

---

यस्य तत् नाटकादीत्यर्थः, अभिनयस्थले हि झटिति अर्थप्रत्यायनमेवोचितं, दीर्घ समासादिना तु तद्विलम्बः ।

(४८) आख्यायिकायां गद्यप्राधान्यात्, गद्ये च विकटवर्णस्यैव अभ्यर्हितत्वात् न मसृणवर्णादयः । विप्रलम्भकरुणयोस्तु तस्यामपि न दीर्घसमासादि तयोरतिसौकुमार्य्यात् । कथायान्तु वर्णनीयस्य सुखप्रतिपत्तेरेवोद्देश्यत्वात् न उद्धता वर्णादयः । नाटकादौ विच्छेदेन अभिनयसौकर्य्यात् न दीर्घसमासादय इति प्रदीपः ।

Digitized by Google

## ॥ नवम उल्लासः ॥



गुणविवेचने कृतेऽलङ्काराः प्राप्तावसराः, इति संप्रति शब्दालङ्कारानाह-, (१)

**यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते (२) ।**
**श्लेषेण काक्वा वा, ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥१॥**

तथेति श्लेषवक्रोक्तिः, काकुवक्रोक्तिश्च ।

तत्र पदभङ्गश्लेषेण यथा,

नारीणामनुकूलमाचरसि चेज्जानासि, कश्चेतनो
वामानां प्रियमादधाति, हितकृन्नैवाबलानां भवान् ? ।

---

(१) वक्रोक्त्यर्थान्तरन्यासौ यमकं श्लेषचित्रके । पुनरुक्तवदाभासः शब्दालङ्कृतयस्तु षट् ।

(२) एकेनान्याभिप्रायेणोक्तम् वाक्यम् अन्येन यदि अन्याभिप्रायकं कल्प्यते, तदा वक्रोक्तिः । अन्येनेति स्वयमन्यथाकरणरूपात् अपह्नुतेर्व्यवच्छेदः । अत्र च तत्तत्पदानां परिवृत्त्यसहत्वेन, शब्दस्यैव चमत्काराधायकतया च शब्दालङ्कारत्वमस्य ।



Digitized by Google

युक्तं किं हितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः ?
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः (३) ॥

अभङ्गश्लेषेण यथा,

अहो ! केनेदृशी बुद्धिर्दारुणा तव निर्म्मिता ? ।
त्रिगुणा श्रूयते बुद्धिर्नतु दारुमयी क्वचित् (४) ॥

काक्वा यथा,

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ(५) ॥

वर्णसाम्यमनुप्रासः,

---

(३) जानासि अभिज्ञोऽसि । मतम् इष्टम् । अत्र नारीणामिति पदं कामिनीपरतया वक्त्रा उक्तम्, प्रतिवक्त्रा तु न अरीणामित्यर्थपरतया योजितम्, ततस्तेन शत्रुपरतयोक्तम् वामानामिति पदम् वक्त्रा नारीपरतया योजितं, ततस्तेन हितकारिपरतया हितकृदिति, नारीपरतया अबलानामिति चोक्तम्, प्रतिवक्त्रा यथाक्रमं हितच्छेत्तृपरतया दुर्ब्बलपरतया कल्पितम्, ततस्तेन दुर्ब्बलपरतयोक्तं 'बलाभावप्रसिद्धात्मनः' इति पदं वक्त्रा बलासुरनाशक-(इन्द्र)-परतया योजितम् । अत्र नारीणामित्यत्र अबलानामित्र च सभङ्गः श्लेषः । यद्यपि अत्रैव वामानामित्यादिषु अभङ्गःश्लेषः सम्भवति, तथापि केवलाभङ्गश्लेषप्रदर्शनार्थमुत्तरोदाहरणम् ।

(४) त्रिगुणा सत्वरजस्तमोगुणात्मिका । अत्र दारुणा क्रूरा, काष्ठेनेत्युभयार्थपक्षेऽपि दारुणेति पदस्य न भङ्गः ।

(५) अत्र नैष्यतीति निषेधाभिप्रायेण नायिकयोक्तम्, सख्या तु काक्वा न एष्यति, अपि तु एष्यत्येवेत्यर्थकतया योज्यते इति प्रदीपः ।

Digitized by Google

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः (६)।

छेकवृत्तिगतो द्विधा (७)।

छेकाः विदग्धाः, वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः, गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च।

किं तयोः स्वरूपम्? इत्याह,

सोऽनेकस्य सकृत्पूर्व्वः,

अनेकस्य (अर्थात्) व्यञ्जनस्य, सकृदेकवारं सादृश्यं छेकानुप्रासः। उदाहरणम्,

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् (८)॥

---

(६) रसाद्यनुगतः प्रकृतरसव्यञ्जकवर्णसम्बन्धित्वेन प्रकृतरसानुकूलः। प्रकृष्टः अनतिव्यवहिततया चमत्कृत्याधायकः न्यास आवृत्तिः। तथा चानतिव्यवहितत्वेन चमत्कृत्याधायिका प्रकृतरसव्यञ्जकसदृशवर्णावृत्तिरनुप्रासः इति फलितम्, अत्रैव वर्णसाम्यपदस्य तात्पर्य्यम्। शब्दस्य साम्ये तदन्तर्गतवर्णस्य साम्यमप्यक्षतमिति लाटानुप्राससंग्रहः। प्रकृतरसप्रतिकूलेऽपि अनुप्रासव्यवहारो भाक्त इति।

(७) अनुप्रासो हि द्विविधः वर्णानुप्रासः शब्दानुप्रासश्चेति निरर्थकवर्णानुप्रासः प्रथमः, द्वितीयस्तु सार्थकवर्णानुप्रासस्वरूपः। तत्र प्रथमं वर्णानुप्रासं विभजति छेक इति। छेकगतः छेकानां प्रचुरप्रयोज्यः, वृत्तिगतः वृत्त्यन्तर्निविष्टः। वृत्तिश्च माधुर्य्यादिव्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य सङ्घटनाख्यो व्यापारविशेषः।

(८) स्पन्द मन्द इत्यत्र, गण्ड पाण्डु इत्यत्र चानेकव्यञ्जनस्य साम्यम्।

Digitized by Google

एकस्याप्यसकृत्परः ॥ २ ॥

एकस्य, अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यम् वृत्त्यनुप्रासः (९) । तत्र (१०),

माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।

ओजःप्रकाशकैस्तैस्तु परुषा,

उभयत्रापि प्रागुदाहृतम् [२२२ पृ० । २ एवं ११ प०] ।

कोमला परैः ॥ ३ ॥

परैः शेषैः, तामेव केचित् ग्राम्येति वदन्ति ।

उदाहरणम्,

अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः ।
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला(११) ॥

---

(९) "वस्तुतस्तु छेकानुप्रासभिन्नं लक्ष्यम्, अन्यथैकस्य सकृदावृत्ते-रसंग्रहापत्तिरेवञ्च एकस्यैव सकृदसकृत्, अनेकस्य तु असकृत् साम्यम् वृत्त्य-नुप्रास इति पर्य्यवसन्नम्" इति प्रदीपः । एकस्य सकृत्साम्यं न चमत्कारजन-कमिति नास्यानुप्रासत्वं ग्रन्थकृदनुमतमिति यथाश्रुतमेव सम्यगिति तु केचित् ।

(१०) वृत्त्यनुप्रासघटकतयोद्दिष्टां वृत्तिं प्रसङ्गात् विभजति तत्रेति ।

(११) अत्र न कोऽपि वर्णो माधुर्य्यव्यञ्जकाः, येऽपि च त्रयो लघुर-काराः, ते त्वतिव्यवहिता न माधुर्य्यं व्यञ्जयितुमीशाः । नेदं माधुर्य्यौजसो-रव्यञ्जकतया प्रागुदाहृतमिति अत्रोदाहृतम् ।

Digitized by Google

**केषाञ्चिदेता वैदर्भी-**
**प्रमुखा रीतयो मताः ।**

एतास्तिस्रो वृत्तयः वामनादीनां मते वैदर्भी-गौड़ी-पाञ्चाल्याख्या रीतयो मताः ॥

**शाब्दस्तु लाटानुप्रासो**
**भेदे तात्पर्य्यमात्रतः (१२) ॥ ४ ॥**

शब्दगतोऽनुप्रासः, शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात्, लाटजनवल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ॥

**पदानां सः,**

स इति लाटानुप्रासः । उदाहरणम्,

यस्य न सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य ॥ (१३)

---

(१२) शाब्दः सार्थकवर्णगतः । उद्देश्यविधेयभावादिः, कर्तृत्वकर्म्मत्वादिरूपस्य पदार्थयोः सम्बन्धोऽन्वयः, तदेवात्र तात्पर्य्यं, तन्मात्रस्य भेदे (न तु स्वरतोऽर्थतः क्रमतश्च भेदेऽपि) । अत्रापि वर्णसाम्यमित्यनुषज्यते । तेन विभिन्नान्वयपराणां समानानुपूर्व्वीकाणां तुल्यस्वरूपाणामेकार्थानां वर्णानां (वर्णयोर्व्वा) अनतिव्यवधानेनावृत्तिः शाब्दानुप्रासः; स च लाटानुप्रास इत्युच्यते । शाब्दानुप्रासस्तु प्रथमतो द्विविधः, पदगतो नामगतश्चेति । तत्राद्योऽपि एकानेकपदगतत्वेन द्विविधः, अन्त्यश्च असमासगतत्वेन, एकसमासगतत्वेन विभिन्नसमासगतत्वेन च त्रिविधः इति मिलित्वा शाब्दानुप्रासः पञ्चविधः । एतदेव 'पदानां सः' इत्यादिना 'तदेवं पञ्चधा मतः' इत्यन्तेन दर्शयिष्यते ।

(१३) अत्र सविधे दयितेत्यादीनां बहूनां पदानां तात्पर्य्यमात्रभेदेना-

Digitized by Google

पदस्यापि,

अपिशब्देन स इति समुच्चीयते । उदाहरणम्,

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥

वृत्तावन्यत्र, तत्र वा ।

नाम्नः स वृत्त्यवृत्त्योश्च,

एकस्मिन् समासे, भिन्ने वा समासे, समासासमासयोर्व्वा नाम्नः प्रातिपदिकस्य, (न तु पदस्य), सारूप्यम्(१४)। उदाहरणम्,

सितकरकररुचिरविभा विभाकराकार! धरणिधर! कीर्त्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥

तदेवं पञ्चधा मतः ॥ ५ ॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः ।

---

वृत्तिः । पूर्व्वार्द्धे वदनस्यैव, उत्तरार्द्धे तुहिनदीधितेरेव च विधेयतया आरोपणं, न तु लक्षणया यथाक्रमं तापकरत्वस्य शीतलत्वस्य च विधेयत्वं विवक्षितं, तथात्वे भिन्नार्थत्वापत्त्या लाटानुप्रासो न स्यात् । लाटानुप्रासादौ उद्देश्यविधेययोर्वैपरीत्येन निर्द्देशो न दोषाय ।

(१४) "अत्र समास इत्युपलक्षणम्, पञ्चविधवृत्तेरपि, एतेन हंसायते चारुगतेन कान्ता, कान्तायते स्पर्शसुखेन वायुरित्यादिसंग्रहः इति," "नाम्न इत्युपलक्षणम्, जित्वा विश्वं भवानत्र विहरत्यवरोधनैः, विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गत इति केचित्" इति च उद्योतकृत् ।

Digitized by Google

यमकम् (१५),

समरसमरसोऽयमित्यादावेकेषामर्थवत्त्वे अन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुम्,-इति अर्थे सतीत्युक्तम् । सेति सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ।

पादतङ्गागवृत्ति तद्यात्यनेकताम् ॥ ६ ॥

प्रथमो द्वितीयादौ [३] द्वितीयस्तृतीयादौ [२], तृतीयश्चतुर्थे [१], प्रथमस्त्रिषु [१], अपीति (१६) सप्त । प्रथमो द्वितीये, तृतीयश्चतुर्थे; प्रथमश्चतुर्थे, द्वितीयस्तृतीये इति द्वे । तदेवं पादजं नवभेदम्(१७)। अर्द्धावृत्तिः, श्लोकावृत्तिश्चेति

---

(१५) अर्थभिन्नानां विभिन्नार्थानां (तेन लाटानुप्रासाद्भेदः)। सा तत्क्रमिका। एकेन क्रमेणासमानार्थानां समानवर्णानां (वर्णयोर्वा) आवृत्तिर्यमकमिति फलितोऽर्थः। 'यमकादौ भवेदैक्यम् डलयोः रलयोः षशोः बवयोर्णनयोश्चान्ते सविसर्गाविसर्गयोः, सविन्दुकाविन्दुकयोः' ००००० इत्युद्योतकृत्।

(१६) द्वितीयादौ द्वितीये तृतीये चतुर्थे वा। तृतीयादौ तृतीये चतुर्थे वा (न तु प्रथमेऽपि, तस्य 'प्रथमो द्वितीयादौ'-इत्यनेन गतार्थत्वात्)। त्रिष्वपि द्वितीये तृतीये चतुर्थेऽपि। 'यमकन्तु विधातव्यं न कदाचिदपि त्रिपात्' इति नियमात् एकस्यापरपादद्वयगतत्वेन भेदो न कृतः इत्यसंकीर्णं पादगतं यमकं सप्तविधमेव। संकीर्णन्तु पादगतं अनन्तरोक्तम् चतुर्विधम्।

(१७) पादजम् एकदैकपादमात्रावृत्तिरूपम्। एकदानेकपादावृत्तिरूपन्तु अनन्तरोक्तभेदद्वयमिति भेदेनोक्तम्।

Digitized by Google

द्वे (१८)। द्विधा विभक्ते पादे प्रथमपादादिभागः पूर्व्ववत्(१६)द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिभेदाः, (श्लोकान्तरे हि नासौ भागावृत्तिः (२०)। त्रिखण्डे त्रिंशत्, चतुःखण्डे चत्वारिंशत्(२१)। 'प्रथमपादादिगतान्त्यार्द्धादिभागो द्वितीयपादादिगते आद्यार्द्धादिभागे यस्यते'-इत्याद्यन्वर्थतानुसरणेनानेकभेदम्(२२), अन्तादिकम् आद्यन्तिकम्, तत्समुच्चयः; मध्यादिकम्, आदिमध्यम्, अन्तमध्यं, मध्यान्तिकं, तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु, अनियते च स्थाने आवृ-

---

(१८) अर्द्धस्य पादद्वयात्मकतया, श्लोकस्य पादचतुष्टयात्मकतया च एते अपि पादगते। तेन पादगतमेकादशविधम्। एतेषां नामानि प्रदीपादवगन्तव्यानि।

(१६) पूर्व्ववत् पादावृत्तिरीत्या। प्रथमपादस्य आदिभागोऽन्तभागश्च यथाक्रमं द्वितीयादिपादानां आदौ अन्ते च भागे आवर्त्त्यते, एवं द्वितीयस्याद्यन्तभागौ तृतीयादीनामाद्यन्तभागेऽपीति बोध्यम्। इदञ्च आद्यभागोऽपरस्याद्य एव भागेऽन्तभागोऽन्त्ये एव भागे इति सजातीयभागावृत्तिरूपम्।

(२०) तेन न प्रत्येकमेकादशविधत्वेन द्वाविंशत्यापत्तिः।

(२१) प्रतिभागमावृत्तेर्दशविधत्वात्।

(२२) विजातीयभागावृत्तिमाह प्रथमेति। अन्वर्थता योगार्थता। प्रथमादिपादानामन्तादिभागयोर्द्वितीयादिपादानामादावन्ते च यथाक्रममावृत्तौ अन्तादिकम् आद्यन्तिकञ्च यमकम्, एतयोरेकत्र समावेशे समुच्चयः। एवं मध्यादिकाद्यपि ऊह्यम्। आद्यादिकादि तु न विजातीयमिति अत्र नोक्तम्।

Digitized by Google

क्तिरिति प्रभूततमभेदम् । तदेतत्काव्यान्तर्गड़ुभूतम् (२३), इति नाम्यभेदलक्षणम् क्षतम् । दिङ्मात्रमुदाह्रियते,

सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय(२४) ।। [ए०पा०भा०]

विनाऽयमेनो नयताऽसुखादिना
विना यमेनोनयता सुखादिना ।
महाजनोऽदीयत मानसादरम्
महाजनोदी यतमानसादरम् (२५) ।। [अर्द्ध० भा०]

स त्वारम्भरतोऽवश्यमबलम् विततारवम् ।

---

(२३) रसास्वादविलम्बकतया इक्षोरिव ग्रन्थिभूतम् ।

(२४) सतीनां नारीणां भरणमाभरणस्वरूपाम् उमां याति शरीरार्द्धरूपेण प्राप्नोति यस्तमर्द्धनारीश्वरूपम् । आराध्य आराधय । ततः आराधनात्, सन्ना अवसन्ना अरीणामिभा यत्र, तादृशो रणो यस्य सः सन् अमायोऽकपटः ।

(२५) विना अयम् एनः नयता असुखादिना विना यमेन ऊनयता सुखादिना । महाजनः अदीयत मानसात् अरम् महाजनोदी यतमान-साद-रम् इति छेदः । अयं विना (पक्षिस्वरूपः पुरुषः) यमेन यतमानसादरं (यतमानानां रक्षितुमुद्यतां सादं विषादं राति ददातीति तत्) यथा स्यात् तथा अरं (शीघ्रं) मानसात् (मानसं चित्तमेव मानसं मानससरस्तस्मात्) अदीयत (अखण्ड्यत) । अयं किम्भूतः, महाजनः (महात्मा), महाज-नोदी च (महस् उत्सवम् अजन्ति क्षिपन्ति ये दुर्जनास्तन्नोदी तदपसारकः), यमेन किम्भूतेन एनो विना (अपराधन्हते) नयता (स्वपुरं प्रापयता) असुखादिना (प्राणभक्षकेण), सुखादिना ऊनयता च (हीनं कुर्व्वता च) इत्यर्थः ।

सर्व्वदा रणमानैषीद्वानलसमस्थितः ॥
सत्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्व्वदारणमानैषी दवानलसमस्थितः (२६) ॥ [श्लो०आ०]
अनन्तमहिमव्याप्तविश्वाम् वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥ [अन्त०आ०आ०]
यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम्(२७)॥[युग्मकम्]

---

(२६) स तु आरम् भरतः अ-वश्यम् अबलं विततारवम् । सर्व्वदा रणम् आनैषीत् अवान् अलसम् अ-स्थितः । सत्वारम्भरतः अवश्यम् अवलम्बिततारवम् । सर्व्वदारणमानैषी दवानलसमस्थितः इति छेदः । स तु आरं (अरिसमूहम्) अबलं, (सैन्यशून्यं), विततारवं (विस्तृतार्त्तनादम्), अवलम्बिततारवञ्च (अवलम्बितं तारवं तरुसमूहो वनं येन तत्) यथा स्यात् तथा सर्व्वदा रणं आनैषीत् (प्रापयामास), आरं कीदृशम्, भरतः (अतिशयेन) अ-वश्यम् । स किम्भूतः अलसं यथा तथा अ-वान् (अ-गच्छन् शीघ्रगामी), अ-स्थितः (अ विष्णौ स्थितः विष्णुपरायणः), अवश्यं (नियतम्) सत्वारम्भरतः (सात्विककर्म्मानुष्ठाननिरतः), सर्व्वदारणमानैषी (सकलजनहृदयविदारणमानेच्छुः), दवानलसमस्थितश्चेत्यर्थः ।

(२७) यस्यामानतोऽयं जनः नयात्ययं (नीतिविश्लेषं) न याति, कुतः अयदानतः (अर्थात् तयैवास्य शुभावहविधिदानात्) । शिवे मङ्गले हिताम् अनुकूलाम्, शिवेन महादेवेन ईहिताम् प्रार्थनीयाम्, स्मरेण कन्दर्पेण अमिताम् मातुमयोग्याम् अनभिभूतामित्यर्थः । अत्र एकस्मिन्नेव पादे आद्यान्तिकं भागावृत्तियमकम् ।

सर स्वति प्रसादं मे, स्थितिं चित्तसरस्वति।
सरस्वति! कुरु चेत्र-कुरुक्षेत्र-सरस्वति! (२८)॥
ससार साकन्दर्पेण कन्दर्पेण स-सारसा।
शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा (२९)॥

मधुपराजि-पराजित-मानिनी-
जनमनःसुमनः सुरभिश्रियम्।
अभृत वारित-वारिजविप्लवं
स्फुटित-ताम्र-तताम्रवनं जगत् (३०)॥

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम्॥

## वाच्यभेदेन भिन्ना यत् युगपद्भाषणस्पृशः।

---

(२८) स्वतिप्रसादम् (सुन्दरातिप्रसन्नताम्) सर (प्राप्नुहि) चित्तसरस्वति चित्तसमुद्रे। क्षेत्रं शरीरमेव कुरुक्षेत्रं, तत्र सरस्वत्याख्यनदीरूपे। नद्याः समुद्रस्थितेरौचित्येन मम चित्तसमुद्रे स्थितिं कुर्वित्यर्थः। अत्र प्रथमार्द्धे आद्यान्तिकमेव केवलं, उत्तरार्द्धे तु आद्यन्तिकम् अन्तादिकञ्चोभयमिति तेषां समुच्चयः।

(२९) नवा शरत् कन्दर्परूपेण दर्पेण साकं ससार। किम्भूता, स-सारसा (सारसेन पक्षिविशेषेण पद्मेन वा सहिता), शरं (काण्डं) बिभ्राणा (पोषयन्ती परिपाकं प्रापयन्तीत्यर्थः), नवाना (नवमनः शकटं कर्द्दमाभावेन पथि यस्यां सा), न अविभ्राणा (वीनां पक्षिणां भ्राणः शब्दः, न तेन रहिता) च। अत्र द्वयोरप्यर्द्धयोराद्यन्तिकम् अन्तादिकञ्चोभयमिति तत्समुच्चयः।

(३०) सुरभिर्वसन्तकालः। ततं विस्तृतम्। अत्रानियतभागे मध्यमध्यकयमकसमुच्चयः।

Digitized by Google

**श्लिष्यन्ति शब्दाः, श्लेषोऽसावक्षरादिभिरष्टधा॥७॥**

'अर्थभेदेन शब्दभेदः'(३१)-इति दर्शने, 'काव्यमार्गे स्वरो न गण्यते' इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यत् युगपदुच्चारणेन श्लिष्यन्ति (भिन्नं स्वरूपमपह्नुवते), स श्लेषः । स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा (३२)। क्रमेणोदाहरणम्,

अलङ्कारः शङ्काकर-नरकपालं, परिजनो
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः ।

---

(३१) सकृदुच्चरितः शब्दः सकृदर्थं गमयतीतिनियमेन एकेन शब्देनार्थद्वयप्रतीत्यसम्भवात् अर्थद्वयप्रतीत्यर्थं (श्लेषस्थले) एकाकारौ शब्दौ द्वौ स्तः-इत्यवश्यमङ्गीकार्य्यम्, तौ च एकेन प्रयत्नेनैकदोच्चार्य्यतया पृथक्तया नानुभूयेते, तथाच एकप्रयत्नोच्चार्य्यतया भिन्नत्वेन अननुभूयमानत्वमेव श्लेषः इति फलितम् । विभिन्नसमासादीनामुदात्तादिस्वरभेदनियमात् तदनुसारेण उच्चारणे श्लेषाभावप्रसङ्गस्तु, 'काव्ये उदात्तादिस्वरविशेषमनादृत्य सर्व्वेष्वेव समासादिष्वेकविधमेवोच्चारणम्' इत्यङ्गीकारेण निराकृतः । "यत्रानेकस्मिन् अर्थे प्रकरणादिकं युगपदवतरति, तत्र श्लेषः ; ...... यत्र तु एकत्रैव, तत्र व्यञ्जना" इति उद्योतकृत् । यत्र कस्मिन्नपि अर्थे न प्रकरणादिनियमस्तत्रापि श्लेषः इति तु वयम् । अत एव "यत्र प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ" इत्यनुपदं ग्रन्थकृदाह स्म ।

(३२) विजातीयत्वेऽपि विभिन्नस्वरूपापह्नवो हि चमत्कारातिशयं पुष्णातीति वर्णादीनां मध्ये यस्य वैजात्येऽपि (विभक्तिविशेषयोगसमासादिना ऐकरूप्येण) श्लिष्टत्वम्, तत्र तच्छ्लेषनाम्नैव व्यपदेशः । यथोदाहरणे विधु-विधिशब्दयोः श्लिष्टत्वेन तदन्तर्गतयोर्व्विजातीययोरपि उकारेकारवर्णयोः (सप्तमीविभक्तियोगेन औकारत्वापन्नतयैकरूप्यात्) श्लेषः, स एव चमत्कारा-

अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्,
विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ [वर्ण०]

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव! ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ [पद०]

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः(३२)॥[लिङ्ग०]

एष वचनश्लेषोऽपि ।

---

तिशयजनकतया व्यपदेशः । एवं परत्रापि । प्रकृत्यादिघटकानां एकस्य वर्णस्य विजातीयत्वे वर्णश्लेषः, अनेकस्य तथात्वे प्रकृत्यादिश्लेषः । विभक्त्यन्तसमुदायस्य विभिन्नस्वरूपत्वे पदश्लेषः, तदन्तर्गतायाः केवलायाः प्रकृतेः प्रत्ययस्य वा तथात्वे तु यथायथं प्रकृत्यादिश्लेषः । विभक्तिर्द्विविधा सुप्तिङ्प्रत्ययभेदात्, एवञ्च सामान्यविशेषन्यायेन विभक्तिस्वरूपयोः सुप्तिङ्प्रत्यययोः श्लिष्टत्वे विभक्तिश्लेषः, तदन्यत्र प्रत्ययश्लेषः इति विशेषः ।

(३२) भक्तिप्रह्वः भक्तिनम्रः, स च नेत्रपक्षे विलोकनस्य कर्म्म, तनुपक्षे कर्त्ता । ध्यानालम्बनतां ध्यानविषयतां, नेत्रपक्षे हितप्राप्तये नीते, (सर्व्वाङ्गस्य ध्येयत्वेन नेत्रयोरपि ध्येयत्वादिति महेश्वरः), तनुपक्षे ईहितप्राप्तये नीता । एवं तनुपक्षे महानिधी इत्यत्र 'ढ्रलोपे पूर्व्वस्य दीर्घोऽणः' [६ । ३ । १११ पा०] इति सूत्रेण रकारे परे दीर्घः इति विशेषः । अत्र प्रणयिनी-इत्यादिषु नपुंसकस्त्रीलिङ्गयोर्द्विवचनैकवचनयोश्च श्लेषः, एवञ्च तयोरत्र सङ्करः । महानिधी-इत्यत्र प्रथमाद्विवचनैकवचनयोः, कुरुतामित्यत्र परस्मैपदद्विवचना-

Digitized by Google

**महदे सुरसन्धम्मे तमवसमासङ्गमागमाहरणे ।**
**हरबहुसरणं तं चित्तमोहमवसरउमे सहसा(३४)।। [भाषा०]**
**अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।**

सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः(३५) ।। [प्रकृति०]
रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्व्वसम्पत्सहस्रम् ।

---

त्वनेपदैकवचनयोश्च लिङ्गश्लेषरहितयोः श्लेषः । एवं 'हरिरत्नाम चाधनुत्' इत्यत्र वचनश्लेषनिरपेक्षयोर्लिङ्गश्लेष इति अनयोः पृथगुक्तिः ।

(३४) अत्र 'संस्कृतप्राकृतयोः श्लेषः' इति प्रदीपादयः, 'संस्कृतमहाराष्ट्रयोरिति दर्पणादयः । वयन्तु प्राकृतप्रकाशसंचिप्तसाराष्टमपादीयसूत्राणामुभत्वैवानुसरणाननुसरणादर्शनादुदासीना एवास्म । तत्र संस्कृतपक्षे महदे ! सुर-सन्धं मे तम् अवसमासङ्गम् आगमाहरणे । हर बहुसरणम् तम् चित्तमोहं अवसरे उमे ! सहसा इति छेदः । महः उत्सवः । सुरसन्धं सुरैः सन्धा मिलनं यस्मात् तम्, सुराणामप्यभिलसनीयमिति वा, अव रक्ष । आगमाहरणे विद्योपार्ज्जने । बहु वारंवारं सरणं संसारो यस्मात् तं । पक्षान्तरे, महदेहि रसं धर्म्मे तमवसम् आसं गमागमा हर णे । हरवहु ! सरणं तं चित्तमोहम् अवसरउ मे सहसा इति छेदः । मम देहि रसम् धर्म्मे तमोवशामाशाम् गमागमात् हर नः । हरवधु ! शरणं त्वं चित्तमोहोऽपसरतु मे सहसा इति सं० । रसं प्रीतिं, गमागमात् संसारादित्यर्थः । अत्र सहसेति पदादन्यत्र सर्व्वत्रैव भाषाश्लेषः ।

(३५) वक्ष्यति धारयिष्यति कथयिष्यति च । सामर्थ्यकृत् सामर्थ्यच्छेत्ता तत्कारकश्च यथाक्रममर्थः । अत्र वहिवच्योः, कृन्ततिकरोत्योश्च प्रकृत्योरेव विभिन्नस्वरूपता, न तु प्रत्ययस्यापीति प्रकृतिश्लेषः ।

प्रमथनिवहमध्ये जातुचित् त्वत्प्रसादात्
अहमुचितरुचिः स्यान्नन्दिता सा तथा मे (३६) ॥ [प्रत्यय०]
सर्व्वस्वं हर सर्व्वस्य, त्वं भवच्छेदतत्परः।
नयोपकारसांमुख्यमायासि तनुवर्त्तनम् (३७) ॥ [विभक्ति०]

**भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत् (३८)।**

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्,

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः।

---

(३६) चयाः उत्सवः। सहस्रमिति क्रियाविशेषणम्। अत्र नन्दिता (आनन्दकः) स्याम्, तथा नन्दिता (नन्दिनसन्नामकगणाधिपस्य भावः नन्दिता) स्यादित्यर्थः। एवञ्च स्याम् स्यात् इति उत्तमपुरुषप्रथमपुरुषयोः श्लेषः, (तस्य च पृथगनुक्तेः प्रत्ययश्लेषान्तर्भावः) तथा नन्दितेत्यत्र तृच्-तलयोः कृत्तद्धितप्रत्यययोः श्लेषः।

(३७) शिवं प्रति भक्तस्य, पुत्रं प्रति दक्षोक्तिरियम्। तत्र प्रथमपक्षे हर! शिव! भवच्छेदतत्परः संसारनिवर्त्तकः। नयोपकारसाम्मुख्यं (नीतेरुपकारस्य च साम्मुख्यमानुकूल्यं यस्मात् तत्) तनुवर्त्तनं (शरीरावस्थितिम्) आयासि (प्राप्नोषि) इति। पक्षान्तरे च हर इति भव इति च क्रियापदम्। उपकारसाम्मुख्यं (प्रत्युपकारकरणं) नय (अपनय), वर्त्तनम् (जीविकाम्) आयासि (परेषाम् आयास-(क्लेश)-दायकम्) तनु (विस्तारय) इत्यर्थः। अत्र हर इत्यादिपदम् एकत्र सुबन्तम्, अपरत्र तु तिङन्तमिति विभक्तिश्लेषः एवमायासि तनु-इत्यादावपि बोध्यम्।

(३८) पूर्व्वम् "अचरादिभिरष्टधा" इत्युक्तेः अत्र,भेदाभावादक्षरादेरिति पाठो भवितुमुचितः।

Digitized by Google

शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते (३८) ॥

अत्र प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ ।

ननु (४०) स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्य्याणां, तदभावादभिन्नप्रयत्नोच्चार्य्याणाञ्च शब्दानां बन्धेऽलङ्कारा-

---

(३८) चणचमः चणमात्रेणैव समर्थः । राजपच्चे परगोत्राणां शत्रुकुलानां पचस्य सहायस्य । शतकोटिना वज्रतुल्येन अस्त्रेण दतां (द्यति खण्डयति यः तस्य भावस्तत्ता) छेदकतामिति, विबुधेन्द्रः पण्डितराज इति चार्थः । इन्द्रपच्चे परगोत्राणां श्रेष्ठपर्व्वतानां पचस्य पतत्रस्य इति, विबुधेन्द्रः देवराज इति चार्थः । राजपच्चे शतकोटिदतामित्यस्य शतकोटेर्दातृतामित्यर्थकत्वेऽस्मिन् अंशे नायं प्रभेदः, किन्तु पूर्व्वोक्तावेव प्रत्ययश्लेषप्रकृतिश्लेषौ ।

(४०) श्लेषो द्विविधः, सभङ्गोऽभङ्गश्चेति । तत्राद्यः पृथुकार्त्तस्वरपात्रमित्यादौ, अत्र हि पृथुकार्त्तस्वरस्य पात्रमिति, पृथुकानामार्त्तस्वरस्य पात्रमिति च पदभङ्गः । अन्यस्तु योऽसकृत्परगोत्राणामित्यादौ, अत्र हि उभयस्मिन् पच्चे एकरूपमेव पदम् । तत्र सभङ्गश्लेषो विजातीयशब्दयोः श्लेषत्वेन शब्दश्लेषः, तत्र हि उदात्तानुदात्तस्वरितात्मको नैकः स्वरः, किन्तु भिन्नौ द्वौ, न च स्वरभेदे उच्चारणप्रयत्नस्य ऐक्यम्, अपि तु विभिन्नत्वमेव, विभिन्नप्रयत्नोच्चारणयोग्यानाञ्च विजातीयत्वमेव नियतम्, तथापि "काव्यमार्गे स्वरो न गण्यते"-इति नियममाश्रित्य स्वरविशेषमननुसन्धायोच्चारणात् श्लिष्टत्वमिति । अभङ्गस्तु अर्थश्लेष एव, तत्र स्वराभेदेन उच्चारणप्रयत्नस्यैक्यात् न शब्दानामपि वैजात्यम्, किन्त्वर्थयोरेव । तथा, श्लेषस्य उपमाद्यलङ्कारान्तरसंकीर्णं एव नियतः, उपमादयस्तु श्लेषासंकीर्णा अपि सम्भवन्तीति सामान्यविशेषन्यायेन, श्लेषः उपमाद्यलङ्कारान्तरबाधक इति उपमाद्यलङ्कारान्तराणां प्रतिभायाः (आभासत्वेन प्रतीतेः) उत्पत्तौ हेतुः, श्लेषो हि विशेषतया अलङ्कारपदवीमधिकुर्व्वन् उपमा[illegible]न सम्भाव्यमानानपि

Digitized by Google

न्तरप्रतिभोत्पत्तिहेतुः (४१) शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधो-ऽप्यर्थालङ्कारमध्ये गणितोऽन्यैरिति कथमयं शब्दालङ्कारः ?। उच्यते, इह (४२) दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः, स अन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते, तथाहि, कष्टत्वादिगाढ़त्वाद्यनुप्रासादयः, व्यर्थत्वादिप्रौढ्याद्युपमा-दयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यव-स्थाप्यन्ते।

---

प्रतिबध्नन् तेषामलङ्काराभासत्वम् प्रत्याययतीति। द्विविधोऽपि श्लेषोऽर्थ-सापेक्षतया वस्तुतोऽर्थालङ्कार एवेति अलङ्कारसर्वस्वकारादिभिरर्थालङ्कार-मध्ये संगृहीतः इति अस्य शब्दालङ्कारत्वकथनं नोचितमिति पूर्व्वपक्षः। अस्य पूर्व्वपक्षस्य चांशत्रयम्,-अभङ्गश्लेषस्यार्थालङ्कारत्वमित्येकः, श्लेष उपमाद्यल-ङ्कारबाधक इत्यपरः, उभयरूपस्यार्थालङ्कार इति चान्य इति।

(४१) अत्र अलङ्कारान्तरस्य प्रतिभोत्पत्तिहेतुरिति षष्ठीसमासः कार्य्यः, 'एकप्रयत्नोच्चार्य्याणां तच्छायाञ्चैव बिभ्रताम्। स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते। अलङ्कारान्तरगतां प्रतीतिं जनयत् पदैः द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम्'-इत्युक्तेः, "श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरम्"-इति विभि-न्नविभक्तिकतया चन्द्रिकता (२४६। ३ प०) निर्द्दिश्यमानत्वाच्च। एवञ्च महे-श्वराद्यायाससम्पादितोऽपि बहुव्रीहिर्नोऽस्माभ्यं रोचते।

(४२) तत्र प्रथमतः पूर्व्वपक्षप्रथमांशं दूषयितुं दोषगुणालङ्काराणां शब्दार्थगतत्वे नियामकं दर्शयति इहेति। अयमत्र सिद्धान्तः, शब्दार्थयोर्मध्ये यस्मिन् (शब्दे अर्थे वा) सति ये दोषगुणालङ्काराः सन्ति, असति च न सन्ति, ते तदधीनस्वरूपतया तदीया इति व्यवस्थाप्यन्ते। एतन्मूलक एव 'शब्दपरिवृत्तिसहत्वासहत्वाभ्यां (तच्छब्दमनुपादाय तच्छब्दसमानार्थकशब्दोपा-



Digitized by Google

स्वयञ्च पल्लवाताम्रभास्वत्करविराजिता । (इत्यभङ्गः शब्दश्लेषः)
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा(४३)॥ (इति सभङ्गः शब्दश्लेषश्च)

-इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नं, न त्वाद्यस्यार्थश्लेषत्वम् । अर्थश्लेषस्य तु स विषयः, यत्र शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना, यथा,

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥

---

दानेऽपि सम्भवासम्भवाभ्याम्) शब्दार्थगतत्वव्यवस्थितिः' इति प्राचां प्रवादः । एवञ्च यथा, श्रुतिकटुत्वादयो दोषाः, ओजआद्यपरनामानो (वामनाद्युक्ताः) गाढ़त्वादयो गुणाः, अनुप्रासादयश्चालङ्काराः तत्तच्छब्दे सति सन्ति, असति न सन्ति चेति शब्दगता इत्युच्यन्ते, यथा च, अपुष्टार्थत्वादयो दोषाः, ओजआद्यपरनामानो (वामनाद्युक्ताः) प्रौढ़िप्रभृतयो गुणाः, उपमादयश्चालङ्काराः सति तस्मिन्नर्थे सन्ति, असति च तस्मिन् न सन्ति च, तत्तच्छब्दपरिवर्त्तनमपि च सहन्ते इत्यर्थगता इति नियम्यन्ते । तथा उभयश्लेषोदाहरणतया निर्णीतेऽपि स्वयञ्च पल्लवेत्यादौ, परार्द्ध इव प्रथमार्द्धेऽपि तत्तच्छब्दे सति असति च श्लेषस्य सत्त्वमसत्त्वमिति शब्दाधीनसत्त्वरूपत्वाविशेषेण शब्दालङ्कारत्वमवश्यं वाच्यम्, न चैतावता अर्थश्लेषस्य निर्व्विषयत्वम् शङ्क्यम्, स्तोकेनेत्यादौ स्तोकादिपदपरिवर्त्तनेनाल्पादिपदोपादानेऽपि श्लेषस्याक्षुण्णतया तस्यैवार्थश्लेषविषयत्वादिति । अयञ्च सिद्धान्तः, इहेत्यादि-'खलस्य च'-इत्यन्त-प्रतीकप्रतिपाद्यः ।

(४३) पार्व्वतीपक्षे आस्वापं (न सुखेन आप्यते इति व्युत्पत्त्या) सुदुर्लभं यत् फलं मोक्षादि, तल्लुब्धानामीहितस्य वाञ्छितस्य प्रदात्रीत्यर्थः । प्रभातसन्ध्यापक्षे अस्वापम् निद्राभावः, अन्यत् समानम् ।

न च (४४) अयमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा । तथाहि (४५) यथा, कमलमिव मुखं मनोज्ञमेतत्कचतितरामित्यादौ गुणसाम्ये, क्रियासाम्ये, उभयसाम्ये वा उपमा ; तथा, सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिवेत्यादिशब्दमात्रसाम्येऽपि सा युक्तैव (४६)। तथाह्युक्तं रुद्रटेन, 'स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ, किन्तु आश्रित्य शब्दमात्रं सामान्यम्, इहापि (४७) सम्भवत इति । न च (४८), कमलमिव मुख-

---

(४४) पूर्वपक्षस्य द्वितीयमंशं निराकरोति न चेति । उपमाया या प्रतिभा आभासत्वेन प्रतीतिः, तस्या उत्पत्तिहेतुः सम्पादकः, एवमेवार्थः परत्रापि सर्वत्र । यथा चात्र उपमाया एवालङ्कारत्वं, श्लेषस्य त्वाभासत्वं तथा 'उपपत्तिपर्य्यालोचने तु'-इति (२४४ । ६पं०) वक्ष्यमाणग्रन्थावसर एव प्रतिपादयिष्यते । पल्लवाताम्रेत्यादिशब्दसाम्येनेयमुपमा ।

(४५) ननु गुणक्रियासाम्यस्यैवोपमाप्रयोजकत्वेन शब्दसाम्यमकिञ्चित्करमिति अत्रोपमैव नास्तीत्याशङ्कां निराकरोति तथाहीत्यादिना, 'सम्भवत-इति'-इत्यन्तेन । कचतितरां दीप्यतेतराम् । सकलकलमिति सुधांशुबिम्बपक्षे सकला कला यस्य तत्, पक्षे कलकलेतिशब्देन सहितं तदिति चार्थः ।

(४६) गुणक्रिययोरिव वाचकतासम्बन्धेन समानशब्दस्य, समानशब्दवाच्यत्वस्य वा साधारणधर्म्मत्वात्, गुणक्रिययोरेव उपमाप्रयोजकत्वे मानाभावाच्चेति शेषः ।

(४७) इहापि शब्दालङ्कारमध्येऽपीत्युद्योतकृत् ।

(४८) ननु उपमाद्यसङ्कीर्णस्य श्लेषस्यासम्भवात्, उपमादीनाञ्च श्लेषं विनापि सम्भवात् सामान्यविशेषन्यायेन श्लेषस्यैवोपमादिबाधकत्वमिति, कमल-

मित्यादिः साधारणधर्म्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्, पूर्णोपमाया निर्विषयत्वापत्तेः (४६) ॥

देव ! त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः (५०) ॥

-इत्यादिः श्लेषस्य चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति; द्वयोर्योगे (५१) सङ्कर एव । उपपत्तिपर्य्यालोचने (५२)

---

मिव मुखं मनोज्ञमित्यादावपि अर्थश्लेष एवालङ्कारः, मनोज्ञत्वस्य उपमानोपमेययोश्चन्द्रमुखयोर्भेदेन भिन्नतया श्लिष्टत्वात् । यत्र तु न साधारणधर्म्मोपादानं, तत्र श्लेषाभावादुपमैवालङ्कार इत्याक्षेपे समादधाति नचेति ।

(४६) तस्याः साधारणधर्म्माद्युपादाननियतत्वात् ।

(५०) उपमाद्यलङ्काराणां श्लेषस्य च सामान्यविशेषभावं, श्लेषस्य निर्विषयत्वशङ्काञ्चापनेतुं श्लेषस्यासंकीर्णोदाहरणं दर्शयति देवेति । एकस्मिन् पक्षे आशानां दिशां, निबन्धनं नियमनस्थानं, भूलोक इति यावत्, भूलोके एव सूर्य्यगत्या दिगवधारणात् । अमराणां देवानां, मरुतां मरुद्गणानाञ्च भूमिरावासस्थानम्, स्वर्लोक इति यावत् । पक्षान्तरे च अलं (अत्यर्थं) पाता, आशानाम् (अभिलाषाणां) निबन्धनं (कारणं), चामरमरुताञ्च भूमिः (पात्रम्) इति । अत्र उपमाया असंकीर्णोदाहरणप्रदर्शनस्यैव प्रकृतोपयोगितया सदपि रूपकं न दोषाय । तेनाप्यसंकीर्णोदाहरणान्तु येन ध्वस्तमित्यादि; अतएव 'इत्यादिः'-इत्यत्रादिपदमुक्तवान् ।

(५१) एवञ्च श्लेषस्य उपमाद्यसंकीर्णविषयसत्त्वात् सामान्यविशेषभावो नास्तीति नोपमाबाधकत्वं श्लेषस्य, वरमलङ्कारान्तरयोरिवानयोरप्येकत्रोपनिपाते सङ्कर एव युक्त इत्याह द्वयोरिति ।

(५२) नन्वेवं चेत् स्वयञ्च पल्लवेत्यादावपि श्लेषस्योपमायाश्च सत्त्वात्

Digitized by Google

तु उपमाया एवायं युक्तो विषयः, अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् ॥

न च, अविन्दुसुन्दरी नित्यं गलल्लावण्यविन्दुकेत्यादौ(५३) विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः, न ह्यत्रार्थद्वयप्रतिपादकः(५४)शब्दश्लेषः, द्विती-

---

सङ्कर एवास्तां नतूपमा इत्याक्षेपे आह उपपत्तीति । इयमत्रोपपत्तिः, प्रधानयोर्द्वयोरेकत्र समावेशो हि सङ्करः, न चात्र द्वयोरेव प्राधान्यं, येन सङ्करः स्यात्, प्राधान्यन्त्वत्रोपमायाः, श्लेषस्य तन्निर्व्वाहकतया तदङ्गमित्य-प्रधान एव, न हि श्लेषं विना साधारणधर्म्मसम्भवः, न च तं विना उपमा सम्भवति ; यच्च यन्निर्वाहकं, तत्तदङ्गम्, अङ्गञ्चाप्रधानमेव ; न चाप्रधानेन व्यपदेशः, 'प्रधानेन हि व्यपदेशा भवन्ति'-इति नियमात्, अत्र उपमैव प्रधानभूता व्यपदेशहेतुरिति । 'अन्यथा' उपपत्तिसत्त्वेऽपि सङ्करस्वीकारे । स्यादिति, अविशेषेण कमलमिव मुखं मनोज्ञमित्याद्यर्थश्लेषमूलकपूर्णोपमास्थले ऽपि सङ्करस्वीकारप्रसङ्गः, सङ्करश्चालङ्कारान्तरम्, इति सङ्करेणैव तत्र तत्रापि व्यपदेश आस्ताम्, न तु पूर्णोपमयेति भावः ।

(५३) एवमलङ्कारान्तराणामपि श्लेषबाधकत्वं दर्शयति न चेति । अविन्दुरपि लावण्यविन्दुरिति विरोधः, अप्सु प्रतिविम्बित इन्दुरिति विरोधभङ्गः ।

(५४) अर्थद्वयप्रतिपादकः उभयविधार्थस्यान्वयबोधकतया अभिप्रेतः । द्वितीयार्थस्य विन्दुरहितविन्दुसहितरूपार्थस्य । प्रतिभातमात्रस्य शब्दशक्ति-महिम्ना आपातत उपस्थितस्य । प्ररोहाभावात् पर्य्यन्ते अन्वयाप्रवेशात् । अयं भावः, उभयविधार्थस्य विवक्षितत्व एव 'अर्थभेदेन शब्दभेदः'-इति नियमात् शब्दयोः श्लेषः स्वीक्रियते, न चात्र उभयविधार्थान्वयो विवक्षितः,

Digitized by Google

यार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात् । न च(५५) विरोधाभास इव विरोधः, श्लेषाभासः श्लेषः ; तदेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरमेव । तथा च,

सद्वंशमुक्तामणिः (५६) । [१]

नाल्पः कविरिव स्वल्पश्लोको देव ! महान् भवान्(५७)। [२]

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः (५८) ।। [३]

---

द्वितीयार्थस्यापि अन्वये प्रवेशे वास्तविकविरोधप्रसङ्गादिति तात्त्विकः श्लेष एवात्र नास्ति, दूरे चात्रास्य विरोधितेति ।

(५५) ननु विरोधाभासस्य विरोधालङ्कारत्वमिव श्लेषाभासस्यापि श्लेषालङ्कारत्वमस्तु इत्याक्षेपे समादधाति न चेति । अयं भावः, वास्तविकविरोधस्य दोषतया विरोधाभासस्यैव विरोधालङ्कारत्वं स्वीक्रियते, श्लेषस्य तु वास्तविकस्य सम्भवेन तस्यैवालङ्कारत्वं युक्तम् न तु तदाभासस्यापीति ।

(५६) सद्वंशः सत्कुलमेव सद्वेणुस्तत्र मुक्तामणिः, एवञ्चात्र वंशशब्दे श्लेषप्रयुक्तं वेणुकुलयोः रूपकमेव मुक्तामणित्वारोपे हेतुरिति श्लिष्टपरम्परितरूपकम्, इदमेव एकदेशविवर्त्तिरूपकमित्युच्यते । श्लेषस्तु तन्निर्वाहकतया तदङ्गत्वेन अप्रधानमेवेति ।

(५७) श्लोकः पद्यं यशश्च । महान् भवान्, अल्पः कविरिव न स्वल्पश्लोक इत्यर्थः । अत्रान्यकवितो व्यतिरेकः श्लोकशब्दश्लेषप्रयुक्त इति श्लेषव्यतिरेकोऽयम् । श्लेषस्तु तदङ्गतया अप्रधान एव ।

(५८) अनुरागः प्रणयविशेषः, लौहित्यञ्च । पुरःसरोऽग्रगामी सम्मुखश्च । समागमो मिलनं स्त्रीपुंसङ्गमश्च । अत्राभिधाया नियमनेनार्थद्वयान्वय-

Digitized by Google

आदाय चापमचलं, कृत्वाऽहीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै (५८)॥ [४]

-इत्यादावेकदेशविवर्त्तिरूपक-श्लेषव्यतिरेक-समासोक्ति-विरोधत्वमुचितम्, न तु श्लेषत्वम्॥

शब्दश्लेषः-(६०) इति चोच्यते, अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः। किञ्च (६१) वैचित्र्यमलङ्कार इति, य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रता, इति सैवालङ्कारभूमिः। अर्थमुखप्रेक्षितत्वमेतेषां शब्दानामिति

---

बोधस्याभावात् न श्लेषः, किन्तु श्लिष्टविशेषणमहिम्ना नायकवृत्तान्तप्रतीतिमात्रमिति समासोक्तिरेवालङ्कारः।

(५८) त्रिलोचनः हिमाचलं धनुः, वासुकिं ज्यां, विष्णुं शरञ्च विधाय त्रिपुरासुरं जघानेति प्रकृतोऽर्थः। चलनशून्यं धनुः हीनो जीर्णः, अथवा अहीनो धनुर्दण्डादन्यूनो गुणः, विषमा लक्ष्यादन्यत्र निहिता दृष्टिः, तथापि लक्ष्यभङ्ग इति विरोधाभासः, स एव प्रधानः श्लेषस्य प्ररोहाभावादित्युक्तमेव।

(६०) पूर्व्वपक्षस्य तृतीयमंशं दूषयति शब्दश्लेष इति।

(६१) ननु शब्दालङ्कारतया न शब्दश्लेषव्यपदेशः, किन्तु विजातीययोः शब्दयोः श्लेषरूपतया तथा व्यपदेशः, अर्थालङ्काररूपतया च अर्थालङ्कारमध्ये गण्यते इति को दोष इत्यत आह किञ्चेति। य एव (शब्दो वा अर्थो वा) कविप्रतिभायाः कविबुद्धिकौशलस्य संरम्भः पर्य्यवसानं, तस्य गोचरो विषयः, तत्रैव (शब्दे वा अर्थे वा) विचित्रता, इति हेतोः, सैव (शब्दो वा अर्थो वा) अलङ्कारभूमिरलङ्कारस्याश्रयः विचित्रताया एवालङ्कारतया यत्र विचित्रता, तत्रैव सुतरामलङ्कार इति फलितार्थः। एवञ्च उक्तोभयविधश्लेषस्थले

चेत् (६२), अनुप्रासादीनामपि तथैवेति तेऽप्यर्थालङ्काराः किं नोच्यन्ते ? रसादिव्यञ्जकस्वरूप-वाच्यविशेषसव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलङ्कारता (६३)। शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता। अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव (६४) व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम् ॥

विधौ (६५) वक्त्रे मूर्ध्नीत्यादौ च वर्णादिश्लेषे एकप्रयत्नोच्चार्य्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्य्यम् ॥

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८॥**

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्या-

---

कविप्रतिभासंरम्भविषयतया शब्दस्यैव वैचित्र्यमिति तद्गत एव तत्र श्लेष इति भावः। अलङ्कारभूमिरिति विधेयापेक्षतया सैवेति स्फौलिङ्कतेति।

(६२) ननु निरर्थकशब्दानां श्लेषासम्भवेन श्लेषस्यार्थसापेक्षतया अर्थालङ्कारत्वमित्युक्तमेवेति पूर्व्वपक्षयति अर्थमुखेति।

(६३) रसादिव्यञ्जकं यत् स्वरूपं, यश्च वाच्यविशेषः, तयोः सव्यपेक्षत्वे अधीनत्वे, सतीति शेषः। अपिर्भिन्नक्रमेणान्वेति, अनुप्रासादीनामपि रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वे सति हि अलङ्कारतेत्यन्वयः। अनुप्रासो हि रसादिव्यञ्जकं स्वरूपमपेक्षते, अनुप्रासशब्दस्य तथैव व्युत्पत्तेः। रसादयश्च असत्यर्थे न सम्भवन्तीति अनुप्रासस्यार्थापेक्षा। लाटानुप्रासवक्रोक्त्यादयश्च वाच्यविशेषं साक्षादेवापेक्षन्ते इति।

(६४) शब्देनार्थबोधं विना तेषामसम्भवात्।

(६५) एकप्रयत्नोच्चार्य्यत्वमेवार्थश्लेषत्वे न नियामकमित्याह विधाविति।

Digitized by Google

कारमुल्लासयन्ति, तच्चित्रं काव्यम् (६६)। कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्,

मारारिशक्रामेभमुखैरासाररंहसा।
साराब्धस्तवा, नित्यं तदर्त्तिहरणक्षमा॥
माता नतानां, सङ्घट्टः श्रियां, बाधितसंभ्रमा।
मान्याथ, सीमा रामाणां, शं मे दिश्यादुमादिमा(६७)॥

(खड्गबन्धः)

---

(६६) चित्रं चित्रालङ्कारयुक्तम्; क्वचित् 'चित्रमलङ्कारः'-इत्येव पाठः। यद्यपि शब्दात्मकानां वर्णानां खड्गाद्याकारहेतुता नास्ति, तथापि तद्व्यञ्जकानां लिप्यात्मकवर्णानां तथात्वेन तेषु तथात्वमुपचर्य्यते।

(६७) खड्गबन्धो यथा,—



खड्गबन्धनप्रकारो यथा, मुष्टेरुपरि अधश्च शाखाद्वयवान् खड्गो लेख्यः, तत्र उपरिशाखाचतुष्पथमध्ये मा-इति प्राथमिकं वर्णं विन्यस्य, तदूर्द्धमारोहक्रमेण (उपरि अधो वा) एकस्यां धारायां रा-इत्यादीन् ह-इत्यन्तान् चतुर्द्दशवर्णान् न्यसेत्, खड्गस्याग्रे च सा-इति वर्णो विन्यास्यः, तत्र च अपरः सा-इति वर्णः प्रविष्टः। ततोऽपरधारायामवरोहक्रमेण रा-इत्यादीन् च-इत्यन्तान् चतुर्द्दशवर्णान् विन्यसेत् (मा-वर्णः प्राथमिके मावर्णे प्रविष्टः)। ततश्च खड्गस्य



Digitized by Google

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरलाबहुलामला (६८) ।।
(मुरजबन्धः)

---

एकस्यां उपरिशाखायां निष्क्रमणक्रमेण ता-इत्यादीन् हुः-इत्यन्तान् सप्तवर्णान् विन्यस्य, अपरस्यामुपरिशाखायां प्रवेशक्रमेण शि-इत्यादीन् भ-इत्यन्तान् सप्तवर्णान् न्यसेत् । माकारः प्राथमिके माकारे प्रविष्टः । ततश्च खड्गमुष्टौ माशब्दादधःक्रमेण न्या-इत्यादि सी-इत्यन्तं वर्णत्रयं विन्यस्य तदधश्चतुष्पथे माकारो विन्यास्यः । ततश्च तदूर्द्ध्वशाखायां निष्क्रमणक्रमेण रा-इत्यादीन् शम्-इत्यन्तान् चतुरो वर्णान् विन्यस्य अपरशाखायां प्रवेशक्रमेण मे-इत्यादि डु-इत्यन्तं वर्णचतुष्टयं विन्यसेत् । माकारोऽधश्चतुष्पथस्थमाकारे प्रविष्टः । ततश्च मुष्टेर्मूलभागे माकारस्याधःक्रमेण दिमा-इति वर्णद्वयं न्यसेत् ।

श्लोकयोरयमर्थः, मारस्य कन्दर्पस्य अरिः शिवः, शक्र इन्द्रः, रामो रघुनन्दनः परशुरामो वा इभमुखो गणेशः, एतैरासाररंहसा धारासम्पात-तुल्यवेगेन सारमतिशयम् आरब्धः स्तवो यस्याः सा । तेषां मारारिशक्रा-दीनां नित्यं पीडाहरणसमर्था । श्रियां संघट्टः संमेलनस्थानम् । बाधितः निरस्तः संभ्रम उद्वेगो यस्याः सा । रामाणां नारीणां सीमा परा काष्ठा । अन्यत् सुगमम् ।

(६८) मुरजबन्धो यथा,—




Digitized by Google

अस्य न्यासप्रकारस्त्वयम्, पङ्क्तिक्रमेण प्रथमपादवर्णान् लिखित्वा, तेषामधोऽधस्तथैवापरपादत्रयवर्णान् लिखेत्, ततस्तेषु रेखाविशेषदानेन श्लोकोद्धारो मुरजोत्पादनञ्च कार्य्यम्, यथा, प्रथमादिपादचतुष्टयस्य यथाक्रमं प्रथम-द्वितीय-तृतीयचतुर्थवर्णेषु अधोगत्या एका रेखा देया, ततश्च तद्रेखाग्रतः चतुर्थादिपादचतुष्टयस्य व्युत्क्रमेण पञ्चम-षष्ठसप्तमाष्टमेषु ऊर्द्ध्वगत्या एका रेखा देया; एवं रेखाद्वयेन प्रथमपादोत्पत्तिः। ततश्च द्वितीयपादप्रथमवर्ण-प्रथमपादद्वितीयवर्णयोरेका रेखा, तदग्रतः प्रथमपादतृतीयवर्ण-द्वितीयपादचतुर्थवर्णयोरेका, तदग्रतः द्वितीयपादपञ्चमवर्ण-प्रथमपादषष्ठवर्णयोरेका, तदग्रतः प्रथमपादसप्तमवर्ण-द्वितीयपादाष्टमवर्णयोश्चैका-इत्येवं-रेखाचतुष्टयेन द्वितीयपादोद्धारः। यथैव प्रथम-द्वितीयपादयोर्येषु येषु वर्णेषु रेखाचतुष्टयदानेन द्वितीयपादोद्धारः, तथैव तृतीय-चतुर्थपादयोस्तेषु तेषु वर्णेषु रेखाचतुष्टयेन तृतीयपादोद्धारः कार्य्यः। एवं चतुर्थादिपादचतुष्टयस्य व्युत्क्रमेण प्रथम-द्वितीय-तृतीय-चतुर्थवर्णेषु ऊर्द्ध्वगत्या एका रेखा, एका च रेखा तदग्रतः प्रथमादिपादचतुष्टयस्य क्रमेणाधोगत्या पञ्चम-षष्ठ-सप्तमाष्टमवर्णेषु देया, एवं रेखाद्वयेन चतुर्थपादोत्पत्तिः। एवंकृते रेखाभिर्मुरजषट्कस्योत्पत्तिः।

श्लोकस्यायमर्थः, प्रकरणगम्या शरत् विशेष्या। शरला मेघादिकौटिल्यरहिता। बकुलैरारब्धैस्तरलानाम् अलिबलानां भ्रमरसमूहानाम् आरवः कोलाहलो यस्यां, सा। वारला हंस्यः बहुला यस्याम्, सा। अमन्दा उद्योगिनः (अर्थात् रणाय) करला (करं स्वामिग्राह्यं भागं लान्ति गृह्णन्तीति) राजानः यस्यां सा। अबहुले शुक्लपक्षे अमला निर्मला, (बहुले कृष्णपक्षेऽपि अमला इति वार्थः)। शरलेतिपाठे (शरं शरकाण्डं लाति आदत्ते इति व्युत्पत्त्या) शरकाण्डोद्गमवतीति महेश्वरः।

भासते प्रतिभासार ! रसाभाताहताविभा ।
भावितात्मा, शुभा वादे, देवाभा वत ते सभा (६८) ।।

(पद्मबन्धः)

---

(६८) पद्मबन्धो यथा,—




अस्य न्यासो यथा, अष्टदलपद्मं लेख्यम्, तत्र कर्णिकायाम् श्लोकस्यादिमो वर्णः स्थाप्यः, स च अष्टधा श्लिष्टः । दले दले द्वौ द्वौ वर्णौ लेख्यौ, तत्र दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टौ वर्णौ, विदिग्दलेषु तु न श्लिष्टौ । तत्र प्राच्यदले आदौ निर्गमः श्लोकान्ते च प्रवेशः, दक्षिणोत्तरदलयोर्निर्गमैव

रसासार! रसा सारसायताक्ष! क्षतायसा।
सातावात! तवातासा रक्षतस्त्वस्त्वतक्षर! (७०)॥

(सर्व्वतोभद्रम्)

---

प्रवेशः, पश्चिमदले तु प्रविश्यैव निर्गमः, आग्नेयवायव्यदलयोः प्रवेश एव, नैर्ऋतेशानयोस्तु निर्गम एव। तथाहि प्रकृते कर्णिकायां भा-इति, पूर्व्वदले निर्गमक्रमेण सते-इति, आग्नेयदले प्रवेशक्रमेण प्रति-इति चैते वर्णा लेख्याः, भा-इति वर्णः कर्णिकास्थे प्रविष्टः, ततो दक्षिणदले निष्क्रमणक्रमेण सार-इति वर्णद्वयम् लेख्यम्, तस्मिन् वर्णद्वये कर्णिकास्थवर्णे च प्रवेशक्रमेण रसाभा-इति वर्णत्रयं प्रविष्टम्, एवमन्येऽपि उक्तदिशाऽवसेयम्।

श्लोकस्यायमर्थः, रसैराभाता शोभिता। अहृता अप्रतिहृता आविभा सम्यग्दीप्तिर्यस्याः सा। भाविता: निर्णीत आत्मा यस्यां सा। वादे तत्त्व-कथायां शुभा। देवाभा देवतुल्या इत्यर्थः।

(७०) सर्व्वतोभद्रस्य न्यासप्रकारविशेषप्रदर्शनं निरर्थकं, पादचतुष्टयस्य क्रमेणाधोऽधोलिखनमेव पर्य्याप्तम्; तथा कृते एव हि "तदिष्टं सर्व्वतो भद्रं भ्रमणं यदि सर्व्वतः"-इति दण्डुक्तस्य सर्व्वतोभ्रमणस्य प्रतीतिसम्भवात्। सर्व्वतोभ्रमणञ्च अनुलोमेन, प्रतिलोमेन, अनुलोमप्रतिलोमाभ्यां, प्रतिलोमा-नुलोमाभ्याञ्च; अधःक्रमेण, उपरिक्रमेण, अधउपरिक्रमेण, उपर्य्यधः-क्रमेण च उच्चारणे स एव श्लोक आयातीत्येवंरूपम्।

यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | सा | सा | र | र | सा | सा | र |
| सा | य | ता | क्ष | क्ष | ता | य | सा |
| सा | ता | वा | त | त | वा | ता | सा |
| र | क्ष | त | स्त्व | स्त्व | त | क्ष | र |

अस्य हि प्रथमादिपादानामनुलोमेनेव प्रतिलोमेनोच्चारणेऽपि त एव पादाः

Digitized by Google

सम्भविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका नतु काव्य-रूपतां दधतीति न प्रदर्श्यन्ते ॥

**पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।**

**एकार्थतेव,**

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं(७१) पुनरुक्तवदाभासः । स च,

**शब्दस्य,**

---

आयान्ति । एवं प्रतिपादं प्रथमादिवर्णचतुष्टयस्य पञ्चमादिवर्णचतुष्टयस्य वा अनुलोमप्रतिलोमाभ्याम्, प्रतिलोमानुलोमाभ्यां वा त एव पादाः । एवं, पादचतुष्टयस्य प्रथमानां अष्टमानाञ्च वर्णानां अधःक्रमेण उपरिक्रमेण वा उच्चारणे प्रथमपादः, अथवा प्रथमवर्णचतुष्टयस्य अष्टमवर्णचतुष्टयस्य वा केवलस्य उपर्य्यधःक्रमेण, अधउपरिक्रमेण वा उच्चारणे प्रथमः पादः । एवं-रीत्या प्रत्येकपादानाम् द्वितीयवर्णचतुष्टयेन सप्तमवर्णचतुष्टयेन च द्वितीयपादस्य, तृतीयवर्णचतुष्टयेन षष्ठवर्णचतुष्टयेन च तृतीयपादस्य, एवं चतुर्थवर्णचतुष्टयेन पञ्चमवर्णचतुष्टयेन च चतुर्थपादस्य च उत्पत्तिरित्येवं बहुविधं भ्रमणमह्यम् ।

रचतः तु अस्तु अतद्वर इति गूढ़पदच्छेदः । हे रसासार ! (पृथ्वीश्रेष्ठ ! ) रचतस्तव रसा (पृथ्वी) चतायसा (चतः नाशितः अयः शुभावहविधिर्यैः, तान् स्यति अन्तं प्रापयति या, सा सोऽन्तकर्म्मणि इत्यस्य रूपम्), अतासा (अनुपक्षया तसु उपक्षये-इत्यस्य रूपम्) तु (च) अस्तु-इत्यन्वयः । त्वं किम्भूत ! सारसायताक्ष ! (सारसवत् पद्मवत् आयते च अक्षिणी यस्य स ! ), सातावात ! (साते सुखे अवात अचञ्चल ! अनासक्त ! ), अतद्वर ! च (अनल्पद ! तद्व तनूकरणे, राला दाने इत्यनयोः रूपम्) ।

(७१) मुखे आपाततः । भासनम् प्रतीतिः, तथा च कारिकास्थम्

Digitized by Google

सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः । उदाहरणम्,

अरिवधदेहशरीरः, सहसा रथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः (७२) ॥
चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः (७३) ॥

तथा शब्दार्थयोरयम् ॥ ८ ॥

---

एकार्थतेवेतिपदम् एकार्थतया आपाततोभासनपरमिति । विभिन्नरूपयोर्वस्तुतोभिन्नार्थयोरपि शब्दयोरापातत एकार्थतया प्रतीतिः पुनरुक्तवदाभासः ।

(७२) अरिवधदा ईहा (चेष्टा) येषाम्, तान् शरियाः (शरयुक्तान् योधान्) ईरयति (प्रेरयति) यः सः । सहसा रथिभिः सूताः (सुष्ठु ऊताः सम्बद्धाः) तुरगा पादाताश्च (पदातिकाः) यस्य, सः । स्थिरतायाम् अगः (पर्व्वत इव) अवनितलतिलकः सताम् विषये आनत्या (अतिनम्रभावेन सन्तोषजननेन वा) भातीत्यर्थः ।

(७३) अङ्गने एव वा (सम्यक्) रमन्ते इति अङ्गनारामाः (अप्रवासिनः) । कौतुकेन (सत्कर्म्मणि अभिलाषेण नृत्यगीतादिना वा) अस्य (विष्णोः) नन्दस्य सन्तोषस्य, हेतवः । (कौतुकेन आनन्दहेतवः-इति यथाश्रुतार्थकरणे आनन्दशब्दस्य परिवृत्तिसहत्वेन अस्य शब्दमात्रालङ्कारोदाहरणत्वासङ्गतिः)। 'सु' (शोभनानि) मनांसि येषां ते । विबुधाः पण्डिताः ।

अत्र श्लोकद्वये शब्दगत एवायमलङ्कारः, तथाहि देह-शरीर-इति द्वावेव शब्दौ सार्थकौ सभङ्गौ च । सारथि-सूत-इति द्वयोराद्यो निरर्थकः, अन्त्यश्च सार्थकः, उभावेव सभङ्गौ । दान-त्याग-इति उभावपि निरर्थकौ सभङ्गौ च । अङ्गनारामाशब्दयोः पूर्व्वः सभङ्गः निरर्थकश्च, उत्तरस्तु अभङ्गः सार्थकश्च । कौतुकानन्दशब्दयोः पूर्व्वोऽभङ्गः, उत्तरस्तु सभङ्गः, उभावपि सार्थकौ ।

Digitized by Google

उदाहरणम्,

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महः पृथुमनसामिन्द्रो हरिर्जिष्णुः (७४) ॥

अत्रैकस्मिन् पदे परिवर्त्तिते नालङ्कार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्त्तितेऽपि स न हीयते-इत्यर्थनिष्ठ इत्युभयालङ्कारोऽयम् ॥

॥ इति काव्यप्रकाशे शब्दालङ्कारनिर्णयो नाम नवम उल्लासः ॥

---

सुमनसो विबुधा इति द्वावेव अभङ्गौ सार्थकौ चेति शब्दगतस्यास्य षड्विधत्वम् । एतेषां शब्दानां परिवृत्त्यसहत्वात् शब्दालङ्कारत्वम् ।

(७४) असौ हरिः (सिंहः), तनुवपुरपि (क्षीणशरीरोऽपि) अजघन्यः (श्रेष्ठः) इति विधेयम् । किम्भूतः करिकुञ्जराणाम् (गजश्रेष्ठानाम्) रुधिरेण रक्ताः (लोहिताः) खराः (तीक्ष्णाः) च नखरा यस्य सः, तेजसाम् धाम (आश्रयः), महसा (तेजसा) पृथुमनसाम् (विपुलान्तःकरणानाम्) इन्द्रः (प्रभुः), जिष्णुश्च (जयशीलश्च) इति । अत्र तनु-कुञ्जर-रक्त-धाम-हरि-पदानि परिवृत्त्यसहानि, वपुरादिपदानि तु तत्सहानीत्युभयालङ्कारत्वम् । धाम-महः-इत्यत्र हरिर्जिष्णुः-इत्यत्र च शब्दगतत्वमेव, उभयोरेव शब्दयोः परिवृत्त्यसहत्वादिति तु विभावनीयम् ।



## ॥ दशम उल्लासः ॥



अर्थालङ्कारानाह (१),

**साधर्म्यमुपमा भेदे,**

उपमानोपमेययोरेव (२), ( न कार्य्यकारणादिकयोः )

---

(१) "उपमाऽनन्वयस्तद्वदुपमेयोपमा ततः। उत्प्रेक्षाऽथ ससन्देहे रूपकापह्नुती तथा। श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना। अप्रस्तुतप्रशंसाऽतिशयोक्ती परिकीर्त्तिते। प्रतिवस्तूपमा तद्वद्दृष्टान्तो दीपकं तथा। तुल्ययोगितया चैव व्यतिरेकः प्रकीर्त्तितः। आक्षेपो विभावना च विशेषोक्तिस्तथैव च। यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत्। स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत्। विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत्। पर्य्यायोक्तमुदात्तञ्च समुच्चय उदीरितः। पर्य्यायश्चानुमानञ्च प्रोक्तः परिकरस्तथा। व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया। अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसङ्गतिः। समाधिश्च समेन स्यात् विषमस्त्वधिकेन च। प्रत्यनीकं मीलितञ्च स्यातामेकावलीस्मृती। भ्रान्तिमांश्च प्रतीपेन सामान्यञ्च विशेषवत्। तद्गुणातद्गुणौ चैव व्याघातः परिकीर्त्तितः। संसृष्टिसङ्करौ चैवमेकषष्टिरुदीरिताः" इति प्रदीपः।

(२) ननु साधर्म्यं हि साहश्यापरनामकः सम्बन्धविशेषः, सम्बन्धश्च एकप्रतियोगिकोऽपरानुयोगिक एव नियतः, (यस्य यत्र यः सम्बन्धः, यथाक्रमं तौ तस्य सम्बन्धस्य प्रतियोग्यनुयोगिनौ; यथा, कुण्डस्य कुण्डे संयोगः,

साधर्म्यं भवतीति तयोरेव समानधर्म्मेण (३) सम्बन्ध उपमा । भेदग्रहणमनन्वयव्यवच्छेदाय (४) ।।

---

दण्डस्य कलसे कार्य्यत्वञ्च सम्बन्ध इति तस्य तस्य सम्बन्धस्य यथाक्रमं तौ खण्डदण्डौ प्रतियोगिनौ तावपि कुण्डकलसौ अनुपयोगिनाविति ) एवञ्च अत्र, साधर्म्यसम्बन्धस्य कौ प्रतियोग्यनुयोगिनाविति । यदि यौ-कौचिदपि तौ कल्प्येते-इत्युच्यते, तदा कार्य्यकारणादिरूपौ तौ किमिति न कल्प्येते ? -इत्याशङ्कां निराकरोति उपमानेति । इदमत्र निराकरणम्, सर्व्व एव न सर्व्वेषां सम्बन्धानां प्रतियोग्यनुयोगिनः, किन्तु कौचित् कस्यचित् इति कार्य्यत्वादिसम्बन्धस्य प्रतियोग्यनुयोगिनावपि कार्य्यकारणादिकौ न साधर्म्यसम्बन्धस्य तथा सम्भवत इति न तौ अत्र कल्प्येते, किन्तु योग्यतया उपमानोपमेये एव प्रतियोग्यनुयोगितया नियतमाक्षिप्येते इति तदनुपादानं न दोषायेति ।

(३) समानः (एकः तुल्यो वा) धर्म्मः (गुणक्रियादिरूपः) ययोः (अर्थात् उपमानोपमेययोः) तयोर्भावः (तेन समानेन धर्म्मेण सम्बन्धः) साधर्म्यमिति व्युत्पत्तिलभ्यं साधर्म्यपदार्थमाह समानेति । साधर्म्यमेव परैः सादृश्यपदेनोच्यते ।

(४) अनन्वये उपमानस्यैवोपमेयतया तयोर्भेदाभावादिति शेषः । अत्रालङ्कारत्वे सतीति विशेषणमनुक्तमपि प्रकरणात् प्राप्तमेव, तेन गौरिव गवय इत्यादौ सदपि साधर्म्यं नोपमालङ्कारः वैचित्र्याभावात् । एवं रूपकादिस्थलेऽपि नोपमालङ्कारप्रसङ्गः, तत्र रूपकादिवैचित्र्यस्यैव चमत्कारातिशयजनकतया तेनोपमावैचित्र्यस्य तिरोधानात् । एवं कण्ठे केवलमर्गलेवेत्यादौ उपमायाः प्रकृतरसानुपकारकतया अलङ्कारत्वमेव नास्ति, तथापि तद्व्यवहारो भाक्त एवेति । एवञ्चोक्तरीत्यैव अनन्वयवारणसम्भवे भेदग्रहणमनर्थकमिव प्रतिभाति । अतएव रसगङ्गाधरकृद्भिरस्य दूषणावसरे "भेदग्रहणस्य वैयर्थ्यापत्तेः"-इत्युक्तम् । एवञ्चालङ्कारत्वे सति साधर्म्यमुपमेत्येव सम्यक् । उपमास्थले च उपमानम्, उपमेयं, साधारणो धर्म्मः, साधर्म्यञ्चेति

Digitized by Google

पूर्णा लुप्ता च,

उपमानोपमेयसाधारणधर्म्मोपमा-प्रतिपादकानामुपादाने पूर्णा, एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता।

साऽग्रिमा।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा(५) ॥१॥

अग्रिमा पूर्णा।

---

चतुष्टयमपेक्ष्यते। साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थः उपमानं तद्धर्मवत्तया वर्णनीयः पदार्थ उपमेयः, उभयत्र (उपमाने उपमेये च) सङ्गतो धर्मः साधारणो धर्मः, यस्य धर्मस्य सम्बन्धात् येन सह यदुपमीयते, स साधारणो धर्मः, तद् उपमानम्, तच्च उपमेयमिति तु परमार्थः यथा, कमलमिव मुखं मनोज्ञमित्यादौ मनोज्ञत्वधर्मसम्बन्धात् तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयते इति मनोज्ञत्वं साधारणो धर्मः, कमलमुपमानम्, मुखमुपमेयमिति। उपमानादिचतुष्टयञ्च सदसदपि, वाच्यं प्रतीयमानमपि च भवति। अतएव त्वयि कोपो ममाभाति सुधांशाविव पावक इत्यादौ सुधांशौ पावकस्यासतोऽपि उपमानत्वसिद्धिः, कमलमिव मुखमित्यादौ लुप्तोपमास्थले प्रसिद्धतया साधारणधर्मस्यानुपात्तत्वेऽपि उपमासिद्धिश्चेति। अतएव उपमालक्षणे वाच्यपदप्रक्षेपो दर्पणकृतामनुचितइव प्रतिभाति।

(५) उपमानादिपदानि चत्वार्य्यपि यद्यसमस्तानि तदा वाक्यगा, तेषु कयोरपि समस्तत्वे समासगा, तद्धितप्रत्ययान्तस्य न वाक्यत्वम् न वा समासत्वमिति पृथगुक्तिः। त्रिविधाऽपि पूर्णोपमा, श्रौती आर्थी चेति प्रत्येकं द्विधा भूत्वा षड्विधेति। उपमायाः श्रौतत्वञ्च शब्दगम्यत्वम्, वाच्यत्वमिति यावत्, तच्च यथेववादिशब्दोपादाने इवार्थविहितवतेश्चोपादाने भवति, यथादिशब्दानां साधर्म्यसम्बन्धरूपधर्म्मवाचकतया तत्सद्भावे श्रवणमात्रेणैव साधर्म्यसम्बन्धस्य

यथेववादिशब्दा(६) यत्पराखस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते; तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। तथैव, "तत्र तस्येव"-[५।१।११६पा०सू०]-इत्यनेनेवार्थे विहितस्य वतेरुपादाने।

---

मुख्यतयोपस्थितेः। आर्थत्वम् अर्थवशलभ्यत्वम्, तच्च तुल्यादिशब्दानां तुल्यार्थविहितवतेश्चोपादाने भवति, तुल्यादिशब्दानाम् साधर्म्यसम्बन्धसम्बन्धिरूपधर्मिवाचकतया तत्सद्भावे तादृशधर्मिणः (उपमानस्य, उपमेयस्य, उभयस्य वा) एव मुख्यतयोपस्थितेः साधर्म्यस्य अर्थाक्षिप्तत्वात्। एतत् सर्व्वमनुपदं स्फुटीभविष्यति।

(६) यथादिशब्दानां साधर्म्यसम्बन्धवाचकत्वं प्रतिपादयन् तत्सद्भावे श्रौतत्वं प्रतिपादयति यथेवेति। यत्पराः यदनन्तरमुपात्ताः। तस्यैव तदर्थस्यैव। श्रुत्यैव श्रवणमात्रेण। सम्बन्धं प्रकृते उपमानोपमेययोः साधारणधर्मसम्बन्धरूपं साधर्म्यम्। अयमत्र पूर्व्वपक्षः, यद्धि यदर्थं धर्मविशेषं प्रत्याययति, तत् तद्विशेषणम्; एकविशेषणञ्च नापरत्र स्वार्थं प्रत्याययतीति नियमः, यथा, नीलमुत्पलमित्यादौ नीलपदम् उत्पलपदार्थे स्वार्थं प्रत्याययत् उत्पलपदस्य विशेषणं भवति, ततश्च नान्यत्र स्वार्थम् प्रत्याययति, तथा, 'मुखं मनोज्ञं कमलं यथैतत्' इत्यादौ यथाशब्दः कमलपदोत्तरमुपात्तत्वेन कमलपदार्थे उपमानतां प्रत्याययतीति कमलपदस्य विशेषणमिति उपमानभूते कमले एव साधारणधर्मसम्बन्धं बोधयत्, तदन्यस्मिन् उपमेये मुखे कथं तदवगमयेत्? इति उपमानोपमेययोः साधर्म्यस्य शब्दागम्यत्वात् कथं श्रौतत्वमिति। सिद्धान्तस्त्वयम्, राज्ञो राज्यमित्यादौ स्वप्रकृत्यनन्तरमुपात्ता षष्ठीविभक्तिः स्वप्रकृत्यर्थे राजनि स्वामित्वं प्रत्याययन्ती तद्विशेषणं भवन्त्यपि यथा राजराज्ययोः स्वस्वामिभावं सम्बन्धं प्रत्याययति, तथा उपमाने उपमानतां प्रत्याययन्तोऽपि

तेन तुल्यम् (७) मुखमित्यादावुपमेय एव, तत्तुल्यमस्ये-त्यादौ चोपमान एव, इदञ्च तच्च तुल्यमित्युभयत्रापि तुल्यादि-शब्दानां विश्रान्तिरिति साम्यपर्य्यालोचनया तुल्यताप्रतीति-रिति साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी ; तद्वत्, "तेन तुल्यम् क्रिया चेत् वतिः-" [५।१।११५पा०सू०]-इत्यनेन विहितस्य वतेः स्थितौ ।

---

यथादिशब्दा उपमानोपमेययोः साधर्म्यसम्बन्धं श्रवणमात्रेण उपस्थापय-न्त्येवेति, अत्र तु हेतुः शब्दशक्तेर्वैचित्र्यमेव । विशेषणत्वमभ्युपेत्यायं सिद्धान्तः, वस्तुतः यथादयः शब्दा नोपमानविशेषणानि, न हि, 'यत् यदर्थं धर्मविशेषं प्रत्याययति, तत् तद्विशेषणम्'-इति नियमः, किन्तु यदर्थस्य यदर्थेऽन्वयबोधः, तत् तद्विशेषणमित्येव नियमः, न च यथादयः शब्दा उपमानतार्थकाः, येन उपमाने तदन्वयबोधं जनयन्तो उपमानविशेषणानि स्युः, यथादिशब्दैरुप-मानताप्रतीतिस्तु नान्वयबोधरूपा, किन्त्वर्थवशसम्पन्नेति ।

(७) तुल्यादिशब्दानां धर्मिवाचकत्वं प्रतिपादयन् तत्सद्भावे आर्थत्वं व्यवस्थापयति तेन तुल्यमिति । अत्र सर्व्वत्र तत्पदार्थः कमलम् इदम्पदार्थस्य मुखम् । उपमेये इति, उपमाने इति च विश्रान्तिरित्यनेनान्वेति । उभयत्र उपमाने उपमेये च । विश्रान्तिः पर्य्यवसानम्, तात्पर्य्यमिति फलितार्थः । साम्यस्य साधर्म्यस्य । पर्य्यालोचना अनुसन्धानम् । तुल्यता साधर्म्यसम्बन्ध-सम्बन्धिता, सा च तेन तुल्यं मुखमित्यादौ उपमेयतारूपा, तत्तुल्यमस्येत्यादौ उपमानतारूपा, इदञ्च तच्च तुल्यमित्यादौ उभयरूपैव पर्य्यवस्यतीति न साध-र्म्यमेव तुल्यता । अयं भावः, तुल्यादिशब्दानां उक्तरूपधर्मिवाचकतया यद्यपि तत्सद्भावे साधर्म्यं शब्दात् न प्रतीयते, तथापि अर्थादाक्षिप्यत एव तदिति आर्थत्वम्, तथाहि कमलेन तुल्यं मुखमित्यत्र प्रथमत एव शब्दात् तुल्यमुख-

Digitized by Google

'इवेन नित्यसमासो (८) विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वं च' इति नित्यसमासे इवशब्दयोगे समासगा। क्रमेणोदाहरणम्,

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ।। [वा॰श्रौ॰]

चकितहरिणलोललोचनायाः
क्रुधि तरुणारुणतारहारकान्ति ।
सरसिजमिदमाननञ्च तस्याः
सममिति चेतसि संमदं विधत्ते ।। [वा॰आ॰]

अत्यायतैर्नियमकारिभिरुद्धतानाम्,
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ।। [स॰श्रौ॰]

---

योरभेदान्वयबोधः, ततश्च मुखस्य कमलतुल्यताप्रतीतिरिति निर्व्विवादम्, सा तु प्रतीतिः कमलमुखयोः साधर्म्यानुसन्धानं विनाऽनुपपन्ना, कमलमुखयोः साधर्म्यं विना कमलेन मुखस्य तुल्यताया (साधर्म्यसम्बन्धसम्बन्धिताद्रूपायाः) एवानिष्पत्तेरिति तुल्यताप्रतीत्यन्यथानुपपत्त्या अर्थादाक्षिप्यत एव साधर्म्यमिति ।

(८) अत्र "सुपो धातुप्रातिपदिकयोः" (२।४।७) पा॰) इति सूत्रव्याख्यानावसरे "इवेन समासः विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वञ्च"-इति वार्त्तिकदर्शनेन, "व्याकरणे वैकल्पिकत्वाङ्गीकारात् वार्त्तिके तथोपादानाञ्च नित्यपदप्रक्षेपोऽप्रामाणिकः" इत्युद्योतकृत् प्राह्स ; एवमेवाङ्गीकुर्व्वन् रस-

Digitized by Google

अवितथमनोरथपथप्रथनेषु
प्रगुणगरिमगीतश्रीः।
सुरतरुसदृशः स भवान्
अभिलषणीयः क्षितीश्वरो न कस्य॥ [स०आ०]

गाम्भीर्य्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत्। [त०श्री०]
दुरालोकः स समरे निदाघाम्बररत्नवत्॥ [त०आ०]

स्वाधीनपतिका (८) कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा, जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन

---

गङ्गाधरस्तदपि प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः' इत्यादौ (प्रावृषेण्यो वारिधर इव इत्येवान्वयस्य कर्त्तव्यत्वात्) वाक्यगत इवशब्द इत्युदाजहार।

(८)। ननु षष्ठोल्लासे "अत्र च शब्दार्थालङ्कारभेदात् बहवो भेदाः" इत्यभिहितम्, तच्चाभिधानं तदैवावितथं स्यात्, यद्यलङ्कारप्रभेदेषु विद्यमानेषु चित्रकाव्यत्वस्य सम्भवः स्यात्; स एव न, उपमादीनामर्थालङ्काराणां व्यङ्ग्यस्वरूपतया तत्सद्भावे (तादृशव्यङ्ग्यस्य प्राधान्ये) ध्वनित्वस्य, (अप्राधान्ये) गुणीभूतव्यङ्ग्यत्वस्य वा सम्भवेन अव्यङ्ग्यत्वरूपस्य चित्रकाव्यत्वस्य दुरुपपादत्वात्; तथाहि स्वप्नेऽपीत्यादावुदाहरणे, 'स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारविषयः, तथा जयलक्ष्मीस्त्वदासेवनेन'-इत्यादि व्यङ्ग्यमेव वाच्यार्थस्य (उत्कर्षाधायकवैलक्षण्यरूपं) वैचित्र्यमिति स एवालङ्कारः, तेन विना वैचित्र्यान्तरस्यासत्त्वादिति उक्तोपमाद्यर्थालङ्कारसत्त्वे न चित्रकाव्यत्वम्, चित्रकाव्यत्वे च नोक्तोपमाद्यलङ्कारसम्भव इति पूर्व्वाभिधानेनात्रोपमालङ्काराभिधानं विरुद्धमिति पूर्व्वपक्षयति स्वाधीनपतिकेति।

Digitized by Google

विना यद्यपि नोक्तेर्वैचित्र्यं, वैचित्र्यञ्चालङ्कारः, तथापि (१०) न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः, न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः, अपि तु वाच्यवैचित्र्यप्रतिभासादेव। रसादिस्तु (११) व्यङ्ग्योऽर्थोऽलङ्कारान्तरञ्च सर्व्वत्रा-

(१०) अत्र वैचित्र्यान्तरस्यासत्त्वमेवास्तु, वाच्यस्यैव उपमारूपवैचित्र्यस्य सत्त्वात्, तच्च श्रुतिमात्रेण प्रतीतं सत् वक्तव्यमर्थं सातिशयमुत्कर्षयत् प्रथमत एवालङ्कारपदवीमधिकरोति, उक्तव्यङ्ग्यरूपं वैचित्र्यम् अनुसन्धानसाधितं सदपि पश्चात्प्रतीततया अस्फुटतया च सदप्यकिञ्चित्करमेवेति, एवञ्चोपमाद्यलङ्काराणां वाच्यस्वरूपतया तत्सद्भावे चित्रकाव्यत्वं नासम्भवीति सिद्धान्तयति तथापीति। संस्पर्शः सम्बन्धः। परामर्शोऽनुसन्धानम्। अत्र उपमाद्यलङ्कारस्थले। चारुता उत्कर्षः।

(११) ननु तथापि पूर्व्वापरविरुद्धाभिधानद्वयमस्ति, तथाहि "ते चालङ्कारनिर्णये निर्णेष्यन्ते"-इत्यनेन, यान्येवालङ्कारोदाहरणतया उपन्यस्यानि, तान्येव चित्रकाव्यस्योदाहरणतयाऽवगन्तव्यानीत्यभिहितम् (१ उल्ला०), अत्र तु यानि स्त्रेऽपीत्यादीनि उपमोदाहरणतयाऽभिहितानि, तान्येतानि चित्रकाव्योदाहरणानि भवितुं नार्हन्ति, एतेषु राजविषयकभावादिरूपस्य व्यङ्ग्यस्य सत्त्वेनाव्यङ्ग्यत्वलक्षणस्य चित्रकाव्यत्वस्यासम्भवादित्येकं पूर्व्वापरविरुद्धाभिधानम्। तथा अलङ्कारद्वयस्य एकत्र उपनिपाते, "सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः। अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः"-इत्यनेन संसृष्टिसङ्कररूपं स्वतन्त्रमलङ्कारद्वयं वक्ष्यते, तदनुसारेण स्त्रेऽपीत्यादौ प्रभावप्रभवेत्याद्यनुप्रासस्यापि सत्त्वेन उपमानुप्रासयोः संसृष्टिसङ्करयोरन्यतर एवास्तु अलङ्कारो न तु उपमेति अस्योपमोदाहरणत्वाभिधानमसङ्गतमित्यपरं पूर्व्वापरविरुद्धाभिधानमिति पूर्व्वपक्षमंशतोऽङ्गीकृत्य समाधानमाह रसादिरिति। अव्यभिचारि नियतावस्थितिकम्। अगणयित्वा (अनावश्यक-

Digitized by Google

तया) समालोच्य । तदलङ्काराः काव्यालङ्काराः । अत्रेदं समाधानम्, शब्दालङ्कारस्यैव प्रकृततया तस्यैव विवेचनमपेक्षितम्, रसादिरूपस्तु व्यङ्ग्योऽर्थो- (ऽन्ततो)ऽलङ्कारद्वयञ्च सर्व्वस्मिन्नेव काव्ये सम्भवति, तत्र स्वप्नेऽपीत्यादौ राजविषयकभावादेर्यदि स्फुटत्वमङ्गीकरोषि, तदा ध्वनित्वं, गुणीभूतव्यङ्ग्यत्वं वा अस्तु, अथास्फुटत्वं चेत्, तदा चित्रत्वमस्तु (अव्यङ्ग्यत्ववरं स्मृतमिति चित्रकाव्यलक्षणे अव्यङ्ग्यपदस्य अस्फुटव्यङ्ग्यपरत्वादिति) । एतद्विवेचनमत्राप्रकृततया उपेक्ष्य, प्रस्तुताः काव्यालङ्कारभूता उपमादयः केवलं प्रदर्शिताः, न तु चित्रकाव्यप्रभेदा अपीति । "ते चालङ्कारनिर्णये निर्णेष्यन्ते"-इत्यनेन तु नैवमभिहितम्, 'यान्येवालङ्कारोदाहरणानि, तान्येव चित्रकाव्यप्रभेदोदाहरणानि- इति, किन्तु यदेवालङ्कारनिरूपणं, तदेव चित्रकाव्यप्रभेदनिरूपणमित्येवोक्तम्, (अत एव, निर्णेष्यन्ते-इत्युक्तम्, न तूदाहरिष्यन्ते-इति), अलङ्कारप्रभेदे हि निरूपिते चित्रकाव्यप्रभेदनिरूपणाय नापरं किञ्चिदपेक्षितं स्यात्, तथाहि अनुप्रासचित्रमुपमाचित्रमित्येवमादयश्चित्रकाव्यप्रभेदाः स्वनिरूपणाय केवलमनुप्रासोपमादिनिरूपणमेवापेक्षन्ते, इतरांशस्य विज्ञातत्वात् ; ततश्च स्वप्नेऽपीत्यादौ चित्रकाव्यत्वाभावेऽपि न प्राथमिकं पूर्व्वापरविरुद्धाभिधानमिति ।

एवं न द्वितीयमपि, तथाहि सत्यामेवोपमायां तया सह अपरस्य संसृष्टिः सङ्करो वा सम्भवतीति शुद्धोपमास्थल इव संसृष्ट्यादिस्थलेऽपि उपमासत्त्वमावश्यकमेव, इयांस्तु विशेषः, चमत्कारितायां यद्यलङ्कारान्तरस्य उपमया तुल्यकक्षत्वं, तदा संसृष्टा संकीर्णा वा उपमा भवति, तुल्यकक्षत्वं नो चेत्, शुद्धैव उपमा भवतीति ; एतद्विवेचनन्तु अत्राप्रकृततया उपेक्ष्य प्रकृतत्वात् काव्यालङ्कारभूता उपमैव केवलं प्रदर्शिता इति । ततश्च स्वप्नेऽपीत्यादौ अनुप्रासस्य यद्युपमातुल्यकक्षत्वमङ्गीकरोषि, तदाङ्गीक्रियताम् संसृष्टा संकीर्णा वा उपमा, अथ अतुल्यकक्षत्वं चेत्, तदा शुद्धैव उपमेति कुतः पूर्व्वापरविरुद्धाभिधानमिति । वस्तुतस्तु अत्रोपमाकृतचमत्कारेण सातिशयेन अनुप्रासकृतचमत्कारस्य तिरोधानात् शुद्धोपमैवालङ्कारः इति अलमधिकेन ।

-व्यभिचारीत्यगणयित्वैव तदलङ्कारा उदाहृताः । तद्रहित-त्वेन (१२) तु उदाह्रियमाणा विरसतामावहन्तीति पूर्व्वा-परविरुद्धाभिधानमिति न चोदनीयम् ॥

तद्वत् धर्मस्य लोपे स्यात्,
न श्रौती तद्धिते पुनः (१३) । [५]

धर्म्मः साधारणः, तद्धिते कल्पबादौ (१४) चार्थ्येव । तेन पञ्च (१५) । उदाहरणम्,

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः ! सत्यं तस्यामृतं यथा ॥ [वा० श्रौ०]

---

(१२) ननु चित्रकाव्योदाहरणयोग्यतया रसादिरहितान्येव उपमोदा-हरणानि किमिति नोपन्यस्तानीति अत आह तद्रहितत्वेनेति ।

(१३) अत्रायमभिसन्धिः, इवार्थविहितवतिरूप एव हि तद्धिते श्रौती भवेत्, स च वतिप्रत्ययः "तत्र तस्येव" (५।१।११६।)-इति सूत्रेण षष्ठीसप्त-म्यन्तादेवोपमानपदात् विहिततया साधारणधर्मे एव स्वार्थान्वयबोधं जनयन् नियतमेव साधारणधर्मसाकाङ्क्ष इति साधारणधर्म्मोपादानं विना तादृशस्य तद्धितस्यासम्भवात् न तत्रात उपमाभेद इति ।

(१४) तुल्यार्थवतिर्हि, "तेन तुल्यं क्रिया चेत् वतिः"-(५।१।११५) इत्यनेन विहित इति तदर्थस्य साधारणधर्मरूपायां तुल्यक्रियायामेव पर्य्यव-सानात् साधारणधर्म्मोपादानं विना नैव तुल्यार्थवतेः सम्भव इति तद्धितान्तरे दर्शयति कल्पबादाविति ।

(१५) वाक्यगा समासगेति द्विविधा श्रौती, वाक्यसमासतद्धितगेति त्रिविधा आर्थीति मिलित्वा धर्मलोपे लुप्ता पञ्चविधा ।

आकृष्टकरवालोऽसौ सम्पराये परिभ्रमन्।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः॥ [वा॰ आ॰]
करवालइवाचारः [स॰ औ॰]
तस्य वामभ्रूतोपमा (१६)। [स॰ आ॰]
विषकल्पं मनो वेत्सि, [त॰ आ॰]
यदि जीवसि तत्सखे!॥

उपमानानुपादाने
वाक्यगाऽथ समासगा (१७)॥२॥[२]

सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स।
दीसइ अह वा णिसम्मइ सरिसं अंसंसमेत्तेण (१८)॥

---

(१६) भ्रूतोपमेति भ्रूतेनोपमीयते या, भ्रूतमुपमा (उपमानं) यस्या इति वा समासः। विषकल्पमिति अत्र "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः"-(५।३।६७ पा॰)-इति सूत्रेण विहितस्य कल्पप्प्रत्ययस्य (विषकल्पं मन इति सामानाधिकरण्येन निर्देशात्) ईषदसमाप्तिविशिष्टो धर्म्मो अर्थः, ईषदसमाप्तिश्च किञ्चिदूनसकलधर्मसम्बन्धरूपा उपमैवेति अत्र उपमायाः (तुल्यादिशब्दवत्) विशेषणतया वाच्यत्वात् आर्थीति।

(१७) उपमानपदादेव उपमाप्रतिपादकस्य वतिप्रभृतितद्धितस्य विधानात् तदनुपादाने तद्धितस्यासम्भवेनात्र न तद्धितगा सम्भवति, नापि श्रौती, इवादीनां उपमानान्विततयैव स्वार्थबोधकत्वनियमेन उपमानानुपादाने तेषामुपादानासम्भवात्, अतो द्विविधैव। एवमेव प्रदीपः, अतश्च दर्पणकृदुद्भावितं श्रौत्यार्थीभेदेन चातुर्विध्यं न रुचिरम्।

(१८) सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य। दृश्यतेऽथ

कव्यस्येत्यत्र कव्यसममिति, सरिसमित्यत्र च चूणमिति पाठे एषैव समासगा ॥

वादेर्लोपे (१९) समासे सा कर्माधारक्यचि क्यङि ।
कर्मकर्त्रोर्णमुलि (२०), [६]

वाशब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे

---

वा निश्चय्यते सदृशमंशांशमात्रेणेति सं० । 'अन्नास्मद्दर्शनस्यवर्णाविषयत्वेन दुर्लभतया उत्कृष्टगुणाम् अस्मदगोचरं किञ्चित् उपमानं भविष्यतीति सादृश्य-पर्य्यवसानादुपमानलुप्तेयमुपमा' इति उद्योतकृत् । उपमानवाचकात् यत्-पदानन्तरम् इवादेः सम्भवस्तदनुपादानमेवोपमानानुपादानम्, तेनात्र सदृ-शपदेन सामान्यत उपमानोक्तावपि न क्षतिः सदृशशब्दादिवाद्यनुत्पत्तेरिति तु महेश्वरः ।

(१९) अत्र उपमावाक्यगा न सम्भवति, मुखं चन्द्रप्रकाशते इत्येता-वन्मात्रेण उपमाया अप्रतीतेः, नापि तद्धितगा श्रौती वा सम्भवति, वत्या-दीनां तद्धितानाम्, इवादीनाञ्च औपम्यप्रतिपादकतया तत्प्रयोगे औपम्यप्रति-पादकलोपासम्भवादित्यन्यथा विभजते वादेरिति एवमेव प्रदीपः । "उपमाना-दाचारे"-इति-(३।१।१०पा०)-सूत्रेण कर्म्मपदात्, "अधिकरणाच्च"-इति तत्र-त्यवार्त्तिकेन च अधिकरणपदात् च क्यच् विहितः । एवं "कर्तुः क्यङ् सलोपश्च"-इति(३।१।११पा०) सूत्रेण कर्तृपदात् क्यङ् विहितः । तथा "उपमाने कर्म्मणि च" इति (३।४।४५। पा०) सूत्रेण कर्म्मणि कर्त्तरि उपपदे णमुल् विहितः । ततश्च यद्यपि क्यच्क्यङ्णमुलां प्रयोगे उपमा प्रतीयते, तथापि चैषां यथा नोपमावाचकत्वं, तथोदाहरणव्याख्यानावसरे एव प्रतिपादयिष्यामः ।

(२०) 'कर्म्मकर्त्रोर्णमुल्येतद्द्विलोपे क्विप्समासगा'-इति सन्निवेशात् नात्र छन्दोभङ्गशङ्का कार्य्या ।

षट्,-समासेन, कर्म्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्त्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत्। उदाहरणम्,

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता॥ [द्वयोःस०]

तथा,

असितभुजगभीषणासिपत्रो
रुहरुहिकाहितचित्ततूर्णचारः।
पुलकिततनुरुत्कपोलकान्तिः
प्रतिभटविक्रमदर्शनेऽयमासीत्॥ [बहूनां स०]

पौरं सुतीयति जनं, समरान्तरेऽसौ [क०क्यच्]
अन्तःपुरीयति विचित्रचरित्रचञ्चुः। [अ०क्यच्]
नारीयते समरसीम्नि कृपाणपाणेः [क्यङ्]
आलोक्य तस्य चरितानि सपत्नसेना॥

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे। [कर्म्म०णमुल्]
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः (२१)॥ [कर्तृ०णमुल्]

---

(२१) क्यच्क्यङ्णमुलामुपमावाचकत्वाभावेन एषु उपमाप्रतिपादकस्य लोपः, तथाहि क्यच्क्यङोः केवल आचारस्तुल्याचारो वा सामान्यतोऽर्थः (( विशेषाचारस्तु तत्तत्पदसान्निध्यात् प्रतीयते, यथा, पौरं जनं सुतीयतीत्यस्य सुतकर्मकाचारतुल्यपौरजनकर्मकाचारकर्त्तेत्यर्थः, अत्राचारः स्नेहपालनादिः। समरान्तरेऽन्तःपुरीयतीत्यस्य अन्तःपुराधिकरणकाचारतुल्यसमरान्तराधिकरणकाचारकर्त्तेत्यर्थः, अत्राचारः स्वच्छन्दविहारादिः। एवं नारीयते इत्यस्य नारीकर्तृकाचारतुल्याचारकर्त्तेत्यर्थः, अत्राचारः सकातर्यविन-

Digitized by Google

एतद्-

द्विलोपे क्विप्समासगा (२२) ॥ ३ ॥ [ २ ]

एतयोर्धर्मवाद्योः । उदाहरणम्,

सविता विधवति, विधुरपि
सवितरति, तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च
सुखदुःखवशीकृते मनसि (२३) ॥ [क्विप्]

---

यादिः)), ततश्च क्यङ्क्यङोराचारगततुल्यताप्रतिपादकत्वमेवास्ति, न तु प्रकृतोदाहरणतया विवक्षितायाः सुतादिना (उपमानेन) पौरजनादेः (उपमेयस्य) उपमायाः प्रतिपादकत्वमिति । सा च उपमा तुल्याचारप्रतीत्यनन्तरं (तुल्याचारं साधारणधर्मीकृत्य) पश्चात् प्रतीयते । एवं णमुलोऽपि क्रियागततुल्यत्वमर्थः ((तथाहि निदाघघर्मांशुदर्शं पश्यन्ति त्वां परे इत्यस्य निदाघघर्मांशुकर्मकदर्शनक्रियातुल्यत्वत्कर्मकदर्शनकर्त्तारः परे इत्येवमर्थः, पार्थसञ्चारं सञ्चरतीत्यस्य पार्थकर्तृकसञ्चारक्रियातुल्यसञ्चरणकर्त्तेत्यर्थः )), ततश्च णमुलः क्रियागततुल्यत्वप्रतिपादकत्वेऽपि प्रकृतायाः (निदाघघर्मांशुपार्थाभ्याम् उपमानाभ्याम् अवनीपतेरुपमेयस्य) उपमायाः प्रतिपादकत्वं नास्ति, उत्तरकालन्तु तुल्यक्रियाप्रतीतिमूला तत्प्रतीतिर्भवति । एवञ्च दर्पणे यदत्र दोषदर्शनम् तत् (स्वच्छेऽपि मुखे मलिमेक्षणमिव) दर्पणमालिन्यविजृम्भितमिति ।

(२२) 'अथ द्विलोपे विभजनीया, तत्र धर्मवाद्योर्लोपे वाक्यगा न सम्भवति, शिष्टयोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादाने उपमाया अनवगमात् । नापि तद्धितगा, तद्धितस्यापि कल्पबादित्वेन तल्लक्ष्ये द्विलोपासम्भवात् । नापि श्रौती, इवाद्यभावादित्यन्यथा विभजते एतदिति' इति प्रदीपः ।

(२३) अत्र "कर्त्तुः क्यङ्सलोपश्च" (३।१।११) इति सूत्रव्याख्यात्राव-

Digitized by Google

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः(२४) ॥ [स०]

धर्मोपमानयोर्लोपे
वृत्तौ वाक्ये च दृश्यते (२५) । [२]

ढुण्ढुल्लन्तो मरिहिसि कण्टअकलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर ! भमन्तो ण पाविहिसि (२६)॥

कुसुमेण सममिति पाठे वाक्यगा ।

क्वचि वाद्युपमेयासे, [१]

आसे निरासे ।

---

सरे "सर्व्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः"-इति वार्त्तिकेन विहितः क्विप्-प्रत्यय एव तुल्याचाररूपसाधारणधर्मवाचक इति तस्य (वेरपृक्तस्य (६।१।६७) इति सूत्रेण नित्यं लुप्तत्वात् धर्मलोपः ।

(२४) राजा कुञ्जर इवेति "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे"-(२।१।५६। पा०) इति सूत्रेण समासः । दुराधर्षत्वस्य साधारणधर्म्मस्याति-प्रसिद्धतया तदनुपादानेऽपि नोपमाप्रतीतिव्याघातः ।

(२५) तद्धिते तु नेयं, उपमानलोपे तद्धितस्यैवाभावात् । नापि श्रौती उपमानाप्रयोगे इवादेरप्रयोगादिति प्रदीपः । वृत्तौ समासे ।

(२६) ढुण्ढुनायमानो मरिष्यसि कण्टककलितानि केतकीवनानि । माल-तीकुसुमसदृशं भ्रमर ! भ्रमन्नपि न प्राप्स्यसीति सं० । ढुण्ढुनायमानः ढुण्ढु-नित्याकारशब्देन प्रार्थयन् इति निदर्शनकृत् । अत्र प्रकृतत्वात् मालती उपमेया, कुसुमान्तरस्याप्राप्तुप्रदेशेन तदप्राप्यमुत्कृष्टगुणमस्योपमानमिति प्रतीतेरस्योपमितिक्रिययानिष्पत्तिरिति उद्योतकृत् ।

Digitized by Google

अरातिविक्रमालोकविकस्वरविलोचनः।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति (२७)॥

अत्रात्मा उपमेयः।

त्रिलोपे च समासगा॥ ४॥ [१]

त्रयाणां वादिधर्मोपमानानाम्। उदाहरणम्,

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा।
स्मरशरविसराचितान्तरा मृगनयना हरति मुनेर्मनः॥

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदोदाहरणम् (२८)।

क्रूरस्य (२९) आचारस्यायःशूलतयाऽध्यवसायात्, अयः-

---

(२७) सहस्रमायुधानि यस्य, तमिवात्मानमाचरतीत्यर्थात् कर्मत्वेनोपमेयभूत आत्मा कर्मत्वेन नोपात्तः। प्रदीपे तु सहस्रारायुधीयतीति पाठः, तस्य, सहस्रारं चक्रमायुधं यस्य (विष्णोः), तमिवाचरतीत्यर्थः।

(२८) "अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते, तदा नेदमुदाहरणं [मृगपदस्यैव उपमानप्रतिपादकस्य सत्त्वप्रसङ्गात्], यदा तु मृगलोचने इव (चञ्चले) नयने यस्या इत्यर्थो विवक्ष्यते, तदा सप्तम्युपमानपूर्व्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च इति (२।२।२४। पा॰ सू॰) वार्त्तिकेन उपमानपूर्व्वपदस्य नयनशब्देन बहुव्रीहौ उपमानवाचिमृगलोचनेतिपूर्व्वपदे उत्तरपदभूतस्य नयनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानात् इदमुदाहरणम्" इति प्रदीपः। त्रिलोपेऽन्यविधासम्भवात् एकविधैवोक्ता।

(२९) अत्र 'उपमानमात्रोपादानेऽपि त्रिलोपा सम्भवति, यथा अयःशूलिक इति, अत्र हि क्रूराचार उपमेयः, तीक्ष्णत्वादिरूपः साधारणो धर्मः, इवादिश्च नोपात्तः, केवलमुपमानभूतमयःशूलमेवोपात्तम्' इति

स्थूलेनाच्छिन्तीत्यायःस्थूलिकः-इत्यतिशयोक्तिर्न तु क्रूराचारो-पमेय-तैक्ष्ण्यधर्म-वादीनां लोपे त्रिलोपेयमुपमा ।

एवमेकोनविंशतिर्लुप्ताः (३०), पूर्णाभिः सह पञ्चविंशतिः ॥

"अनयेनेव (३१) राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ साथ विषादेन, पद्मिनीव हिमाम्भसा ॥

-इत्यभिन्ने साधारणे धर्म्मे,

ज्योत्स्नेव नयनानन्दः, सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्व्वलोका नितम्बिनी ॥

-इति भिन्ने च तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा,

---

केचिदाहुः, तन्निराकरोति क्रूरस्येति । अच्छिनत्ति व्यवहरति । इदमत्र निराकरणम्, नेह उपमानोपमेयभावः प्रतीयते, तद्बोधकाभावात्, किन्तु क्रूराचार एव निगीर्णस्वरूपः अयःस्थूलतादात्म्येन (आरोपात्) निर्द्दिष्ट इत्यतिशयोक्तिरलङ्कार इति ।

(३०) धर्म्मलोपे पञ्च, उपमानलोपे द्वौ, इवादिलोपे षट्, धर्म्मवादिलोपे द्वौ, धर्म्मोपमानयोर्लोपे द्वौ, इवोपमेययोर्लोपे एकः, त्रिलोपे च एक इति मिलित्वोनविंशतिर्लुप्तोपमाप्रभेदाः । उपमानोपमेयादीनां लोपे उपमैव न सम्भवतीति तत्कृतप्रभेदो नोक्तः ।

(३१) ननु अन्येऽपि उपमाप्रभेदाः प्राचीनैरुक्ताः, तथाहि एकस्य उपमेयस्य बहूपमानसम्बन्धे मालोपमा, पूर्व्वपूर्व्वस्य उपमेयस्य उत्तरोत्तरमुपमानत्वे रसनोपमा चेति द्वौ भेदौ, तयोरपि यथाक्रमं बहूपमानानाम् उत्तरोत्तरोपमानानाञ्च साधारणधर्म्मस्य एकत्वेन भिन्नत्वेन च प्रत्येकं द्वैविध्यमिति मिलित्वा चत्वारो भेदाः,-इत्येवं प्राचीनप्रदर्शितबहुभेदसत्त्वे कथं पञ्चविंशतिविधत्वमित्याशङ्काम् उक्तचतुःप्रभेदप्रदर्शनपूर्व्वकम् (एवंविधयत्किञ्चिद्वैचित्र्य-

क क

यथोत्तरमुपमेयस्योपमानत्वे, (पूर्ववदभिन्नभिन्नधर्मत्वे,

अनवरतकनकवितरण-
जललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव
चेष्टा,चेष्टेव कीर्त्तिरतिविमला ।। [अभि०ध०]

मतिरिव मूर्त्तिर्मधुरा, मूर्त्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ।।[भि०ध०]
-इत्यादिका) रसनोपमा च" न लक्षिता, एवंविधवैचित्र्य-
सहस्रसम्भवात्, उक्तभेदानतिक्रमाच्च ।।

उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।
अनन्वयः,

उपमानान्तरसम्बन्धाभावो-(३२)ऽनन्वयः । उदाहरणम्,

न केवलं भाति नितान्तकान्ति-
र्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधलास्यवासा-
स्ते तद्विलासा इव तद्विलासाः ।।

---

मादाय प्रभेदकरणे आनन्त्यदोषप्रसङ्गेन, पूर्वोक्तप्रभेदेषु यथासम्भवमेतेषामन्त-र्भावेण च) निराकरोति अनयेनेति ।

(३२) अत्र बहुव्रीहिः समासः । एतच्चानन्वयपदव्युत्पादनं, लक्षणन्तु

**विपर्य्यास उपमेयोपमा तयोः ॥ ५ ॥**

तयोरुपमानोपमेययोः, (३२) परिवृत्तिः (अर्थात्) वाक्यद्वये, इतरोपमानव्यवच्छेदपरा (उपमेयेनोपमा इति) उपमेयोपमा। उदाहरणम्,

कमलेव मतिर्मतिरिव कमला,
तनुरिव विभा, विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी
सततं विभाति वत यस्य॥

---

कारिकोक्तम्,-एकस्मिन् वाक्ये एकस्यैव (तत्सदृशवस्त्वन्तरासत्त्वप्रतिपादनाय) उपमानोपमेयभावोऽनन्वय इत्येव पाठ्यम्। उपमायां न एकस्यैव उपमानोपमेयभावः, उपमेयोपमायान्तु वाक्यद्वये स इति तयोर्व्यवच्छेदः। स्वेन स्वस्य उपमाऽनन्वय इति तु निष्कर्षः।

(३२) परिवृत्तिरिति विपर्य्यासपदस्यार्थः। एकवाक्ये परिवर्त्तनासम्भवात्, अर्थात् वाक्यद्वये इति उक्तम्। इतरोपमानेति विशेषणम्, एकस्य उभयत्र साधारणधर्मत्वे सतीति विशेषणं ग्राहयति, एकेन हि धर्मेण तस्य साम्येऽपरत्र वर्णिते, तेन धर्मेण अपरस्य तत्र साम्यमर्थप्राप्तमपि पुनः शब्देनोच्यमानं तेन धर्मेण तयोः सदृशं तृतीयं वस्तु व्यवच्छिनत्तीति उद्योतकृत् प्राह स्म। अत एव सविता विधवतीत्यादौ सत्यपि उपमानोपमेययोर्वाक्यद्वये विपर्य्यासे साधारणधर्मस्य भिन्नतया नोपमेयोपमा, तत्र हि सविता विधवतीत्यत्र शीतकरत्वादिः साधारणो धर्मः, विधुरपि सवितरतीत्यत्र तु उष्णकिरणत्वादिः साधारणो धर्मः इति। अयमत्र निष्कर्षः, पूर्व्ववाक्योक्तसाधारण-

Digitized by Google

**सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् (३४) ।**

**समेन उपमानेन । उदाहरणम्,**

**उन्मेषं यो मम न सहते जातिवैरी निशायाम्,**
**इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्य्यदर्पः ।**
**नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षात्**
**लग्नां मन्ये ललिततनु ! ते पादयोः पद्मलक्ष्मीः ॥**

---

धर्ममेव साधारणधर्मीकृत्य पूर्व्ववाक्योक्तेन उपमेयेन पूर्व्ववाक्योक्तस्य उपमानस्य उपमा उपमेयोपमेति ।

(३४) सम्भावनं वितर्कः । प्रकृतस्य (उपमेयस्य) । समेन समानतया । उपमेयस्य उपमानत्वेन सम्भावना उत्प्रेक्षा इति तु निष्कर्षः, यथोदाहरणे उपमेयभूता पादशोभा उपमानभूत-यथोक्तहर्षहेतुकपादपतित-पद्मशोभात्वेन सम्भाविता। अत्रालङ्कारत्वे सतीतिविशेषणं प्रकरणप्राप्तमस्त्येव, तेन प्रतिभानुत्थापितायाः वास्तविकसम्भावनायाः, असुन्दरसाधारणधर्मसूलायाः सम्भावनायाश्च चमत्काराजनकतया अलङ्कारत्वाभावेन नोत्प्रेक्षात्वप्रसङ्गः, रमणीयधर्मनिबन्धना प्रतिभोत्थापितैव हि सम्भावना चमत्करोतीति सैवालङ्कारः। **तद्वाचकाश्च ध्रुवम्-प्रायो-नूनम्-मन्ये-शङ्के-अवैमि-ऊहे-तर्कयामि-जाने-उत्प्रेक्षे-इत्येवमादयो बहवः, एवं 'उपमानस्य अलोकसिद्धत्वे इवशब्दोऽपि'-इति चक्रवर्त्ती। 'तिङन्तसमभिव्याहृत इवशब्दः सर्व्वत्रैवोत्प्रेक्षावाचकः, नामसमभिव्याहृतस्तु इवशब्दस्तत्रैव उत्प्रेक्षाबोधकः, यत्र सम्भावनोपयुक्तविशेषणदानं, (यथा, बालेन्दुवक्राण्यविकाशभावात् बभुः पलाशान्यतिलोहितानि । सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनामित्यादौ यत्र-क्वचित् स्थितैरपि नखक्षतैर्वक्रत्वलौहित्यादिना उपमाया वक्तुं शक्यत्वेऽपि सद्योवसन्तनायक-समागत-वनस्थलीसम्बन्धित्वरूपविशेषणकल्पनम् उत्प्रेक्षागमकं)। तदन्यस्थले**

Digitized by Google

लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः (३५)।
-इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम् (३६)।
**ससन्देहस्तु (भेदोक्तौ तदनुक्तौ च) संशयः(३७)॥६॥**

---

इवशब्दः उपमाबोधकः' इति तु उद्योतकृत्। दर्पणकृतस्तु, नुशब्दोऽपि उत्प्रेक्षावाचक इति, एवम् उत्प्रेक्षावाचकानामेषां सम्भावनाबोधकत्वाभावे नायमलङ्कारः, यथा, यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते, तदाचष्टे लोकः शशक इति नो मां प्रति तथा। अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्-इत्यादौ (निश्चयार्थकतया) नायमलङ्कार इति, तथा उत्प्रेक्षाबोधकेवशब्दश्च क्वचित् प्रतीयमानोऽपि भवति, यथा 'तन्वङ्ग्यास्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणिने स्थानं न दत्तमितिलज्जया'-इत्यत्र लज्जयेवेत्युत्प्रेक्षाबोधक इवशब्दो झटिति प्रतीयते, स्तनयोर्लज्जाया असम्भवात् तेन विना वाक्यार्थस्याप्रतीतेरिति च आहुः।

(३५) असत्पुरुषसेवेव दृष्टिर्निष्फलतां गतेति अन्त्यमर्द्धम्। अत्रोपमा।

(३६) न तु, 'तमसो लेपनकर्त्तृत्वमत्रोत्प्रेक्ष्यम्'-इत्यलङ्कारसर्व्वस्वकारोक्तम् युक्तम्, व्यापनस्य लेपनतयोत्प्रेक्षणेनैव चमत्कारपर्य्यवसानात् तत्कर्त्तृत्वपर्य्यन्तोत्प्रेक्षणे प्रयोजनविरहेण तस्यात्राविवक्षितत्वादिति शेषः।

(३७) अत्र प्रकृतस्य समेनेति पूर्व्वस्मादनुवर्त्तते, तेन, उपमेयस्य उपमानरूपतया संशयः ससन्देहालङ्कार इति लक्षणम्। अत्रापि अलङ्कारत्वे सतीति विशेषणस्य सत्त्वात् प्रतिभानुत्थापितेऽचमत्कारिणि स्थाणुर्वा पुरुषो वेति संशये नालङ्कारत्वप्रसङ्गः। संशयश्च उभयस्मिन् पक्षे तुल्यरूपो ग्राह्यः, तेन सम्भावनाया अपि संशयविशेषरूपतया नोत्प्रेक्षालङ्कारे ससन्देहालङ्कारत्वप्रसङ्गः, सम्भावनाया एकस्मिन् पक्षे आधिक्येन उभयत्र तुल्यरूपत्वाभावादिति। अस्य च ससन्देह इति नाम महेश्वरं विना प्रायः सर्व्व एवाङ्गीचक्रुः, ततश्च (अत्र अनेकैरुपमानैः अनेकसन्देहसम्भवेन) सन्देहेन सह वर्त्त-

Digitized by Google

भेदोक्तौ यथा,

अयं मार्त्तण्डः किं ? स खलु तुरगैः सप्तभिरितः,
कृशानुः किं ? सर्व्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं ? साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥

---

मानः (सन्देहः) ससन्देह इति यथाकथञ्चित् नामव्युत्पत्तिः कार्य्या । अयमेव सन्देहालङ्कारसंशयालङ्कारशब्दाभ्यां व्यवह्रियते ।

स चायं भेदोक्त्यनुक्तिभ्यां द्विविधः । भेदो वैधर्म्यम्, तत्र उपमानोपमेययोरेकस्मिन्नवर्त्तमानमपरत्र वर्त्तमानं धर्मविशेषरूपम् ग्राह्यं, यथोदाहरणद्वये, यथाक्रमं सप्ताश्वसम्बन्ध उपमेये राजनि अवर्त्तमानः सूर्य्य एव वर्त्तते, एवं ललितसविलासवचनं चन्द्रादाववर्त्तमानं उपमेये मुखे एव वर्त्तते इति तयोरुक्तिरत्र वैधर्म्योक्तिरिति । अयमाद्यः प्रभेदोऽपि द्विविधः, निश्चयगर्भो निश्चयान्तश्चेति । निश्चयः गर्भे (मध्ये) यस्येतिव्युत्पत्त्या यादृशसंशयान्तरं निश्चये जातेऽपि पुनः संशयः, स निश्चयगर्भः । निश्चयश्चात्र उपमानभिन्नत्वेन उपमेयावधारणरूपो ग्राह्यः, एकोपमानभिन्नत्वेनावधारणेऽपि उपमानान्तररूपेण संशयोदयसम्भवात्, यथोदाहरणे, सूर्य्यसप्ताश्वसम्बन्धरूपवैधर्म्यप्रदर्शनेन राज्ञः सूर्य्यभिन्नत्वावधारणेऽपि कृशानुत्वरूपेणापि पुनः संशयः, इत्थमेव निश्चयगर्भत्वमुपपद्यते । निश्चयः अन्ते (समाप्तौ) यस्येतिव्युत्पत्त्या यादृशसंशयान्तरं निश्चये जाते (निश्चयस्यैव संशयनिवर्त्तकतया) पुनः संशयानुदयः स निश्चयान्तः । उपमेयस्वरूपेण उपमेयावधारणमेव उपमेये उपमानसंशयनिवर्त्तकमिति तदेवात्र निश्चयपदेनोच्यते, तादृशनिश्चयानन्तरमेव हि संशयानुदयेन निश्चयान्तत्वमुपपद्यते, यथोदाहरणे, ललितसविलासवचनादिरूपवैधर्म्यदर्शनात् मुखत्वरूपेण मुखस्य निश्चये पुनः केनापि रूपेण न संशयः । परन्तु 'वाच्यस्य संशयस्य वाच्येनैव निश्चयेन निवृत्तिवर्णनमुचितमिति निश्चयान्तस्थले निश्चयस्य वाच्यत-

Digitized by Google

भेदोक्ताविल्यनेन न केवलमयं निश्चयगर्भो, यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः। यथा,

इन्दुः किं ? क्व कलङ्कः ! सरसिजमेतत् किमम्बु कुत्र गतम् ! ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टोद्भटेन। तदनुक्तौ यथा,

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
शृङ्गारैकरसः स्वयं नु मदनो ? मासो नु पुष्पाकरः ? ।
वेदाभ्यासजड़ः कथं नु (३८) विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ? ॥

**तद्रूपकमभेदो य उपमानोपमेययोः।**

अतिसाम्यात् (अनपह्नुतभेदयोः) अभेदः (३९)।

---

मावश्यकम्, तस्य वाच्यत्वे च न तादृशचमत्कारित्वम्'-इति मन्यमानेन भट्टोद्भटेनायं निश्चयान्तप्रभेद उपेक्षितः, (वस्तुतो मन्यत्वस्यस्मतः)। एतत्सर्व्वं वृत्तौ स्पष्टम्।

(३८) कथं नु प्रभवेत्, नैव प्रभवेदित्यर्थः, एवञ्चात्र उत्तरार्द्धे सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः।

(३९) परस्परविरुद्धधर्म्मवत्त्वेन उपस्थिततया प्रकाशितविभिन्नस्वरूपयोरपि उपमानोपमेययोरतिसाम्यप्रदर्शनाय काल्पनिकोऽभेदारोपो रूपकमिति निष्कर्षः, यथा मुखचन्द्रं पश्य-इत्यादौ मुखत्व-चन्द्रत्वरूपपरस्परविरुद्धधर्म्मवत्तया उपस्थितयोर्मुखचन्द्रयोरभेदारोप इति। अतिशयोक्तौ उपमेयस्य न

समस्तवस्तुविषयम्, श्रौता आरोपिता यदा॥७॥

आरोपविषया इव(४०)आरोप्यमाणा यदा शब्दोपात्ताः, तदा (समस्तानि वस्तूनि विषयोऽस्येति) समस्तवस्तुविषयम्। आरोपिता इति-बहुवचनमविवक्षितम्। यथा,

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।

---

उपमेयगतधर्म्मवत्तया उपस्थितिरिति ततो भेदः, अपह्नुतौ तु उपमेयगोपनेन भेदस्याप्यपह्नवः, अत्र तु न स इति ततोऽपि भेदः। आरोपलक्षणासम्भवस्थले रूपकम्, साध्यवसानलक्षणासम्भवस्थले तु अतिशयोक्तिः। एवं मुखपद्मेत्यादि-समासस्थले विशेषणस्य मुख्यतया-उपमानगतत्वे रूपकम्, उपमेयगतत्वे उपमा, उभयत्र तुल्यरूपत्वे तत्रयोः सङ्करः, अत्र यथाक्रममुदाहरणत्रयम्, विकसितं मुखपद्ममिति, सहास्यं मुखपद्ममिति, रमणीयं मुखपद्ममिति चेति।

तत्र रूपकं तावत् त्रिविधं साङ्गं, निरङ्गं, परम्परितञ्चेति। तत्रापि साङ्गं समस्तवस्तुविषयम्, एकदेशविवर्त्ति चेति द्विविधम्। निरङ्गञ्च केवलं मालारूपञ्चेति द्विविधम्। परम्परितन्तु श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विविधं तत्प्रत्येकं केवलं मालारूपञ्चेति चतुर्व्विधमिति मिलित्वा रूपकस्याष्टौ भेदाः। तत्र प्रथमं समस्तेत्यादिना साङ्गमेतदित्यन्तेन साङ्गस्य प्रभेदद्वयं क्रमेण प्रदर्शयता साङ्गं निरूपितम्।

(४०) आरोपविषयस्यानुपादानेऽतिशयोक्तेरेव प्रसङ्गः, अतः रूपके आरोपविषयस्योपादानं नियतमेवेति आरोपविषया इवेति दृष्टान्ततया उक्तम्, वस्तूनि आरोप्यमाणानि, विषयः शब्दप्रतिपाद्यः। अविवक्षितमिति अन्यथा आरोप्यमाणस्य द्विमात्रत्वेऽस्यासम्भवः स्यादिति शेषः।

Digitized by Google

द्वीपाद्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन (४१)॥

अत्र (४२) पादत्रये, अन्तर्धानव्यसनरसिकत्वमारोपितधर्म्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्य्या॥

## श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत्।

---

(४१) क्रूरयामकुलेषः। व्यसनं कौतुकम्। कापालिकी तत्तद्रूपा विशेषयोगिनी। मुद्राकपालं दीक्षाकालस्वकृतोपकरणम्। परिमलस्सूर्णः। अत्र आरोप्याणां भस्मादीनां सर्व्वेषां शब्दोपात्तत्वात् समस्तवस्तुविषयरूपकम्, एवं कापालिक्या आरोप इव तदङ्गानां (तदुपकरणानां तदानुषङ्गिकाणां) भस्मादीनामप्यारोपात्तस्य साङ्गत्वम्। 'भस्माभिन्ना ज्योत्स्ना इत्यादिरीत्या उपमानविशेषणक एव मयूरव्यंसकादित्वात् समासः कार्य्य इति नोपमानपदस्य प्राग्भावनियमः, मयूरव्यंसकादिपदेन सर्व्वाण्येव रूपकोदाहरणानि स्वह्यन्ते'-इत्युद्योतकृतामाशयः। अस्य तु चतुर्थपादेऽपसङ्गतिः।

(४२) ननु ज्योत्स्ना भस्मेवेत्यादिरीत्या उपमितसमासस्यापि सम्भवेन अत्र उपमा वा स्यात् रूपकं वेति संशयोदयेन उपमया रूपकस्य सन्देहसङ्कर एव स्यात्, न तु रूपकमित्याशङ्कां निराकरोति अत्रेति। इदमत्र निराकरणम्, अन्तर्धानव्यसनरसिकत्वं हि कापालिक्या एव सम्भवति, न तु रात्रेः, उपमापरिकल्पने तु उपमेयभूताया रात्रेरेव प्राधान्येन तत्र नान्तर्धानव्यवसनरसिकत्वस्य मुख्यतयाऽन्वयः स्यादिति रूपकमेवाश्रीयते। अत्र 'न कार्य्या'-इत्यनन्तरम् "अथ वा न्यस्तं लाञ्छनमञ्जनं कुमुदिनीप्रोल्लाससिद्धिप्रदमिति चतुर्थः पादः, एवं रूपकेणैव निर्व्वाहः"-इति क्वचित् पाठः, स च बहुभिष्टीकाकृद्भिरदृष्टतया अनाकर इवाभाति।

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेयाः-इत्येकदेशविवर्त्तनात् एकदेशविवर्त्ति । यथा,

जस्स रणंतउरए करे कुणंतस्स मण्डलग्गलअं ।
रससंमुही वि सहसा परंमुही होइ रिउसेणा(४३)॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तं, मण्डलाग्रलताया नायिकात्वं, रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्यात् (४४) अवसीयते-इत्येकदेशे विशेषेण वर्त्तनात् एकदेशविवर्त्ति ।

साङ्गमेतत्,

उक्तद्विभेदं सावयवम् (४५)॥

निरङ्गन्तु शुद्धम् (४६),

यथा,

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्,
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।

---

(४३) यस्य रणान्तःपुरे करे कुर्व्वतो मण्डलाग्रलताम् । रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेनेति सं० । मण्डलाग्रः खड्गः ।

(४४) पाणिग्रहीतुरपि बोधकं करे-कुर्व्वत इति विशेषणं, रसम्मुखीत्यादिस्त्रीलिङ्गं, रणेऽन्तःपुरत्वारोपश्चेति त्रयमत्र सामर्थ्यम् ।

(४५) स्वत एव वर्णनीयतया अङ्गिनः (प्रधानस्य) अवयवानां (मुख्यतस्तत्वावर्णनीयतया अप्रधानानां तत्सम्पर्किणां) रूपणैः सहितं यत् तस्य रूपणं, तत् सावयवं रूपकम् ।

(४६) निरङ्गम् अङ्गानामारोपरहितं केवलस्याङ्गिनो यद्रूपणम् ।

Digitized by Google

अनिद्रं यस्यान्तः स्वपिति, तदहो वेद्मग्रभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ।।

माला तु पूर्व्ववत् (४७) ॥ ८ ॥

मालोपमायामिवैकस्मिन् बहव आरोपिताः। यथा,

सौन्दर्य्यस्य तरङ्गिणी, तरुणिमोत्कर्षस्य हर्षोद्गमः,
कान्तेः कार्म्मणकर्म्म, नर्म्मरहसामुल्लासनावासभूः।
विद्या वक्रगिरां, विधेरनवधिप्रावीण्यसाक्षात्क्रिया,
बाणाः पञ्चशिलीमुखस्य, ललनाचूड़ामणिः सा प्रिया(४८)।।

नियतारोपणोपायः स्यादारोपः परस्य यः।
तत् परम्परितं श्लिष्टे वाचके भेदभाजि वा(४९)॥९॥

---

(४७) एतेन य एव कारिकाकारः स एव वृत्तिकार इत्यायाति, अन्यथा कारिकाकृता वृत्तिकृत्प्रदर्शितया मालोपमाया अलक्षितत्वेन, अत्र पूर्व्ववदिति तस्या दृष्टान्ततयोद्भावनमनुपपन्नं स्यादिति।

(४८) कार्म्मणकर्म्म वशीकरणक्रिया। नर्म्मरहसाम् रहस्यपरिहासानाम्। उल्लासना विजृम्भणम्।

(४९) नियतस्य वर्णनीयतया अवश्यापेक्षणीयस्य यत् आरोपणम्, तस्य उपायः (साधारणधर्मसम्पादकतया) निमित्तं यः परस्य (अन्यस्य) आरोपः तत् परम्परितम्, (कार्य्यकारणभावरूपा परम्परा जाता अत्रेति व्युत्पत्तेः)। यत् वर्णनीयारोपणं प्रति अन्यारोपणमेव केवलं कारणतया विवक्षितं, तत् परम्परितमिति तु निष्कर्षः। तच्च द्विविधम्, उपायभूते रूपके आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्वात् भिन्नस्वरूपत्वाच्चेति। साङ्गरूपके तु वर्णनीयस्य अङ्गिनः रूपणं सुप्रसिद्धसाधर्म्यनिमित्तकमेव, न तु तत्र अङ्गरूपणमेव

Digitized by Google

यथा,

विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते!
दुर्गामार्गणनीललोहित! समित्स्वीकारवैश्वानर!।
सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो!
साम्राज्यं वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥ [श्लि॰प॰मा॰]

अत्र मानसमेव मानसम्, कमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणां मार्गणमेव दुर्गाया मार्गणं, समिधां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्याम्प्रीतिः, विजयः (परपराभव एव) विजयोः (अर्जुनः)-एवमारोपणनिमित्तो हंसादेरारोपः।

यद्यपि शब्दार्थालङ्कारोऽयमित्युक्तं (५०) वक्ष्यते च, तथापि प्रसिद्ध्यनुरोधादत्रोक्तः, एकदेशविवर्त्ति हीदमन्यैरभिधीयते (५१)।

---

निमित्तं, तस्य तं विनापि उपपत्तेः, तत्र अङ्गरूपकान्तु सुप्रसिद्धसाधर्म्यनिमित्तकस्य अङ्गिरूपकस्य परिपोषकमात्रमिति साङ्गरूपकादस्य भेदः।

(५०) मानसादिपदस्य परिवृत्त्यसहत्वात् हंसादिपदस्य च तत्सहत्वादुभयालङ्कारत्वमिति 'उक्तं' (श्लेषनिरूपणप्रस्तावे (२४१।३प॰) इह दोषगुणालङ्काराणामित्यादिना) उक्तप्रायम्। 'वक्ष्यते' (सङ्करालङ्कारनिरूपणप्रस्तावे 'उक्तमत्र यथा काव्ये'-इत्यादिना, 'एवञ्च यथा पुनरुक्तवदाभासः परम्परितरूपकञ्चोभयोर्भावाभावानुविधायितया उभयालङ्कारौ'-इत्यन्तेन) व्यवस्थाप्यते।

(५१) प्रसिद्धिरत्र अलङ्कारसर्वस्वकारादीनामन्येषामालङ्कारिकाणाम-

भेदभाजि यथा,

आलानं जयकुञ्जरस्य (५२), दृषदां सेतुर्विपद्वारिधेः,
पूर्व्वाद्रिः करवालचण्डमहसो, लीलोपधानं श्रियः।
संग्रामामृतसागरप्रमथनक्रीड़ाविधौ मन्दरो,
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः॥ [अलि०प०मा०]

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्य आलानत्वाद्यारोपो युज्यते।

"अलौकिकमहालोकप्रकाशितजगत्त्रयः।
सूयते देव! सद्वंशमुक्तारत्नं न कैर्भवान्(५३)॥ [लि०प०के०]

---

र्थालङ्कारमध्ये गणनस्य माद्या। "यथा रथोद्धतःपुरत्वारोपे तद्विशिष्ट-सम्बन्धस्य मण्डलाग्रलतादावयोग्यतया तद्बलादेव नायिकात्वारोपः, तथा (राजनि हंसत्वारोपे तद्विशिष्टस्यान्तःकरणसम्बन्धायोग्यतया तद्बलात् मानसे मानसमरस्त्वारोप इत्येकदेशविवर्त्तीत्युच्यते" इत्युक्तम् इत्युद्योतकृत्। नैवं-रीत्या एकदेशविवर्त्तित्वं प्राचीनसम्मतम् इत्यन्यैरित्युक्तम्।

(५२) अत्र जये कुञ्जरत्वारोपे भुजे आलानत्वारोपो निमित्तम्, भुजे च आलानत्वारोपे जये कुञ्जरत्वारोपो निमित्तमिति परस्परसापेक्ष-सिद्धिरपि (परस्परावष्टम्भमात्राधीनस्थितिकाभिरिष्टकाभिर्गृहविशेषनिर्म्माणा-मिव) न दोषाय इत्युद्योतकृत्।

(५३) अलौकिकस्य महस्य उत्सवस्य (आलोकः) (प्रदर्शनम्) एव अलौ-किको महान् आलोकस्तेन प्रकाशितं जगत्त्रयं येन स भवान्। मुक्तारत्नप्रभया जगत्त्रयप्रकाशासम्भवात्, नेदं राजनि मुक्तारत्नत्वारोपे निमित्ततयोपात्तम्, किन्तु तदपेक्षया उत्कर्षप्रदर्शनायैवोक्तमिति सत्कुले वेणुत्वारोप एव तन्नि-मित्तमिति।

Digitized by Google

निरवधि च निराश्रयञ्च यस्य
स्थितमनिवर्त्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्त्ति-
र्जयति चतुर्दशलोकवल्लिकन्दः(५४) ।।" [अभि०प०के०]

-इति च अमालारूपकमपि (५५) परम्परितं द्रष्टव्यम् ।।

"किसलयकरैर्लतानां, करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैः, मुखेन्दुभिर्योषितां मदनः(५६)।।"

-इत्यादिरशनारूपकं न वैचित्र्यवदिति(५७)न लक्षितम् ।।

प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।

---

(५४) निरवधि कालपरिच्छेदशून्यम् । निराश्रयञ्च सर्व्वाधःस्थितत्वाद् आश्रयशून्यञ्च । स्थितम् अवस्थानम् । अतएव अनिवर्त्तितः कौतुकस्य आश्चर्यस्य प्रपञ्चो विस्तारो यस्मात् सः । विष्णुं प्रति भक्तस्योक्तिरियमिति चन्द्रिका ।

(५५) अत्र मालारूपकमपीति पाठं मन्यमानेन, 'प्रकृतारोपं प्रति यदि बहवोऽपरारोपाः साक्षात् परम्परया वा निमित्ततया उपात्तास्तथापि मालारूपकम्'-इत्यङ्गीकुर्व्वाणेन महेश्वरेण उक्तोदाहरणद्वयमेतादृशमाला-रूपकविषयमिति प्रतिपादितम्, तच्च तत एवावगन्तव्यम् ।

(५६) योषितामित्यस्य व्यवहितस्यापि करकमलैरित्यनेनापि योग्यत्वा-दन्वयः । अत्र (रशनोपमायामिव) पूर्व्वपूर्व्वारोप्यमाणानां परत्रपरत्र आ-रोपविषयत्वात् रसनारूपकमिदम् । परिणामालङ्कारस्तु रूपक एवान्तर्भवति।

(५७) उत्कर्षाश्रयतया उपमानीकृतानां पुनरुपमेयीकरणे तदुत्कर्ष-खण्डनमिति न वैचित्र्यवदिति उद्योतकृत् ।

Digitized by Google

उपमेयमसत्यं कृत्वोपमानं सत्यतया यत्स्थाप्यते, सा त्वपह्नुतिः (५८)। उदाहरणम्,

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये!
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि॥ [वा॰अप॰]

इत्थं वा,

बत सखि! कियदेतत्पश्य वैरं स्मरस्य,
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम्॥ [प्र॰अप॰]

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीतिः। एवं वा,

अमुष्मिंल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।

---

(५८) निषिध्येति क्त्वाप्रत्ययार्थं आनन्तर्यमविवक्षितम्, तेन पूर्वं पश्चाद्वा उपमेयस्वरूपनिषेधसहितमुपमानरूपताव्यवस्थापनमपह्नुतिरिति। कृत्वा-लङ्कारत्वे सतीति विशेषणमस्त्येव, तेन प्रतिभानुत्थापिते न दोषः। अपह्नुतिश्च द्विविधा वाच्या प्रतीयमाना चेति। प्रतीयमाना तु बहुभिर्भङ्गीभिर्निबध्यते, तथाहि, क्वचित् कपटार्थकशब्दोपादानात्, क्वचित् परिणामार्थकशब्दोपादानात्, क्वचिच्च अन्यथेति स्वयमूहनीयम्। अत्र 'उपमेयमिति, इदमुपलक्षणम्, किञ्चिदपह्नुत्य कस्यचित् प्रदर्शनमपह्नुतिरित्येव लक्षणम्'-इत्युद्योतकृत्।

Digitized by Google

यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः॥ [प्र०अप०]

अत्र न रोमावलिः, धूमशिखेयमिति प्रतिपत्तिः।

एवमियं भङ्ग्यन्तरैरप्यूह्या॥

**श्लेषः स वाक्ये एकस्मिन् यत्रानेकार्थता भवेत्॥९०॥**

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः, स श्लेषः (५८)। उदाहरणम्,

उदयमयते, दिङ्मालिन्यं निराकुरुतेतराम्,
नयति निधनं निद्रामुद्रां, प्रवर्त्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनम्
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः (६०)॥

---

(५८) एकार्थप्रतिपादकानाम् 'अर्थभेदेन शब्दभेदः'-इतिनियमेन एकार्थस्यैव प्रतिपादने समर्थानाम्। यत्र यस्मिन् अलङ्कारे विद्यमाने इति शेषः। अनेकोऽर्थः, प्रकरणादेरनियमेन बुध्यते-इति शेषः। 'नन्वेकार्थप्रतिपादकानां कथमनेकोऽर्थो वाच्यः?'। तथाविधाकारैरपरैः शब्दैः सह श्लिष्टतयेति ब्रूमः। 'एवं चेत् अस्य शब्दालङ्कारत्वे किं बाधकम्?'। शब्दपरिवृत्तिसहत्वमिति ब्रूमः। परिवृत्तिसहानां श्लिष्टानां शब्दानां प्रकरणादिनियमाभावादनेकार्थप्रतिपादकत्वेऽर्थश्लेष इति फलितम्। केचित्तु एकार्थप्रतिपादकानां सामान्यैकधर्म्मवत्तया सामान्यरूपैकस्य अर्थस्य वाचकानाम्। अनेकोऽर्थः विशेषरूपो नाना अर्थः। यथोदाहरणे उदयरूपेण सामान्योदयवाचकादुदयपदादर्कोदयराजोदययोरुदयविशेषरूपयोरर्थयोः प्रतीतिरिति आहुः।

(६०) राजपक्षे दिङ्मालिन्यं दारिद्र्येण। निद्रामुद्रा निद्रा इव मुद्रा

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ ।

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः,**

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात्(६१) (न तु विशेष्यस्य सामर्थ्यादपि) यत् अप्रकृतस्यार्थस्याभिधानं, सा (समासेन सङ्क्षेपेणार्थद्वयकथनात्) समासोक्तिः ।

उदाहरणम्,

लहिऊण तुज्झ बाहुप्फंसं जीए स कोवि उल्लासो ।
जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा(६२)॥

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति ।

**निदर्शना ।**

**अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः (६३) ॥९९॥**

---

(निरुत्साहता) । स्वैराचारो यथेष्टाचारः । विभाकरस्तन्नामकभूपः । एवञ्च विभाकरशब्दस्य परिवृत्त्यसहतया अस्मिन्नंशे शब्दश्लेष एव । अन्यत्र तु सर्वत्रार्थश्लेषः ।

(६१) श्लिष्टम् प्रकृताप्रकृतार्थोभयसङ्गतम् । प्रकृतार्थस्य विशेषणमात्र-महिम्ना यदप्रकृतार्थबोधनं, सा समासोक्तिरिति । विशेष्यस्यापि उभयार्थ-सङ्गतत्वे तु श्लेष इति विशेषः ।

(६२) लब्ध्वा तव बाहुस्पर्शं, यस्याः स कोऽप्युल्लासः । जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बलानां सेति सं० ।

(६३) अभवन् अनुपपद्यमानः तात्पर्याविषय इति यावत् । वस्तुनो-र्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धोऽन्वयः । यथोदाहरणे सूर्य्यवंशवर्णने-ऽहं सागरं तितीर्षुरस्मीति सम्बन्धोऽनुपपन्नो वक्ष्यमाणामुपमां कल्पयति ।



Digitized by Google

निदर्शनं दृष्टान्तकरणम् । उदाहरणम्,

क सूर्य्यप्रभवो वंशः, क चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ [वा०नि०]

अत्र उडुपेन सागरतरणमिव मन्मत्या सूर्य्यवंशवर्णनमित्युपमायां पर्य्यवस्यति । यथा वा,

उदयति विततोर्ध्वरश्मिरज्जौ
अहिमरुचौ, हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं (६४) विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥ [प०नि०]

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्य्यवसानम् ।

'दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गम्,
आदातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव !
यस्ते गुणान् गदितुमुद्यममादधाति ॥'

-इत्यादौ मालारूपाप्येषा द्रष्टव्या ॥

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।**

---

(६४) गिरिः रैवतपर्व्वतः । अत्र समस्तैकपदबोध्येन वारणेन्द्रलीलापदार्थेन गिरिपदार्थस्यान्वयोऽनुपपन्न इति यथोक्तसादृश्यकल्पनम् ।

क्रिययैव स्वस्वरूप-स्वकारणयोः सम्बन्धो यदवगम्यते, सा अपरा निदर्शना (६५)। यथा,

उन्नतं पदमवाप्य यो लघुः, हेलयैव स पतेदिति ब्रुवन्।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः(६६)॥

अत्र पातक्रियया पतनस्य, लाघवे सति उन्नतपदप्राप्ति-रूपस्य च सम्बन्धः ख्याप्यते।

**अप्रस्तुतप्रशंसा सा, या सैव प्रस्तुताश्रया(६७)॥१२॥**

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुत-प्रशंसा।

**कार्य्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा (६८)॥१३॥**

---

(६५) क्रियारूपेण स्वेनैव कार्य्येण स्वस्य (क्रियारूपकार्य्यस्य) स्वकारणेन यत् सम्बन्धस्य (कार्य्यकारणभावरूपस्य) प्रतिपादनं, सा अपरा निदर्शनेत्यर्थः।

(६६) ब्रुवन् प्रतिपादयन्। अत्र हि पततीतिपतनक्रियारूपेण कार्य्येण स्वेनैव, पतेत्पदप्रतिपाद्यस्य स्वस्य (पतनरूपकार्य्यस्य) स्वकारणेन (लघीयस उन्नतपदप्राप्तिरूपेण) सम्बन्धः (कार्य्यकारणभावात्मकः) प्रतिपाद्यते। तथाच लाघवे सति उन्नतपदप्राप्तिः पाते हेतुः, यथा दृषत्कणस्येति दृष्टान्त पर्य्यवसानादिदमपि निदर्शनम्।

(६७) सैव अप्रस्तुतप्रशंसैव। प्रस्तुताश्रया प्राकरणिकार्थप्रतिपत्तिपरा। प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिः, इयन्तु अप्राकरणिकेन प्राकरणिकार्थाक्षेपरूपेति भेदः।

(६८) निमित्ते कारणे। कार्य्ये प्रस्तुते कारणस्य अप्रस्तुतस्य, कारणे कार्य्यस्य, सामान्ये विशेषस्य, विशेषे सामान्यस्य, एवं तुल्ये तुल्यस्येति पञ्च।

Digitized by Google

तदन्यस्य कारणादेः । क्रमेणोदाहरणम्,

याताः किं न मिलन्ति सुन्दरि ! पुनश्चिन्ता त्वया मत्कृते
नो कार्य्या, नितरां कृशासि, कथयत्येवं सवास्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां, हसितेन भाविमरणोत्साहस्तया सूचितः ।।

अत्र प्रस्थानात्किमिति निवृत्तोऽसीति कार्य्ये पृष्टे कारणमभिहितम् ।

राजन् ! राजसुता न पाठयति मां, देव्योऽपि तूष्णीं स्थिताः,
कुब्जे ! भोजय मां, कुमारसचिवैर्नाद्यापि किं भुज्यते ? ।
इत्थं नाथ ! शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ।।

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे (६९) प्रस्तुते कार्य्यमुक्तम् ।

एतत् तस्य मुखात्कियत् ! कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस स जड़ः, शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा(७०) ।।

अत्रास्थाने जड़ानां ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

---

(६९) कारणे शत्रुपलायनरूपे । कार्य्यं पथिकमुक्तशुकाभाषणरूपम् ।

(७०) मुखादिति श्रुतमिति शेषः । अत्र जड़सामान्यप्रस्तावे जड़विशेषकथनमुक्तम् ।

सुहृद्वधूवाष्पजलप्रमार्ज्जनं
करोति वैरप्रतियातनेन यः।
स एव पूज्यः, स पुमान्, स नीतिमान्,
सुजीवनं तस्य, स भाजनं श्रियः॥

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि, तत् त्वमेव श्लाघ्यः-इतिविशेषे प्रकृते सामान्यमभिहितम्।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः,-श्लेषः, समासोक्तिः, सादृश्यमात्रं वा तुल्यात् तुल्यस्य ह्याक्षेपे हेतुः (७१)। क्रमेणोदाहरणम्,

पुंस्त्वादपि प्रविचलेत् यदि, यद्यधोऽपि
यायात्, यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन (७२)॥ [स्लो०हे०]

---

(७१) अप्रकृतोक्त्या प्रकृताक्षेपस्थले उक्तयोः श्लेषसमासोक्त्यलङ्कारयोरसम्भवात् अत्र श्लेषपदम् विशेषणविशेष्यवाचिशब्दानां सर्व्वेषामेव उभयार्थबोधकत्वपरम्, समासोक्तिपदञ्च विशेषणमात्रस्य तथात्वपरमिति।

(७२) अप्रस्तुतविष्णुपक्षे पुंस्त्वं पुंचिह्नं, (नारीभूयामृतहरणात्)। अधः पातालं (पृथ्वीरक्षणाय वराहमूर्त्त्या पातालगमनात्)। प्रणयने याचने न महान् वामनः, (वलिसकाशात् प्रार्थनसमये तथाभावात्)। पुरुषोत्तमः नारायणः। राजपक्षे पुंस्त्वं पौरुषम्। अधः स्वपदभ्रंशः। अन्यत् सुगमम्। उभयपक्षे दिक् पन्थाः रीतिरिति यावत्। ननु 'प्रकरणेन राजरूपः प्रस्तुतोऽर्थएव प्रथममुपस्थीयते, इति कथमत्र अप्रस्तुतप्रशंसा, अप्रस्तुता-

Digitized by Google

येनास्यभ्युदितेन चन्द्र! गमितः क्लान्तिं, रवौ तत्र ते
युज्येत प्रतिकर्त्तुमेव, न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि, ततः किं लज्जसे नो मनाक्?
अस्त्वेवं जड़धामता तु भवतो यद्व्योम्नि विस्फूर्ज्जसे(७३)।। [स॰के॰]

आदाय वारि परितः सरितां मुखेभ्यः,
किं तावदर्ज्जितमनेन दुरर्णवेन ।
क्षारीकृतं च, वड़वादहने हुतञ्च
पातालकुक्षिकुहरे विनिवेशितञ्च ।। [सा॰द॰]

इयञ्च काचित् वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति(७४)।

---

र्थस्य प्रथमत उपस्थित्यामेव तत्सम्भवात्' । उच्यते, पुरुषोत्तमादिशब्दानां सत्पुरुषादिरूपप्रकृतार्थे यौगिकी (प्रकृतिप्रत्ययलभ्या) शक्तिरिति प्रकरणादिसहितामपि तां बाधित्वा अभिधाशक्तिर्नारायणादिरूपमप्रस्तुतमर्थं प्रथममेवोपस्थापयति, ततश्च प्रकृतार्थबोध इति । यत्र हि उभयस्मिन्नपि अर्थे अभिधावृत्तेः सम्भवस्तत्रैव प्रकरणादिकं नियामकम्, यत्र पुनरेकस्मिन् अभिधा, अपरस्मिन् यौगिकी शक्तिः, तत्र अभिधैव बलवती अपरां प्रकरणादिसहितामपि बाधते, अत्र च मूलं "अवयवशक्तेः समुदायशक्तिर्बलीयसी" इति नियमः । अतएव नात्र श्लेषोऽपि उभयार्थस्यानभिधेयत्वात्, प्रकरणाद्यनियमाभावाच्चेति ।

(७३) पादो रश्मिः चरणश्च (सूर्यकिरणपातेनैव चन्द्रस्य तेजस्वित्वमिति) जड़धामता हिमाश्रयता, मूर्खत्वाश्रयता च (जड़पदस्य भावप्राधान्येन निर्देशात्) इति चन्द्रिका ।

(७४) वाच्यस्य अप्राकरणिकार्थस्य सम्भवित्वे न तत्र प्रतीयमानस्य प्राकर-

Digitized by Google

यथा,

अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते।
आहो! रिक्तः कथमपि भवेदेष दैवात्, तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः (७५)॥

काचिदध्यारोपेणैव। यथा,

कस्त्वं भोः? कथयामि,-दैवहतकं मां विद्धि शाकोटकम्,
वैराग्यादिव वक्षि? साधु विदितं, कस्मादिदं? कथ्यते,-
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते,
न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे(७६)॥

क्वचित्त्वंशेऽध्यारोपेण। यथा,

सोऽपूर्व्वो रसनाविपर्य्ययविधिस्तत्कर्णयोश्चापलम्,
दृष्टिः सा मदविस्मृतस्वपरदिक्, किं भूयसोक्तेन वा।

---

खिकार्थस्य आरोपः, तस्य असम्भवित्वे तु तदारोप आवश्यक एव, अन्यथा अयोग्यत्वबुद्ध्या अर्थबोध एव न स्यात् एतच्च उदाहरणेन स्फुटीभविष्यति।

(७५) अम्भसा स्थगितो भुवनस्य आभोगः (विस्तारः) पातालस्य कुक्षिः (मध्यम्) च येन, तस्य। अवटः खातः कुहरं गभीरभागः। अत्र उपमर्द्दनशीलस्य दुःप्रभोः पूर्णतैव वरम्, न निःस्वता, अत्यन्तोपमर्द्दनापत्ते-रिति प्रस्तुतम् प्रतीयमानम्। अत्र वाच्यार्थस्य स्वतएव सम्भवितया न तत्र प्रतीयमानार्थाध्यारोपः।

(७६) अत्र अधमजातिर्दरिद्रः कश्चित् पुरुषः प्रस्तुतः प्रतीयते। अचे-तनेन वाच्यार्थेन शाकोटकेन सह उक्तिप्रत्युक्त्यसम्भवात् वाच्यार्थे शाकोटका-दिरूपे प्रतीयमानार्थस्य अधमजातिदरिद्रप्रभृतेः आरोपः आवश्यकः।

Digitized by Google

सर्वं विस्मृतवानसि भ्रमर हे! यद्वारणोऽद्याप्यसौ
अन्तःशून्यकरो निषेव्यत इति भ्रातः! क एष ग्रहः! (७७)॥

अत्र रसनाविपर्य्यासः शून्यकरत्वञ्च भ्रमरस्यासेवने न हेतुः, कर्णचापलन्तु हेतुः, मदः प्रत्युत सेवने निमित्तम्(७८)॥

**निगीर्य्याध्यवसानन्तु प्रकृतस्य परेण यत्।**
**प्रस्तुतस्य यदन्यत्वं, यद्यर्थोक्तौ च कल्पनम्॥१३॥**
**कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्य्ययः।**
**विज्ञेयातिशयोक्तिः सा,**

उपमानेनान्तर्निगीर्णस्य (७९) उपमेयस्य यदध्यवसानं सैका।

---

(७७) रसनाविपर्य्यासः जिह्वापरिवृत्तिः, (अग्निशापात् करीणाम् उपकण्ठं रसनायम् इति स्मृतेः), पूर्व्वविपरीताभिधानञ्च। चापलं चपलता, परवचनविश्वासित्वञ्च। स्वपरदिक् निजपरमार्गः, आत्मीयानात्मीयविभागश्च। शून्यकरः सच्छिद्रशुण्डादण्डः, धनशून्यहस्तश्च। ग्रहः आग्रहः।

(७८) तथाच कर्णचापलांशेन प्रतीयमानार्थस्य अध्यारोपः आवश्यकः, तदन्यत्र तु रसनाविपर्य्ययादिरूपांशत्रये आरोपः आवश्यक इति शेषः।

(७९) अन्तर्निगीर्णस्य अन्तर्गिलितस्येव स्वस्वरूपेणानुपस्थितस्य (शब्दानुपात्तस्य)। अध्यवसानम् (स्वस्वरूपेणानुपस्थिततया) सर्व्वथैवाभेदप्रतीतिरूप उत्कटारोपः। अयञ्च प्रभेदः साध्यवसानलक्षणासम्भवस्थल एव सम्भवतीत्युक्तम् प्राक्। दर्पणाकृतस्तु अन्तर्निगीर्णपदस्य अप्रधानीकृतस्येत्यर्थं मन्यमाना मुखं द्वितीयश्चन्द्र इत्यादौ विषयस्य मुखस्योपादानेऽपि एनमतिशयोक्तेः प्रभेदमाहुः।

यथा,

कमलमनम्भसि, कमले च कुवलये, तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥

अत्र मुखादि कमलादिरूपतया अध्यवसितम्।

यच्च तदेवान्यत्वेनाध्यवसीयते, सा अपरा। यथा,

अस्सं लउहत्तणअं असम्ब अ काइ वत्तणच्छाआ।
सामा सामसपआवइणो रेहब्बि अ ण होइ(८०)॥

'यद्यर्थस्य' यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम् (अर्थात् असम्भाविनोऽर्थस्य), सा तृतीया। यथा,

राकायामकलङ्कश्चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥

कारणस्य शीघ्रकारितां वक्तुं कार्य्यस्य पूर्व्वमुक्तौ (८१) चतुर्थी। यथा,

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापवाणेन।
चरमं रमणीवल्लभ! लोचनविषयं त्वया भजता॥

---

(८०) अन्यत् सौकुमार्य्यम् अन्या च कापि वर्त्तनच्छाया। श्यामा सामान्यप्रजापतेः रेखैव च न भवतीति सं०। लउहत्तणअ-शब्दः सौकुमार्य्ये देशी। वर्त्तनं शरीरम्। 'शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला। सर्व्वावयवशोभाढ्या सा श्यामा परिकीर्त्तिता'। रेखा निर्म्माणपरिपाटीलेशसम्बद्धा।

(८१) पूर्व्वं कार्य्योत्पत्त्युपयुक्तकालात् पूर्व्वम्, तच्च कार्य्यस्य कारणसहभावेन वर्णनेऽपि भवति। यथा सममेव समाक्रान्तं द्वयं द्विरदगामिना। तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षितामित्यत्रेति दर्पणः।



Digitized by Google

**प्रतिवस्तूपमा तु सा ॥१५॥**

**सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।**

साधारणो धर्म्म उपमेयवाक्ये, उपमानवाक्ये च (कथितपदस्य दुष्टतयाऽभिहितत्वात्(८२)) शब्दभेदेन यत् उपादीयते, सा (वस्तुनो वाक्यार्थस्योपमानत्वात्) प्रतिवस्तूपमा । यथा,

देवीभावङ्गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥

'यदि दहत्यनलोऽत्र किमद्भुतम्, यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता ॥'

-इत्यादि मालाप्रतिवस्तूपमा द्रष्टव्या । एवन्यत्रापि (८३) अनुसर्त्तव्यम् ।

---

(८२) तथाच शब्दभेदेनेति विशेषणमनुक्तमपि अर्थवशलभ्यम् बोध्यम् । "अत्र (कारिकायाम्) द्विरिति द्वये इति च पदे अनेकोपलक्षके मालानुबोधात्"-इति प्रदीपः । तेन वाक्यार्थयोर्वाक्यार्थानां वा उपमासम्पादकस्य एकस्यापि धर्म्मस्य विभिन्नशब्दोपात्तत्वं प्रतिवस्तूपमा इति फलितम् । उपमायान्तु पदार्थयोः साम्यं, अत्र तु वाक्यार्थयोरिति ततो भेदः । साम्यप्रतिपादकानामिवादीनाम् पदत्वेन तैः पदार्थयोरेव साम्यं बोध्यते, पदार्थः पदार्थेन अन्वेतीति नियमात्, वाक्यार्थयोः साम्यं गम्यमेव नियतमिति अत्र दर्पणकृतो वाच्यसाम्यव्यावर्त्तकं गम्यसाम्येतिविशेषणदानं किमर्थमिति न जानीमहे ।

(८३) अन्यत्रापि वैधर्म्यस्थलेऽपि । यथा, चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि । विनावन्तीर्न निपुणाः सुदृशो रतकर्म्मणि इति, दर्पणेऽप्येवम् ।

Digitized by Google

**दृष्टान्तः पुनरेतेषां सर्व्वेषां प्रतिबिम्बनम् (८४) ॥१६॥**

एतेषां साधारणधर्म्मादीनां (८५), दृष्टोऽन्तः (निश्चयो) यत्र स दृष्टान्तः ।

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥

एष साधर्म्येण । वैधर्म्येण तु

तवाहवे साहसकर्म्मशर्म्मणः
करं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुः
दधत्यवाते स्थिरतां हि पांशवः (८६) ॥

**सकृद्वृत्तिस्तु धर्म्मस्य प्रकृताप्रकृतात्मनाम् ।**

---

(८४) अत्र वाक्यद्वये इति पूर्व्वस्मादनुवर्त्तते । प्रतिबिम्बनं बिम्बप्रतिबिम्बभावः, उपमानोपमेयभाव इति यावत् । प्रतिवाक्यं विभिन्नस्यापि धर्म्मस्य तुल्यरूपतया वाक्यार्थयोरुपमासम्पादकत्वे दृष्टान्त इति फलितम् । प्रतिवस्तूपमायां धर्मस्य ऐक्यमिति तस्या भेदः ।

(८५) आदिना उपमानोपमेयपरिग्रहः । निश्चयः प्रस्तुतस्य निःसन्देहा (निश्चितप्रामाण्या) प्रतीतिः, सोदाहरणवाक्येन प्रतिपाद्यमानो ह्यर्थः श्रोत्राकाङ्क्षानिवृत्त्या असंशयमेव प्रतीयते । तदियं संज्ञा योगरूढिः ।

(८६) विशरारुतां विशीर्णताम् । वाते तु स्थिरतां न दधतीतिव्यतिरेकेन साधर्म्ये पर्य्यवसानात् दृष्टान्ततोपपत्तिरिति चन्द्रिका ।

Digitized by Google

**सैव(८७)क्रियासु बह्वीषु कारकस्येति दीपकम् ॥१७॥**

**प्राकरणिकाप्राकरणिकानाम् (अर्थात्(८८) ) उपमानो-**पमेयानां, धर्म्मः क्रियादिः, एकवारमेव यदुपादीयते, तत् (एकस्यैव समस्तवाक्यदीपनात्) दीपकम् । यथा,

किवणाणं धणं णाआणं फणमणी केसराइं सीहाणम् ।
कुलबालिआणं अ त्थणा कुतो छिप्पन्ति असुआणं(८९) ॥

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् । यथा,

खिद्यति कूणति वेल्लति विवलति
निमिषति विलोकयति तिर्य्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति
नवपरिणया वधूः शयने (९०) ॥

---

(८७) सैव सकृद्वृत्तिरेव । तथाच दीपकं द्विविधं, एकस्य धर्मस्य एकवारं प्रस्तुताप्रस्तुतोभयवृत्तित्वे एकम्, अपरञ्च एकस्य कारकस्य एकवारमेवानेकासु क्रियासु सम्बन्धे इति । अत्र प्रथमप्रभेदस्थले उपमाप्रतीतिं विनापि वाक्यार्थस्य पर्य्यवसानात् नोपमा प्रथमं प्रतीयते इति नात्रोपमा । एकस्यापि धर्मस्य द्विरवृत्तेः वाक्यद्वयस्याभावेनच न प्रतिवस्तूपमादृष्टान्तौ ।

(८८) यस्य धर्मस्य प्राकरणिकाप्राकरणिकोभयवृत्तित्वम्, तमेव साधारणधर्ममाश्रित्य तयोरुपमानोपमेयभावः प्राप्नोतीत्यर्थादित्युक्तम् ।

(८९) कृपणानां धनं नागानां फणमणिः केशराणि सिंहानाम् । कुलपालिकानाञ्च स्तनाः कुतः स्पृश्यन्तेऽमृतानामिति सं० ।

(९०) कूणति सङ्कुचति । वेल्लति परिवृत्य शेते । विवलति विशेषतः स्वपलायते ।

Digitized by Google

**मालादीपकमाद्यञ्चेद्यथोत्तरगुणावहम्।**

पूर्व्वेणपूर्व्वेण (९१) वस्तुना उत्तरमुत्तरं चेदुपक्रियते, तत् मालादीपकम्। यथा,

सङ्ग्रामाङ्गनमागतेन भवता चापे समारोपिते,
देवाकर्णय येन येन सहसा यत् यत् समासादितम्।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलम्,
तेन त्वं, भवता च कीर्त्तिरतुला, कीर्त्त्या च लोकत्रयम्॥

**नियतानां सकृद्धर्म्मः(९२), सा पुनस्तुल्ययोगिता॥१८॥**

नियतानां प्राकरणिकानामेव, अप्राकरणिकानामेव वा। क्रमेणोदाहरणम्,

पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसञ्च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥ [प्रा०]
कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य॥ [अप्रा०]

---

(९१) कारिकायां यथोत्तरमिति वीप्सान्तेराद्यमित्यत्रापि वीप्सेति प्रतिपादयति पूर्व्वेणपूर्व्वेणेति। उपक्रियते तत्सम्बद्धक्रियाद्युत्पादनादिना सोपकारीक्रियते। यथोदाहरणे पूर्व्वोक्तेन कोदण्डेन शरसम्बद्धां समासादन-क्रियां सम्पादयता परोक्ताः शरा उपक्रियन्ते, तैश्चारिशिरः एवं परत्रापि। 'तत्' तदा। मालादीपकमिदन्तु न मालोपमादीनामिवेति पृथगुक्तम्।

(९२) यदुपादीयते इति शेषः। सा धर्मस्य सकृदुपादानरूपा। प्रकृताप्रकृतयोरुभयोरेव एकदा सकृद्धर्मसम्बन्धे दीपकम्, तयोरेकस्य (प्रकृतस्यैव अप्रकृतस्यैव वा) तथात्वे तुल्ययोगितेत्यनयोर्भेदः।

Digitized by Google

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः (९३) ।

अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् ।

'क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते सत्यम् ।
विरम प्रसीद सुन्दरि ! यौवनमनिवर्त्ति यातन्तु ॥'

-इत्यादावुपमानस्योपमेयादाधिक्यमिति(९४)यत्केनचिदुक्तम्, तदयुक्तम्, अत्र यौवनगतास्थैर्य्याधिक्यं हि विवक्षितम्(९५) ।

---

(९३) यदित्यव्ययं व्यतिरेकपदान्वयि । व्यतिरेक उत्कर्षः । स एव व्यतिरेक एव । स व्यतिरेकनामालङ्कारः ।

(९४) आधिक्यमुत्कर्षः, अत्र हि उपमानस्य शशिनः क्षयेऽपि पुनर्वृद्धिरित्युत्कर्षः, उपमेयं यौवनन्तु न पुनरावर्त्तते इत्यपकृष्टम् । केनचित्, 'उपमानात् उपमेयस्य आधिक्ये विपर्य्यये वा व्यतिरेकः' इत्यङ्गीकुर्व्वता अलङ्कारसर्व्वस्वकारेण । एतन्मते उपमानात् उपमेयस्य न्यूनतायामपि व्यतिरेकः ।

(९५) अयमभिसन्धिः, उत्कर्षापकर्षौ हि प्रकरणानुसारिणौ न त्वनुगतौ, तथाहि यदेव क्वचिदपकर्षकं तदेवान्यत्र उत्कर्षकमपि भवति, यथा ज्ञानिविवेचने वर्णज्ञानरहितत्वमपकर्षकं भवदपि मूर्खनिरूपणे तदेवोत्कर्षकं भवति । ततश्च प्रकृते मानापनोदनानुकूलतया यौवनास्थैर्य्यस्यैव उत्कर्षो वक्तव्यः, अस्थैर्य्यस्योत्कर्षस्तु पुनरावृत्तिराहित्यमेव, अपकर्षश्च तत्साहित्यमिति, यौवनास्थैर्य्यमपुनरावृत्तमित्युत्कृष्टम् । एवं 'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः' इत्यपि नोपमेयस्य न्यूनतोदाहरणम्, अत्र हि आत्मावमाननस्यैव प्रकृततया आत्मनो दूतापसदत्वमेव विवक्षितम्, तदुत्कर्षकञ्च आत्मनः शत्रूपहसनीयत्वमिति । वस्तुतः उपमानात् उपमेयस्य न्यूनत्वं घण्टापथवत् सार्व्वजनीनमेवेति न तत्कृतम् चमत्कारान्तरमिति तत्सद्भावे उपमादिरेव ।

Digitized by Google

हेत्वोरुक्तावनुक्तीनां त्रये, साम्ये निवेदिते ॥१९॥
शब्दार्थाभ्यामथाक्षिप्ते, श्लिष्टे तद्वत्त्रिरष्ट तत् ।

व्यतिरेकस्य हेतुः उपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणं, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् (८६), एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते; आर्थेन च क्रमेणोक्ताश्चत्वार एव भेदाः; आक्षिप्ते चौपम्ये तावन्त एव; एवं द्वादश । एते श्लेषेऽपि भवन्तीति चतुर्विंशतिर्भेदाः । क्रमेणोदाहरणम्,

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥ [अश्ले०शा०]

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्य्यायेण युगपद्वाऽनुपादानेऽन्यत् भेदत्रयम्; एवमन्येष्वपि द्रष्टव्यम् । अत्रेवशब्दस्य सद्भावाच्छाब्दमौपम्यम् ।

असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥ [अश्ले०आ०]

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् ।

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ [अश्ले०आक्षि०]

अत्रेवादितुल्यादिपदविरहेन आक्षिप्तैवोपमा ।

---

(८६) एकतरस्य उत्कर्षनिमित्तमात्रस्य, अपकर्षनिमित्तमात्रस्य वा, एतयोर्द्वयोर्वानुक्तिरित्यनुक्तित्रयम् । शब्देन इवादिना । आर्थेन क्रमेण तुल्या-

Digitized by Google

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः।
अतिगाढ़गुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥ [श्ले०शा०]

अत्रेवार्थे वतिः, गुणशब्दः श्लिष्टः, शाब्दमौपम्यम्।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः।
न निशाकरवज्जातु कलावैकल्यमागतः॥ [श्ले०आ०]

अत्र तुल्यार्थे वतिः, कलाशब्दः श्लिष्टः। मालाप्रतिवस्तूपमावन्मालाव्यतिरेकोऽपि सम्भवति, तस्यापि भेदा एवमूह्याः(९७) दिङ्मात्रञ्चोदाह्रियते, यथा,

हरवन्न विषमदृष्टिर्हरिवन्न विभो! विधूतविततवृषः।
रविवन्न चातिदुःसह-करतापितभूः कदाचिदसि॥

अत्र तुल्यार्थे वतिः, विषमादयश्च शब्दाः श्लिष्टाः(९८)।[श्ले०आ०मा०]

नित्योदितप्रतापेन त्रियामामीलितप्रभः।
भास्वतानेन भूपेन भास्वानेष विनिर्ज्जितः॥ [श्ले०आचि०]

---

दिपदेन। चत्वार इति पूर्व्ववत् हेतोरुक्तानुक्तित्वयक्तता इति शेषः। तावन्तश्चत्वारः। एते द्वादश। श्लेषेऽपीत्यपिना अश्लेषसमुच्चयः।

(९७) इयञ्च पाठप्रणाली विस्तारिकाप्रदीपकृन्महेश्वरादिबहुवादिसम्मततया अङ्गीकृता। निदर्शनकृतस्तु क्रमप्राप्ततया श्लेषे आक्षिप्तौपम्यप्रदर्शनमेव प्रथममुचितमिति मन्यमानाः, 'मालाप्रतिवस्तूपमावत्' इत्यादिं 'विषमादयश्च शब्दाः श्लिष्टाः' इत्यन्तं सन्दर्भं, 'श्लिष्टविशेषणाक्षिप्तैवोपमा प्रतीयते' इत्यनन्तरं साधु पठन्ति। अन्यश्चात्रान्यविधं पाठमङ्गीचकार।

(९८) एकत्र विषम-वृष-करशब्दाः यथाक्रमम् अयुग्मवृषनामासुरकिरणार्थकाः, अपरत्र असम-धर्म-राजयोग्यांशपराः।

Digitized by Google

अत्र त्वाक्षिप्तैवोपमा, भास्वतेति श्लिष्टः । यथा वा,

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाननमङ्गनानाम्(९९) ।। [श्लि०आक्षि०]

अत्रेवादीनां तुल्यादीनाञ्च पदानामभावेऽपि श्लिष्टविशेषणाक्षिप्तैवोपमा प्रतीयते । एवञ्जातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथक्(१००) उपादानेऽन्येऽपि भेदाः सम्भवन्ति, तेऽपि अनयैव दिशा द्रष्टव्याः ।।

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया(१०१)॥२०॥**
**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।**

विवक्षितस्य प्राकरणिकत्वादनुपसर्ज्जनीकार्य्यस्य (१०२),

(९९) मधुपाने वितृष्णा आसन्, नत्वङ्गनाननपाने इति भावः । अत्र उत्कर्षापकर्षहेतू उपभोगेऽपि वैरस्यानावहत्वावहत्वे इति महेश्वरः ।

(१००) पृथक् स्वातन्त्र्येण उपमानविशेषणतया उपमेयविशेषणतया च ।

(१०१) अवश्यवक्तव्यस्यार्थस्य विधितात्पर्य्यकं विशेषप्रतिपत्तये निषेधाभिधानम् आक्षेपः । 'केचित्तु, वक्तुमित्युपलक्षणं करिष्यमाणस्यापि निषेध आक्षेपः, तां सुन्दरीं वर्णयितुं न मे वाणी प्रवर्त्तते इत्यत्र करिष्यमाणवर्णनप्रवृत्तेर्निषेधो वर्णनीयस्यानिर्वाच्यतां व्यनक्तीति आहुः' इति उद्योतकृत् । अनिष्टस्यार्थस्य निषेधतात्पर्य्यकं विशेषप्रतिपत्तये विधानमपर आक्षेपः, यथा गच्छ गच्छसि चेत् कान्त इत्यादीति दर्पणः ।

(१०२) अनुपसर्ज्जनीकार्य्यस्य अनुपेक्षणीयस्य । अतिप्रसिद्धत्वमिति इदमुपलक्षणं, दर्पणादृष्टस्य अन्यस्यापि विशेषस्य सम्भवात् ।

अशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो (निषेध इव) यः, स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेपः । क्रमेणोदाहरणम्,

ए ! एहि किं वि कीए वि कए
णिक्किव ! भणामि अलमह वा ।
अविआरिअकज्जारम्भ-
आरिणी मरउ ण भणिस्सं(१०३) ।। [व०अश०]

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त ! किमनेनोक्तेन न ब्रूमहे ।।[उ०अति०]

क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना(१०४)।।२१।।

हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना ।

---

(१०३) ए ! एहि किमपि कस्या अपि कृते निष्कृप ! भणामि अलमथवा । अविचारितकार्य्यारम्भकारिणी म्रियतां न भणिष्यामीति सं० ।

(१०४) क्रियतेऽनयेति क्रियाशब्दः प्रसिद्धहेतुपरः । विभावयति कारणान्तरं कल्पयतीति विभावनाशब्दोऽपि अन्वर्थः, प्रसिद्धकारणाभावेऽपि कार्य्योत्पत्तिर्हि स्वस्य कारणान्तरं कल्पयति। विरोधाभासे उभयमेव परस्परं बाध्यतया प्रतीयते, इह तु कारणाभावेन कार्य्यमेव बाध्यतया प्रतीयते, नतु कार्य्येण कारणाभावोऽपि बाध्यतया प्रतीयते इति भेदः। इत्यमेव उद्योतः ।

यथा,

कुसुमितलताभिरहता-प्यधत्त रुजमलिकुलैरदष्टापि।
परिवर्त्तेस्म नलिनी-लहरीभिरलोलिताप्यघूर्णत सा॥

विशेषोक्तिरखण्डेषु कारणेषु फलावचः।

मिलितेष्वपि कारणेषु(१०५)कार्य्यस्याकथनं विशेषोक्तिः, अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च(१०६)। क्रमेणोदाहरणम्,

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा॥ [अनु॰नि॰]

कर्पूरइव दग्धोपि शक्तिमान् यो जनेजने।
नमोऽस्त्ववार्य्यवीर्य्याय तस्मै मकरकेतवे॥ [उ॰नि॰]

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न बलं हृतम्॥ [अचि॰नि॰]

---

(१०५) कारणेषु प्रसिद्धहेतुषु। अत्र बहुत्वमविवक्षितम्। अकथनम् अभावप्रतिपादनम्, तच्च क्वचित् नञादिना साक्षात्, क्वचिच्च कार्य्यविरोधिन उक्त्या परम्परया, यथा द्वितीयोदाहरणे शक्तिध्वंसरूपकार्य्यविरोधिनी शक्तिरभिहिता। साक्षादुक्तौ स्फुटत्वम्, परम्परयोक्तौ अस्फुटत्वमिति विशेषः यथा यः कौमारहर इत्यादि। विरोधाभासादस्य विभावनावत् भेदः।

(१०६) प्रकरणादिना ज्ञातस्य निमित्तस्यावचने अनुक्तनिमित्तता, दुरधिगमस्य अवचने, अचिन्त्यनिमित्तता, अन्त्योदाहरणे तनुं हरता हरेण कथं बलं न हृतमित्यत्र हेतुर्विमृश्य वक्तुं न शक्यते इति उद्योतप्रदीपौ।

यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः(१०७)॥२२॥

यथा,

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव ! द्विषाञ्च विदुषाञ्च मृगीदृशाञ्च ।
तापञ्च सम्मदभरञ्च रतिञ्च पुष्णन्
शौर्य्योष्मणा च विनयेन च लीलया च ॥

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥२३॥

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत्समर्थ्यते(१०८), विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः। क्रमेणोदाहरणम्,

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम्॥ [सा०सा०वि०]

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्त्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः॥ [सा०वि०सा०]

---

(१०७) येन क्रमेण ये प्रथममुद्दिष्टास्तेनैव क्रमेण पश्चादपि तेषामपरपदार्थसम्बन्धो यथासङ्ख्यालङ्कारः ।

(१०८) समर्थ्यते सोपपत्तीक्रियते। अनुपपद्यमानतया सम्भाव्यमानयोः सामान्यविशेषयोरुपपादनार्थं तयोरन्यतररूपोदाहरणोपन्यासोऽर्थान्तर-

Digitized by Google

गुणानामेव दौरात्म्यात् धुरि धुर्य्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः (१०९)।। [वै॰सा॰वि॰]

अहो हि मे बह्वपराद्धमायुषा,
यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः पराभवं
जगत्यदृष्ट्वैव हि ये क्षयं गताः ।। [वै॰ वि॰सा॰]

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

वस्तुवृत्तेन(११०) अविरोधेऽपि विरुद्धयोरिव यदभिधानं, स विरोधः ।

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ।।२४।।**
**क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश(१११)।**

---

न्यासः । कार्य्यकारणयोः परस्परं दृष्टान्तदार्ष्टान्तिकभावविरहात् नैव तयोः समर्थ्यसमर्थकभावः सम्भवतीति न तत्तत्प्रभेदोऽङ्गीकृतः ।

(१०९) गलिः कुत्सित इति चन्द्रिका । समर्थोऽप्यधुर्य्यो दुष्ट इति महेश्वरः ।

(११०) वस्तुवृत्तेन वस्तुगत्या । अन्यत्र तात्पर्य्यबोधानन्तरं विरोधनिवृत्तावपि आपाततः विरोधप्रतीतिर्विरोधनामा अलङ्कारः, अयमेव विरोधाभास इत्युच्यते ।

(१११) जात्याद्यैः जातिगुणक्रियाद्रव्यैः । त्रिभिः गुणक्रियाद्रव्यैः। गुणेन जातेर्विरोध एव जात्या गुणविरोध इति न पृथगुक्तः । परत्राप्येवम्। जात्यादयो द्वितीयोल्लासे दर्शिताः । विरोधश्च भिन्नदेशतया प्रसिद्धयोरेकदेशसम्बन्धादिरूपः, यथोदाहरणे नलिनीत्वादिजात्या दवदहनत्वजातेर्विरोधः ।

अभिनवनलिनीकिसलय-
मृणालवलयादि दवदहनराशिः(११२) ।
सुभग ! कुरङ्गदृशोऽस्याः
विधिवशतस्त्वद्वियोगपविपाते ।। [जा०जा०]

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वम्भराप्यतिलघुर्नरनाथ! तवान्तिके नियतम् ।। [जा०गु०]

येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधरः
तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च(११३) ।
तेषां सङ्गररङ्गसक्तमनसां राज्ञां त्वया भूपते !
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ।। [जा०क्रि०]

सृजति च जगदिदमवति च
संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो
जनार्दनः सोऽपि चित्रमिदम्(११४) ।। [जा०द्र०]

---

(११२) अत्र नलिन्यादिषु दवदहनारोपसत्त्वेऽपि न रूपकम्, यो हि यत्र चमत्कारी स एव तत्रालङ्कारः, यथा, मुखचन्द्र इत्यादौ चन्द्रगतगुणगणानां मुखे प्रतिपत्तिरभिप्रेतेति तत्रोपयोगी आरोप एव चमत्कारीति स एव तत्र रूपकनामा अलङ्कारः, सन्नपि च मुखत्वचन्द्रत्वयोर्विरोधोऽचमत्कारितया नालङ्कारः, तथा इहापि विरहावस्थायामत्यद्भुतार्थस्य प्रतिपिपादयिषितस्य अनुगुणो विरोध एव चमत्कारीति स एवालङ्कारः, इति उद्योतकृदाशयः।

(११३) 'अत्र धाराधरत्व-(खड्गत्व)-जातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः, लौहित्यचैक्कण्यार्थकत्वादविरोधः' इति प्रदीपः ।

(११४) अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः।

सततं मुसलासक्ता
बहुतरगृहकर्म्मघटनया नृपते ! ।
द्विजपत्नीनां कठिनाः
सति भवति कराः सरोजसुकुमाराः ।। [गु०गु०]

पेशलमपि खलवचनं दहतितरां मानसं सुतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ।। [गु०क्रि०]

क्रौञ्चाद्रिरुद्दामदृषद्दृढ़ोऽयं
यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः,
स भार्गवः सत्यमपूर्वसर्गः (११५) ।। [गु०द्र०]

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जड़यति च तापञ्च कुरुते ।। [क्रि०क्रि०]

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः (११६) ।। क्रि०द्र०]

---

(११५) अभिजातः कोमलः । कोमलत्वेन गुणेन क्रौञ्चाद्रिद्रव्यस्य ।

(११६) मुनिरगस्त्यः । पानक्रियायाः अगस्त्येन कर्त्रा, समुद्रेण कर्मणा च द्रव्येण विरोधः ।

समद-मतङ्ग-मदजल-
निस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक ! त्वयि तटजुषि
शङ्करचूडामणापि कालिन्दी ।। [द्रु०द्रु०]

स्वभावोक्तिस्तु डिम्भादेः(११७)
स्वक्रियारूपवर्णनम् ॥ २५ ॥

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानञ्च । उदाहरणम्,

पश्चादङ्घ्री प्रसार्य्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैः,
आसज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ।।[क्रि०]

व्याजस्तुतिर्मुखे निन्दा
स्तुतिर्वा रूढिरन्यथा(११८) ।

---

(११७) डिम्भादेरित्यादिना विवेकशक्तिरहितानां तिर्य्यगादीनां ग्रहण-मिति महेश्वरोद्योतौ । वस्तुतः उपलक्षणञ्चैतत्, एवं क्रियारूपेत्यपि उपलक्षणम्, तेन यस्य कस्यचित् वस्तुनोऽसाधारणधर्म्मोक्तिरेव स्वभावोक्तिरिति ।

(११८) मुखे आपाततः । रूढिः पर्य्यवसानम् । अन्यथा (यथाक्रमं) स्तुत्या निन्दया वा । स्तुतिपर्य्यवसायिनी निन्दा, निन्दापर्य्यवसायिनी वा स्तुतिर्व्याजोक्तिरिति फलितम् । व्याजस्तुतिपदलभ्यं एतदर्थद्वयं द्वयो स्पष्टम् ।

Digitized by Google

व्याजरूपा व्याजेन वा स्तुतिः । क्रमेणोदाहरणम्,

हित्वा त्वामुपरोधबन्ध्यमनसां मन्ये न मौलिः परः,
लज्जावर्जनमन्तरेण न रमामन्यत्र सन्दृश्यते ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः,
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ।। [स्तु०]

हे हेलाजितबोधिसत्व ! वचसां किं विस्तरैस्तोयधे !
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकार-घटना-वैमुख्य-लब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ।। [नि०]

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥२६॥**

एकार्थाभिधायकमपि सहार्थबलात् यद् उभयस्यावगमकं सा सहोक्तिः । यथा,

सह दिअसणिसाहिं दीहरा सासदण्डा,
सह मणिवलएहिं वाप्पधारा गलन्ति ।
तुह सुहअ ! विओए तीअ उव्वेअणीए
सह अ तणुलदाए दुब्बला जीविदासा (११८) ।।

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम्, दिवसनिशादिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते ।

---

(११८) सह दिवसनिशाभिर्दीर्घा श्वासदण्डाः, सह मणिवलयैर्वाष्पधारा गलन्ति । तव सुभग ! वियोगे तस्या उद्वेगिन्याः सह च तनुलतया दुर्बला जीविताशा इति सं० ।

**विनोक्तिः सा विनान्येन, यत्रान्यः सन्न, नेतरः(१२०)।**

क्वचिदशोभनः, क्वचिच्छोभनः । क्रमेणोदाहरणम्,

अरुचिर्निशया विना शशी ,
शशिना सापि विना महत्तमः ।
उभयेन विना मनोभव-
स्फुरितं नैव चकास्ति कामिनोः ।। [ अशो० ]

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः।।[शो०]

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः।।२७।।**

परिवृत्तिरलङ्कारः(१२१) । उदाहरणम्,

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लताश्वध्यन्यानामहह ! दृशमादाय सहसा
ददात्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ।।

अत्र, प्रथमेऽर्द्धे समेन समस्य; द्वितीये उत्तमेन न्यूनस्य ।

---

(१२०) सन् शोभनः, इतरः अशोभनः। शोभन इति वक्तव्ये अशोभनो न इत्यभावमुखेनाभिधानस्यायमभिप्रायः, यत् वर्णनीयवस्तुनोऽशोभनत्वं प्रतीयते, तत् परसन्निधिदोषविजृम्भितमेव, वर्णनीयस्य वस्तुनः पुनः स्वाभाविकमेव शोभनत्वमिति दर्पणाभिप्रायः ।

(१२१) कारिकायाम्, विनिमयः केनचित् वस्तुना दत्तेन कस्यचित् वस्तुन आदानम् । समत्वासमत्वे उपादेयत्वानुपादेयत्वाभ्यां बोध्ये । समासमयोरन्यतरस्य दानपूर्व्वकमन्यतरस्यादानं कविकल्पितम् परिवृत्तिरलङ्कारः ।

नानाविधप्रहरणैर्नृप! सम्प्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयं
निर्व्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥

अत्र न्यूनेनोत्तमस्य ॥

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।**
**तद्भाविकम्,**

भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायो-(१२२)-ऽस्तीति भाविकम् । उदाहरणम्,

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥

अत्राद्ये भूतस्य, द्वितये भाविनो दर्शनम् ।

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता(१२३) ॥२८॥**

वाक्यार्थता यथा,

वपुःप्रादुर्भावादनुमितमिदं, जन्मनि पुरा
पुरारे! न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।

---

(१२२) अभिप्रायः भूतभाविनोरपि प्रत्यक्षतयेव बोधनेच्छा ।

(१२३) हेतुत्वस्य हिपदपञ्चमीविभक्त्यादिना वाच्यत्वेऽगूढत्वेनाचमत्कारितया नायमलङ्कारः, किन्तु उपात्तयोः कार्य्यहेत्वोरनुपात्तापि हेतुता वाक्यवैचित्र्यादिना वाच्यवत् यत्र स्फुटं प्रतीयते, तत्रैवायमलङ्कार इति बहवः । केचित्तु, हेतुत्वस्य वाच्यत्वेऽपि इममलङ्कारमङ्गीकुर्व्वन्ति ।

Digitized by Google

नमन्मुक्तः सम्प्रत्यहमतनुरग्रे ऽप्यनतिभाक्,
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि(१२४) ॥

अनेकपदार्थता यथा,

प्रणयसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः(१२५) ॥

एकपदार्थता यथा,

भस्मोद्धूलन ! भद्रमस्तु भवते रुद्राक्षमाले ! शुभम्,
हा ! सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्य्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥

एषु, अपराधद्वये पूर्वापरजन्मनोरनमनं, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वञ्च यथाक्रमसुक्तरूपो हेतुः ।

पर्यायोक्तं विना वाच्यवाचकत्वेन, यद्वचः ।

---

(१२४) अपराधः दण्डार्हत्वम् । अत्र भूतभाविजन्मनोरनमनरूपहेत्वोः, न प्रणतवानिति अनतिभागिति च क्रियाद्वयेन समाप्तयोः वाक्ययोरर्थता ।

(१२५) वपुषि शस्त्रमुपक्षिपत इति प्रातिपदिकानां क्रियासाकाङ्क्षतया वाक्यभावमनापन्नानामनेकपदानामर्थः शस्त्रोपक्षेपरूपो हेतुः ।

Digitized by Google

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण(१२६) यत्-प्रतिपादनं, तत् (पर्य्यायेण भङ्ग्यन्तरेण कथनात्) पर्य्यायोक्तम्। उदाहरणम्,

यं प्रेक्ष्य चिररूढ़ापि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः॥

अत्र(१२७), ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्य-मपि शब्देनोच्यते, तेन, यदेवोच्यते, तदेव व्यङ्ग्यं, यथा(१२८) तु व्यङ्ग्यं न तथोच्यते; यथा(१२९) गवि शुक्ले चलति दृष्टे,

---

(१२६) अवगमनं व्यञ्जना। प्रतिपादनम् अर्थात् वक्तव्यस्य अर्थस्य। भङ्गिः प्रकारः। विवक्षितमर्थं साक्षात् (स्ववाचकपदेन) अकथयित्वा (वैचित्र्यविशेषप्रतिपत्तये) प्रकारान्तरेण कथनम् पर्य्यायोक्तमिति फलितम्, तदुक्तम् दण्डिना 'अर्थमिष्टमनाख्याय साक्षात्, तस्यैव सिद्धये। यत्प्रकारान्तराख्यानं पर्य्यायोक्तम् तदिष्यते' इति।

(१२७) नन्वत्र विवक्षितार्थस्य व्यङ्ग्यत्वे ध्वन्यादिरेवास्तु, कृतं स्वतन्त्रालङ्कारकल्पनयेत्याशङ्क्य निराकरोति अत्रेत्यादिना, तदेव व्यङ्ग्यमित्यन्तेन। इदमत्र निराकरणम्, यत्र वाच्यव्यङ्ग्ययोः पार्थक्यं, तत्रैव ध्वन्यादिः, यत्र तु पर्य्यवसाने तयोरैक्यम् तत्रायमलङ्कारः इति विभागः, अत्र तूदाहरणे जनो गच्छति, जनेन गम्यते इत्यादाविव पर्य्यवसाने वाच्यव्यङ्ग्ययोरैक्यमेव, मदेन मानेन च निवासप्रीतिरुज्झिता, मदमानवियुक्तौ जातावित्यनयोर्वस्तुगत्या अपार्थक्यात्, अतस्तत्र पर्य्यायोक्तमेव युक्तमिति।

(१२८) एकस्य वाच्यत्वं व्यङ्ग्यत्वञ्च किमर्थमिति संशये प्रकारभेदेन प्रतिपत्त्यर्थमिति सिद्धान्तयति यथेति।

(१२९) एकप्रकारेण प्रतीतस्यापि प्रकारान्तरेण प्रतीतौ दृष्टान्तमुक्त्वा-

गौः शुक्लश्चलतीति विकल्पः, यदेव दृष्टं तदेव विकल्पयति, नतु यथा दृष्टं तथा, यतोऽभिन्नासंसृष्टत्वेन दृष्टम्, भेदसंसर्गाभ्यां विकल्पयति,

**उदात्तं वस्तुनः सम्पत्,**

सम्पत् समृद्धियोगः । यथा,

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्ज्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु, भोजनृपतेस्तत् त्यागलीलायितम् ॥

---

वयति यथेति । अयं भावः, गौः शुक्लः चलतीति विशिष्टज्ञानं प्रथमत एव न जायते, नागृहीतविशेषणा बुद्धिर्विशिष्टम् (सविशेषणम्) उपसंक्रामतीति नियमात्, नह्यविदिताग्निर्नरोऽग्निमान् देश इति जानाति, ततश्च प्रथमम् गौरिति शुक्ल इति चलतीति रीत्या विशेषणविशेष्यभावानापन्नानां गो-व्यक्ति-शुक्लगुण-चलनक्रियाणां प्रत्येकमेव ज्ञानं जायते, तदनन्तरञ्च गौः शुक्लः चलतीति विशेषणविशेष्यभावावलम्बि विशिष्टज्ञानं भवति, स एव विकल्पः ; अयमेव सविकल्प इत्युच्यते । विकल्पे च ज्ञाने गौः शुक्लगुण-चलनक्रियाभ्यां भिन्नत्वेन तयोः सम्बन्धित्वेन च प्रकारेण भासते, (गौः शुक्लः चलतीति विशिष्ट-ज्ञानानन्तरं गवि शुक्लगुणादेर्भेदसम्बन्धयोः संशयाद्यनुदयात्), प्राथमिके तु ज्ञाने भेदसम्बन्धौ न प्रकाराविति, यथा पूर्व्वं प्रतीतानामपि गवादीनां विकल्पज्ञाने प्रकारान्तरेण पुनः प्रतीतिः, तथा प्रकृते वाच्यस्यापि प्रकारभेदेन व्यञ्जनया पुनः प्रतीतिरिति । यथादृष्टं, येन प्रकारेण दृष्टम् । तथेति तेनैव प्रकारेणेत्यर्थः । अभिन्नासंसृष्टत्वेन दृष्टमित्यस्य भेदेन सम्बन्धेन च प्रकारेणादृष्टमिति फलितोऽर्थः ।

Digitized by Google

**महतां चोपलक्षणम् ॥२९॥**

उपलक्षणमङ्गभावः । अर्थादुपलक्षणीयेऽर्थे (१३०) ।

उदाहरणम्,

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षः-क्षयं रामः ॥

नचात्र वीरो रसः(१३१), तस्येहाङ्गत्वात् ॥

**तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ।**
**समुच्चयोऽसौ(१३२),**

तस्य (प्रस्तुतस्य कार्य्यस्य) एकस्मिन् साधके स्थिते साधकान्तराणि यत्र सम्भवन्ति, स समुच्चयः । उदाहरणम्,

दुर्व्वाराः स्मरमार्गणाः, प्रियतमो दूरे, मनोऽप्युत्सुकं,
गाढ़म् प्रेम, नवं वयोऽतिकठिनाः प्राणाः, कुलं निर्म्मलम् ।

---

(१३०) उपलक्षणीयेऽङ्गिनि वर्णनीये । वर्णनीयस्यार्थस्य विशेषकतया महत उपादानेऽपरमुदात्तमित्यर्थः ।

(१३१) बाहुमात्रसाहाय्यात् रक्षःक्षयकरणरूपेण अनुभावेन अभिव्यक्तस्य उत्साहस्यैव चमत्कारित्वादिति शेषः । तथाच वीररसध्वनिरेवायमिति पूर्व्वपक्षः । अङ्गत्वात् परम्परया उत्कर्षकत्वात्, उत्साहेन उत्कर्षितो हि रामः वर्णनीयमरण्यमुत्कर्षयति । अयमत्र सिद्धान्तः, नात्र वीररसो वर्णनीयः, किन्तु अरण्यमतो न वीररसध्वनिरिति ।

(१३२) काव्यलिङ्गे हेतुत्वमात्रं विवक्षितम्, वक्ष्यमाणसमाध्यलङ्कारे एकेन हेतुना कार्य्ये निष्पाद्यमाने आगन्तुकेनापरेण कार्य्यस्य सौकर्य्यकरणं विवक्षितं, अत्र तु बहूनां कार्य्यकरणक्षमाणां साहित्यं विवक्षितमिति परस्परं भेदः ।

स्त्रीत्वं धैर्य्यविरोधि, मन्मथसुहृत्कालः, कृतान्तोऽक्षमी,
नो सख्यश्चतुराः, कथं नु विरहः सोढ़व्य इत्थं शठः ॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तदुपरि प्रियतमदूरस्थित्यादि उपात्तम् । एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्य्यवस्यतीति न पृथक् लच्यते । तथाहि,

कुलममलिनं, भद्रा मूर्त्तिर्मतिः श्रुतशालिनी,
भुजबलमलं, स्फीता लक्ष्मीः, प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगाः ह्येते भावाः, अमीभिरयं जनो
व्रजति सुतरां दर्पं, राजन् ! त एव तवाङ्कुशाः ॥

अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ॥

शशी दिवसधूसरो, गलितयौवना कामिनी,
सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः, सततदुर्गतः सज्जनो,
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥

अत्र, शशिनि धूसरे शल्ये शल्यान्तराणीति(१३३), शोभनाशोभनयोगः(१३४) ॥

---

(१३३) धूसरशशिरूपशल्यमेव मर्मभेदं करोति, तदुपरि गलितयौवनादीनि उपात्तानीति सामान्यलक्षणसमन्वय इत्यर्थः ।

(१३४) शशिनः स्वतःशोभनस्यापि दिवसधूसरत्वादशोभनत्वेन शोभनाशोभनरूपस्य, तादृशैरेव कामिनीप्रभृतिभिः समुच्चयः । नृपाङ्गनगतः खल-

**स त्वन्या युगपद्या गुणक्रियाः ॥३०॥**

गुणौ च क्रिये च गुणक्रिये च, गुणक्रियाः (१३५)।

क्रमेणोदाहरणम्,

विदलितसकलारिकुलं
तव बलमिदमभवदाशु विमलञ्च।
प्रखलमुखानि नराधिप!
मलिनानि च तानि जातानि॥ [गु०गु०]

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभि-
र्भवितव्यञ्च निरातपत्वरम्यैः॥ [क्रि०क्रि०]

---

इत्यत्र तु नृपाङ्गनगतत्वेन शोभनत्वम्, खलत्वेन अशोभनत्वमिति रीत्या सदसद्रूपतासमर्थनेऽपि अस्मिन्मते नायमलङ्कारः, किन्तु स्वतःशोभनरूपस्य सदसतः प्रकरणे स्वतोऽशोभनरूपस्य खलस्य पाठात् सहचरभिन्नत्वप्रक्रमभङ्गत्वदोषावेव स्तः। इह सदसत्त्वम् उपादेयानुपादेयतया वक्तुरभिप्रेतत्वम्, दुर्वारा इत्यत्र प्रियतमादयः स्वतःशोभना अपि वक्त्राः विरहिण्याः दुःखहेतुतया तदानीमनुपादेयतयैव विवक्षिता इत्यसत्त्वम्। इह तु शशिप्रभृतय उभयरूपतयैव विवक्षिता इति सदसत्त्वम्। एवमेव चन्द्रिकायाम्।

(१३५) तथाच सूत्रस्थगुणक्रिया इति पदम् एकशेषनिष्पन्नम्, यथा, गुणौ च क्रिये च गुणक्रियाः, गुणश्च क्रिया च गुणक्रिये, गुणक्रियाश्च गुणक्रिये च गुणक्रिया इति। गुणक्रियासाहित्यं समुच्चयः। दीपके तु सतीष्वपि बह्वीषु क्रियासु साहित्यं न विवक्षितमिति ततो भेदः।



Digitized by Google

कलुषञ्च तवाहितेष्वकस्मात्
सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितञ्च महीपतीन्द्र ! तेषां
वपुषि प्रस्फुटमापदां कटाक्षैः ॥ [गु॰क्रि॰]

'धुनोति चासिं तनुते च कीर्त्तिम्' इत्यादेः, 'कृपाणपाणिश्च भवान् रणक्षितौ ससाधुवादाश्च सुराः सुरालये'-इत्यादेश्च(१२६) दर्शनात्, 'व्यधिकरणे' इति, 'एकस्मिन्देशे' इति च न वाच्यम्(१२७) ।

## एकं क्रमेणानेकस्मिन् पर्य्यायः

एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा(१२८), स पर्य्यायः । क्रमेणोदाहरणम्(१२९),

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये, वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ [भ॰]

---

(१२६) अत्र कार्य्यकारणयोरेककालात्मकविपर्य्ययरूपातिशयोक्तिर्मूलं न तु समुच्चयालङ्कारस्तस्यैवाङ्गत्वात् ।

(१२७) न वाच्यं लक्षणे न निवेश्यम् । तथाच गुणक्रियासाहित्यमात्रं समुच्चय इत्यङ्गीकार्य्यम् ।

(१२८) एकस्य वस्तुनोऽनेकत्र सम्बन्धे प्रयोजको यत्र नोक्तः, तत्र एकं वस्तु अनेकत्र भवति, यत्र तु स उक्तः तत्र क्रियते इति विशेषः ।

(१२९) 'श्रोणीभारस्त्यजति तनुतां, सेवते मध्यभागः, पद्भ्यां मुक्तास्तर-

यथा वा,

बिम्बौष्ठ एव रागस्ते तन्वि ! पूर्व्वमदृश्यत ।

अधुना हृदयेऽप्येष मृगशावाक्षि ! लक्ष्यते ।। [अ०]

रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् (१४०) ।

तत्ताणं सिरिसहोअररअणाहरणम्मि हिअअमेकरसं ।
बिंबाहरे पिआणं णिवेसिअं कुसुमवाणेण(१४१)।।[क्रि०]

अन्यस्ततोऽन्यथा (१४२) ।

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा सोऽन्यः । क्रमेणोदाहरणम्,

मधुरिमरुचिरं वचः खलानाम्
अमृतमहो प्रथमं पृथु व्यनक्ति ।

---

जगतयः संश्रिता लोचनाभ्याम् । धत्ते वक्षः कुचसचिवतामद्वितीयस्य वक्त्रं तद्गात्राणां गुणविनिमयः कल्पितो यौवनेनेति पद्यम्, प्रदीपोद्योतनिदर्शनकृद्भिरत्र नोदाहृतम्. क्रमभङ्गभीरुणा महेश्वरेण च बिम्बौष्ठ एवेति पद्यस्यानन्तरं, 'क्रिय'ं इत्यस्य उदाहरणतयाऽधारि, चन्द्रिकायान्तु प्रथममेवेदमुदाहरणतया व्याख्यातम् । वस्तुतः प्रयोजनाभावात् प्रदीपाद्यनुसरणमेव श्रेयः ।

(१४०) तथाच श्लेषमूलकातिशयोक्तिरेवात्रास्य मूलं बोध्यम् ।

(१४१) तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् । बिम्बाधरे प्रियाणां निवेशितम् कुसुमवाणेनेति सं० । श्रीसहोदररत्नम् कौस्तुभस्तदाभरणे हरौ इति उद्योतचन्द्रिकाकृन्मल्लीदासाः ।

(१४२) पर्य्यायोऽन्यस्ततोऽन्यथेति सन्धिसत्त्वात् नात्र छन्दोभङ्गः ।

Digitized by Google

अथ कथयति मोहहेतुमन्त-
र्गतमिव हालाहलं विषं तदेव ॥ [भ०]

तत्रेदं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः !
सा धेनुर्जरती, नदन्ति करिणामेता घनाभा घटाः ! ।
स क्षुद्रो मुषलध्वनिः, कलमिदं सङ्गीतकं योषिताम् !
आश्चर्य्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ [क्रि०]

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिः ॥

## अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ॥३१॥

पक्षधर्म्मान्वयव्यतिरेकित्वेन(१४२) त्रिरूपो हेतुः साधनं, धर्म्मिणि अयोगव्यवच्छेदो व्यापकस्य, साध्यत्वम् । यथा,

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं,
यत् तत्रैव पतन्ति सन्ततममी मर्म्मस्पृशो मार्गणाः ।
तच्चक्रीकृत-चापमञ्चितशर-प्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥

---

(१४२) पक्षधर्मत्वम्, पक्षे (यत्रानुमीयते स पक्षः, पर्व्वतो वाह्निमान् धूमात् इत्यादौ पर्व्वतादिः) वृत्तित्वम् । अन्वयित्वम् सपक्षे (निश्चितसाध्यवति महानसादौ) वृत्तित्वम् । व्यतिरेकित्वम् विपक्षे (निश्चित साध्यवह्निके जलादौ) अवृत्तित्वम् । धर्म्मिणि पक्षे (पर्व्वतादौ) व्यापकस्य (हेत्वपेक्षया अन्यूनदेशस्थितस्य वह्न्यादेः) अयोगव्यवच्छेदः नियतसम्बन्धः । कविप्रतिभाकल्पितम् यत् साधनेन साध्यस्य उन्नयनम् तदनुमानमिति फलितम् ।

साध्यसाधनयोः(१४४) पौर्व्वापर्य्यविकल्पो न किञ्चिद्वैचित्र्यमिति न तथा दर्शितम् ॥

**विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।**

अर्थाद्विशेष्यस्य । उदाहरणम्,

मह्यौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्त्तयः ।
न संहतास्तस्य न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥

यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः (१४५) ।

**व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥३२॥**

निगूढमपि(१४६) वस्तुनो रूपं कथमपि प्रभिन्नं केनापि

(१४४) ननु साध्यस्य पूर्व्वमुक्तौ एकः, साध्यस्य चरममुक्तौ चैक इति भेदद्वयसम्भवात् कथं विभागो न कृत इत्यत आह साध्येति ।

(१४५) तथाच एकत्र सार्थकबहुविशेषणोपन्यासः परिकर इति फलितम् । अपुष्टार्थत्वदोषाभावस्य निर्विशेषणतयाऽप्युपपत्तेरेकस्मिन्नपि सार्थके विशेषणे चमत्कारानुभवाच्च तत्त्याज्यमिति प्रदीपः ।

(१४६) निगूढमपि अस्फुटमपि । उद्भिन्नम् स्फुटम् । व्यपदेशेन काल्पनिककारणाद्युपन्यासेन । साम्यमूलकोऽपह्नवोऽपह्नुतिः अत्र तु न साम्यविवक्षेति भेदः । इदमुपलक्षणम्, तत्रोपमाननिषेधपूर्व्वकमुपमानव्यवस्थापनम्, अत्र तु किञ्चिदनिषिध्यैव निमित्तान्तरप्रयुक्तत्वस्थापनमित्यपि बोध्यमिति उद्योतः ।

व्यपदेशेन यदपह्नूयते, सा व्याजोक्तिः । न चैषा अपह्नुतिः, प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात् । उदाहरणम्,

शैलेन्द्रप्रतिपाद्यमानगिरिजा-हस्तोपगूढ़ोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्, सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ।

किञ्चित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।
तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता ॥३३॥

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं (प्रयोजनान्तराभावात्) सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्य्यवस्यति, सा भवेत्परिसङ्ख्या(१४७)अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टं, तथा उभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारो भेदाः । क्रमेणोदाहरणम्,

किमासेव्यं पुंसां ? सविधमनवद्यं द्युसरितः,
किमेकान्ते ध्येयं ? चरणयुगलं कौस्तुभभृतः ।

---

(१४७) तदन्यनिषेधाय तस्योक्तिः परिसङ्ख्येति फलितम् । यथोदाहरणे, गङ्गातीरादेः सेव्यत्वादि सर्व्वावगतमेवेति न तदवगमायेदं पद्यमुक्तम्, किन्तु गङ्गाभिन्नादीतीरादेरसेव्यत्वादिप्रतिपादनायेति ।

Digitized by Google

किमाराध्यं ? पुण्यं, किमभिलषणीयञ्च ? करुणा,
यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति ।। [प्र०प्र०]
किं भूषणं ? सुदृढ़मत्र यशो, न रत्नं,
किं कार्य्यमार्य्यचरितं सुकृतं, न दोषः ।
किं चक्षुरप्रतिहतं धिषणा, न नेत्रं,
जानाति कस्त्वदपरः सदसद्विवेकम् ।। [ प्र०वा ]
कौटिल्यं कचनिचये, करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति(१४८)।। [अ०प्र०]
भक्तिर्भवे, न विभवे, व्यसनं शास्त्रे, न युवति-कामास्त्रे ।
चिन्ता यशसि, न वपुषि, प्रायः परिदृश्यते महताम् ।।[अ०वा०]

**यथोत्तरं चेत् पूर्वस्यपूर्वस्यार्थस्य हेतुता ।**
**तदा कारणमाला स्यात्**

उत्तमम् उत्तरं प्रति यथोत्तरम् । उदाहरणम्,

जितेन्द्रियत्वं विनयस्य कारणं,
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते,
जनानुरागप्रभवा हि सम्पदः(१४९) ।।

---

(१४८) न हृदयादिषु इति व्यक्रमम् । अत्र श्लेषमूलेयम् ।

(१४९) विनयस्य कारणमित्युपक्रम्य विनयादवाप्यते इत्युपसंहारादत्र भग्नप्रक्रमतादोषोऽस्तीति विभावनीयम् ।

Digitized by Google

'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति हेत्वलङ्कारो(१५०) न लक्षितः आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति वैचित्र्याभावात् ।

'अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः ॥'

-इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलङ्कारकल्पनयेति, पूर्वोक्तकाव्यलिङ्गमेव हेतुः(१५१)

क्रियया तु परस्परम् ॥३४॥

वस्तुनोर्जननेऽन्योन्यम्,

अर्थयोरेकक्रियामुखेन (१५२) परस्परं कारणत्वे सति अन्योन्यनामा अलङ्कारः । उदाहरणम्,

---

(१५०) भट्टोद्भटप्रदर्शितः ।

(१५१) अयं भावः, प्राचीना अस्य श्लोकस्य सालङ्कारतया यत् काव्यत्वमूचुः, तत् न उक्तहेत्वलङ्कारवत्तया, येन तत्स्वीकार आवश्यकः, किन्तु अनुप्रासादिमत्तयेति । हेतुरिति नाम च काव्यलिङ्गस्यैवेति ।

(१५२) एकजातीयक्रियाजननद्वारा । कारणत्वे कारणत्वकल्पने । परस्परं जन्यजनकभावाभावेऽपि परस्परगतक्रियाजननमादाय परस्परं जन्यजनकभावः कल्प्यते इत्यर्थः । परस्परं परस्परगतयोरेकजातीयक्रिययोर्जननेऽन्योन्यमिति । अत्र क्रियथेति गुणस्यापि उपलक्षणमिति उद्योतकृत् ।

Digitized by Google

हंसाणं सरेहिं सिरी सारिज्जइ अह सराणं हंसेहिं ।
अस्सोस्सं विअ एए अप्पाणं णवर गरुअन्ति (१५३) ॥

अत्र उभयेषामपि परस्परजनकता मिथः श्रीसारतासम्पादनद्वारेण ॥

उत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र क्रियते, तत्र वा सति ॥३५॥
असकृद् यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम्(१५४) ।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते, तदेकं तावदुत्तरम् । उदाहरणम्,

वाणिअअ ! हत्थिदन्ता कुतो अम्हाणं वग्घकत्तीअ ।
जाव ललिआलअमुही घरम्मि परिसक्कइ सोण्हा(१५५) ॥

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, ताः मूल्येन प्रयच्छेति क्रेतुर्वचनम् (१५६) अमुना वाक्येन समुन्नीयते । नचैतत्

---

(१५३) हंसानां सरोभिः श्रीः सार्य्यते, अथ सरसां हंसैः । अन्योन्यमिव एते आत्मानं केवलं गरयन्तीति सं० । गरयन्ति गुरूकुर्व्वन्ति ।

(१५४) असम्भाव्यम् सर्व्वजनासंवेद्यम् ।

(१५५) वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च । यावत् ललितालकमुखी गृहे परिष्वक्कते स्नुषेति सं० । वधूसमासक्तः सुतः मृगयार्थं न गच्छतीति भावः ।

(१५६) अस्य प्रश्नरूपत्वाभावेऽपि प्रश्नपदं पूर्व्ववाक्यमात्रपरमित्यदोषः । यद्वा हस्तिदन्तव्याघ्रकृत्तयः किं तव न सन्तीति प्रश्नवाक्यमिहोन्नेयमिति प्रदीपः ।



Digitized by Google

काव्यलिङ्गम्, उत्तरस्य तादूप्यानुपपत्तेः(१५७), न हि प्रश्नस्य प्रतिवचनं जनको हेतुः, नापीदमनुमानम्, एकधर्म्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलङ्कारान्तरमेवोत्तरं साधीयः ।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यत् असम्भाव्यरूपं प्रतिवचनं स्यात्, तत् अपरमुत्तरम् । अनयोश्च(१५८) सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम् । उदाहरणम्,

का विसमा ? देव्वगई, किं दुल्लहं ? जं जनो गुणग्गाही ।
किं सोक्खं ? सुकलत्तं, किं दुःखं ? जं खलो लोओ(१५९)॥

प्रश्नपरिसङ्ख्यायामन्यव्यपोह एव तात्पर्य्यम्, इह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः(१६०) ।

**कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते।।३६।।**
**धर्म्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते।**

---

(१५७) तादूप्यं कारणता । एकधर्म्मिनिष्ठतया एकव्यक्तिवृत्तितया । प्रकृते साध्यं प्रश्नः, साधनम् उत्तरम् । अनिर्देशादिति प्रश्नस्य अपरव्यक्तिगतत्वेन उन्नीयमानत्वादिति शेषः ।

(१५८) अनयोश्च प्रश्नप्रतिवचनयोश्च । प्रश्नोत्तरयोरन्यतरस्याकूतगर्भत्वे सकृदुपादानेऽपि चमत्कारोऽस्त्येव, यथा किमिति कृशासि कृशोदरि ? किं तव परकीयवचनैरित्यादौ प्रश्नेन प्रतिकारसामर्थ्यम्, उत्तरेण च मानित्वं व्यज्यते इति उद्योतकृत् ।

(१५९) का विषमा ? दैवगतिः, किं दुर्लभं ? यत् जनो गुणग्राही । किं सौख्यम् ? सुकलत्रम्, किं दुःखं ? यत् खलो लोक इति सं० ।

(१६०) विश्रान्तिः तात्पर्य्यम्, दैवगत्यादीनामुत्तराणां धर्म्मजनावेद्यत्वात् ।

Digitized by Google

कुतोऽपि आकारादिङ्गिताद्वा(१६१), सूक्ष्मसौक्ष्म्यमतिसंवेद्यः । उदाहरणम्,

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ [आ०]

अत्राकृतिमालोक्य कयापि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं, पुंसामेव कृपाणपाणिता, योग्यत्वात् । यथा वा

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ [इ०]

अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ।

**उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥३७॥**

परः पर्य्यन्तभागः(१६२), अवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः । उदाहरणम्,

राज्ये सारं वसुधा, वसुधायां पुरं, पुरे सौधम् ।
सौधे तल्पं, तल्पे वराङ्गनाऽनङ्गसर्व्वस्वम् ॥

(१६१) रूपादेरन्यथात्वमाकारः, चेष्टाविशेषः इङ्गितम् इति प्रदीपः ।

(१६२) (अर्थात् काव्यस्य) शेषांशः । अवधिः उत्कर्षसीमा, सर्व्वोत-

**भिन्नदेशतयाऽत्यन्तं कार्य्यकारणभूतयोः ।**
**युगपद्धर्म्मयोर्यच ख्यातिः सा स्यादसङ्गतिः॥३८॥**

इह यद्देशङ्कारणं, तद्देशमेव कार्य्यमुत्पद्यमानं दृष्टम्, यथा धूमादि, यत्र हेतुफलरूपयोरपि धर्म्मयोः केनाप्यतिशयेन(१६३) नानादेशतया युगपदवभासनं, सा तयोः स्वभावोपन्नपरस्परसङ्गतित्यागादसङ्गतिः । उदाहरणम्,

जस्मेअ वणो तस्मे अ वेअणा भणइ, जणो तं अलिअं ।
दन्तक्खअं कवोले बहूए वेअणा सवत्तीणं (१६४) ॥

एषा(१६५) च विरोधबाधिनी न विरोधः, भिन्नाधरतयैव

---

क्षण इत्यर्थः । धाराधिरोहितया प्रवाहक्रमेण । विश्रान्तेः पर्य्यवसानात् । उत्कर्षश्च श्लाघ्यगुणानामश्लाघ्यगुणानाञ्च सम्भवति, तत्राद्यमुदाहृतम्, अन्यं यथा, तृणाल्लघुतरस्तूलः, तूलादपि च याचकः । वायुना किं न नीतोऽसौ ? मामयं प्रार्थयिष्यते' इति उद्योतः ।

(१६३) अतिशयेन कारणान्तरेभ्यो वैलक्षण्येन । युगपदिति स्वरूपकथनम् । आभासनम् प्रतिपादनम् । कारणान्तरात् वैलक्षण्यमभिसन्धाय कार्य्यकारणयोर्भिन्नस्थानस्थितिकथनम् असङ्गतिः । स्वभावोत्पन्ना स्वाभाविकी । सङ्गतिः एकदेशत्वलक्षणः सम्बन्धः । कार्य्यकारणयोरित्युपलक्षणम्, एकदेशस्थितत्वेन प्रसिद्धयोरिति बोध्यम् । तेन नेत्रे निरञ्जने तन्व्याः शून्यास्तु वयमद्भुतमित्यस्य सङ्ग्रह इति केचित् प्राहुः ।

(१६४) यस्यैव व्रणः तस्यैव वेदनाः भणति जनस्तदलीकम् । दन्तक्षतं कपोले बध्वाः, वेदना सपत्नीनामिति सं० । अत्र व्रणक्षतपदयोः प्रक्रमभङ्गः चिन्त्यः ।

(१६५) नन्वत्र विरोधाभास एवास्तु, अनुपपत्तिर्हि विरोधः, सा च

द्वयोरिह विरोधितायाः प्रतिभासात्, विरोधे तु विरोधित्व-मेकाश्रयनिष्ठमनुक्तमपि पर्य्यवसितम्, अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः, तथा चैवं निदर्शितम् ।

**समाधिः सुकरं कार्य्यं कारणान्तरयोगतः ।**

साधनान्तरोपकृतेन (१६६) कर्त्रा तदंशेन कार्य्यम् आरब्धं समाधीयते, स समाधिर्नाम । उदाहरणम्,

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितम् ॥

**समं योग्यतया योगो यदि सम्भावितः क्वचित् ॥३८॥**

इदमनयोः श्लाघ्यमिति योग्यतया(१६७) सम्बन्धस्य नियत-

---

भिन्नदेशयोरेकदेशत्वे इव, एकदेशयोर्भिन्नदेशत्वेऽपि समानेति पूर्व्वपक्षं निराकरोति एवं चेति, इदमत्र निराकरणम्, एकदेशयोर्भिन्नदेशत्वे एवासङ्गतिः सम्भवति, विरोधस्तु अन्यत्रापीति, चमत्कारान्तरविधायिनी विशेषरूपा असङ्गतिः सामान्यविशेषन्यायेन विरोधं बाधते, सुतरां विरोधाभासो भिन्नदेशयोरेकदेशत्वे एव पर्य्यवस्यति, अतएव विरोधाभासोदाहरणम् पूर्व्वं तथैव दत्तमिति । एकाश्रयनिष्ठं भिन्नदेशयोरेकदेशत्वप्रयुक्तम् । अनुक्तम् विरोधलक्षणे इति शेषः । अपवादो विशेषः । उत्सर्गः सामान्यम् । 'एवम्' भिन्नदेशयोरेकदेशत्वप्रयुक्त्या विरोधः । निदर्शितम् विरोधोदाहरणतयेति शेषः । विरोधबाधिनीत्यत्र विरोधबोधिनीति पाठः प्रदीपसम्मतः, तदर्थसङ्गतिश्च तत एव बोध्या ।

(१६६) तथाच यत्र एकमेव कारणं प्रधानतया विवक्षितम्, अपरञ्च सहकारितया, तत्रैवायमलङ्कारः । उभयोः प्राधान्ये विवक्षिते समुच्चय इति ।

(१६७) योग्यतया प्रशंसनीयत्वेन रूपेण, कस्य अध्यवसानमित्यनेन

Digitized by Google

विषयमध्यवसानं चेत्तदा समम् । तत् सद्योगेऽसद्योगे च ।
उदाहरणम्,

धातुः शिल्पा-तिशयनिकषस्थानमेषा मृगाक्षी,
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः सङ्गतं यत्, तदेतत्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ।। [स०]
चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं !
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया,
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ।।[अस०]

**क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्(१६८)।**
**कर्त्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ।।६०।।**
**गुणक्रियाभ्यां कार्य्यस्य कारणस्य गुणक्रिये ।**
**क्रमेण च विरुद्धे यत् स एष विषमो मतः ।।४१।।**

---

अन्वयः । सम्बन्धस्य (अनुरूपयोः) मेलनस्य । नियतविषयं निश्चयरूपम् । अध्यवसानं प्रतीतिः । समं समनामा अलङ्कारः अनुरूपयोर्योगो हि श्लाघ्यः, स च सतोरिव असतोरपि सम्भवतीत्याह तदिति ।

(१६८) अतिवैधर्म्यात् अत्यन्तवैसादृश्यात् । श्लेषः सम्बन्धः । घटनाम् श्लाघ्यत्वरूपामुपपद्यमानताम् । क्रमेणेति कार्य्यस्य गुणेन कारणगुणो विरुद्ध इत्येकः, कार्य्यस्य क्रियया कारणस्य क्रिया विरुद्धेत्यपर इति द्वौ, एतद्भेदद्वये च कार्य्यकारणयोर्विरुद्धगुणक्रियायोग एव चमत्कारी, विरोधे तु

द्वयोरत्यन्तविलक्षणतया यत् अनुपपद्यमानतयैव योगः प्रतीयते [१], यच्च किञ्चिदारभमाणः कर्त्ता क्रियायाः प्रगुणात्(१६८)न केवलमभीष्टं यत् फलं न लभेत, यावदप्रार्थितमप्यनर्थं विषयमासादयेत्[२], तथा सत्यपि कार्य्यस्य कारणरूपानुकारे यत् तयोर्गुणौ क्रिये च परस्परविरुद्धतां व्रजतः[३।४।], स विपर्य्ययात्मा चतूरूपो विषमः। क्रमेणोदाहरणम्,

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः॥ [१]

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः॥ [२]

सद्यःकरस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणरेखा।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोक्याभरणं प्रसूते॥ [३]

आनन्दममन्दमिमं कुवलयदललोचने! ददासि त्वम्।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे॥ [४]

अत्रानन्ददानं शरीरतापेन विरुध्यते। एवं,

---

भिन्नदेशयोरेकदेशत्वम्, असङ्गत्यलङ्कारे एकदेशयोर्भिन्नदेशत्वमेव चमत्कारीति विशेषः।

(१६८) प्रगुणात् उद्देश्यफलजननासामर्थ्यात्। कारणरूपानुकारे

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥

-इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम् (१७०) ।

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् (१७१) ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकन्तु तत् ॥४२॥**

आश्रितमाधेयम् आश्रयस्तदाधारः तयोर्महतोरपि विषये(१७२), तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया

---

इति जनकानुरूपमेव जन्यमिति नियमात्, न हि कदाचिदपि भेकसुतो गगनोड्डयनाय प्रभवति, काकशिशुर्वा शुक्लीभवितुम् ।

(१७०) जगत्पानकर्त्तुरत्त्रयस्य कुक्षिणः असमग्रस्त्रीदृष्टिपीतेन अवयविना (विष्णुना) अवयवावयविभावः सम्बन्धोऽनुपपद्यमान इति प्रथमप्रकारोऽत्र विषम इति प्रदीपाभिप्रायः। उपादानकारणरूपस्य कुक्षिणः जगत्पानक्रिया उपादेयस्य (विष्णुशरीरस्य) एकतमस्त्रीकर्त्तृकपानक्रियया विरुद्धेति चतुर्थ-प्रकारो विषम इति तु महेश्वरः ।

(१७१) महतोर्वृहतोः । महीयांसौ महत्तया विवक्षितौ । क्रमादिति वस्तुतोऽमहानपि महत आश्रितस्याश्रयत्वेन महत्तया विवक्षित आश्रय इत्येकः, वस्तुतोऽमहानपि महदाश्रयाश्रितत्वेन महत्तया विवक्षित आश्रित इत्यपर इति ।

(१७२) विषये सम्बन्धे ।

Digitized by Google

यथाक्रमं यत् अधिकतरतां व्रजतः, तदिदं द्विविधम् अधिकं नाम। क्रमेणोदाहरणम्,

अहो विशालं भूपाल! भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥ [श्राश्र०त०]

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः॥ [श्राश्रि०त०]

**प्रतिपक्षमशक्तेन प्रतिकर्त्तुं तिरस्क्रिया।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥४३॥**

न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत्, तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणं, तत् (अनीकप्रतिनिधितुल्यत्वात्) प्रत्यनीकमभिधीयते। यथाऽनीके अभियोज्ये तत्प्रतिनिधीभूतमपरं मूढतया केनचिदभियुज्यते, तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थः। उदाहरणम्,

त्वं विनिर्जितमनोभवरूपः, सा च सुन्दर! भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः।

यथा वा,

यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः(१७२)।

---

(१७२) यस्य श्रीकृष्णस्य। विष्णुराहुशिरश्छिच्छेदेति पुराणगाथा।

कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥
इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात् (१७४) ॥

समेन लक्ष्मणा वस्तु वस्तुना यत् निगूह्यते ।
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम्॥४४॥

सहजम् (१७५) आगन्तुकं वा किमपि साधारणं यत् लक्षणं, तद्द्वारेण यत्, किञ्चित्केनचिद्वस्तु वस्तुस्थित्यैव बलीयस्तया तिरोधीयते, तत् मीलितमिति द्विधा स्मरन्ति । क्रमेण उदाहरणम्,

अपाङ्ग-तरले दृशौ, मधुर-वक्र-वर्णा गिरो,
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ [स॰]

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकं, साधारणञ्च मदोदयेन, तत्राप्येतस्य दर्शनात् ।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्ग-मुत्पुलक-मुद्वहतां सकम्पं
तेषामहो वत भियां न बुधोऽप्यभिज्ञः ॥ [आ॰]

---

(१७४) श्रीकृष्णसम्बन्धिनो मुखस्य सादृश्यलक्षणसम्बन्धात् ।

(१७५) सहजं वस्तुस्वभावसिद्धम् । आगन्तुकं निमित्तान्तरसम्पर्कजनितम् । साधारणम् तिरोधीयमानतिरोधायकयोः धर्म्मः । लक्षणम् चिह्नम् । वस्तु-

Digitized by Google

अत्र तु सामर्थ्यात्(१७६) अवसितस्य शैत्यस्यागन्तुकत्वात् तत्प्रभवयोरपि कम्पपुलकयोस्तादूप्यं समानता च, भयेष्वपि तयोरुपलक्षितत्वात् ।

**स्थाप्यतेऽपोह्यते वापि यथापूर्व्वं परम्परम् ।**
**विशेषणतया यत्र वस्तु, सैकावली द्विधा ॥४५॥**

पूर्व्वं पूर्व्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया(१७७)विशेषणभावेन यत् स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैः एकावली भण्यते । क्रमेणोदाहरणम्,

पुराणि यस्यां सवराङ्गनानि,
वराङ्गना रूपपुरस्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलासम्,
अस्त्रं विलासाः कुसुमायुधस्य ॥ [स्था०]

---

स्थित्या वस्तुस्वभावेन । व्याजोक्तौ तिरोधानं न वस्तुस्वभावजनितं किन्तु अतिरोहितस्यापि तिरोधानेच्छामात्रं विवक्षितम्, इह तु वास्तविकं तिरोधानं विवक्षितमिति भेदः ।

(१७६) सामर्थ्यात् हिमाद्रिकन्दरनिवासरूपात् हेतोः । अवसितस्य अधिगतस्य । तादूप्यम् आगन्तुकत्वम् । समानता शैत्यभयोभयसाधारणता । उपलक्षितत्वात् अनुभवात् ।

(१७७) वीप्सया बाहुल्येन । स्थापनं विधानम् । 'विशेष्यतयेत्यपि बोध्यम्, यथा, धर्म्मेण बुद्धिस्तव देव शुद्धा, बुद्ध्या निबद्धा सहसैव लक्ष्मीः । लक्ष्म्या च तुष्टा भुवि सर्व्वलोका, लोकैश्च नीता भुवनेषु कीर्त्तिरिति' इति उद्योतः । दर्पणोऽप्येवम् ।

Digitized by Google

न तज्जलं, यन्न सुचारुपङ्कजं,
न पङ्कजं तत्, यदलीनषट्पदम् ।
न षट्पदोऽसौ, कलगुञ्जितो न यः,
न गुञ्जितं तत्, न जहार यन्मनः ॥ नि०]

पूर्व्वत्र, पुराणां वराङ्गनाः, तासाम् (अङ्गविशेषण-सुखेन(१७८) ) रूपं, तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ।

**यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**

**स्मरणम्**

यः पदार्थः केनचिदाकारेण नियतः(१७९) यदा-कदाचित् अनुभूतोऽभूत्, स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत्, तथैव स्मर्य्यते, तत् भवेत् स्मरणम् । उदाहरणम्,

निम्ननाभिकुहरेषु यदम्भः-
प्लावितं चलदृशां लहरीभिः ।
तद्भवैः कुहरुतैः सुरनार्य्यः
स्मारिताः सुरतकण्ठरुतानाम् ॥

---

(१७८) अङ्गस्य विशेषणभावद्वारा ।

(१७९) नियतः विशेषितः । स्मृतिप्रतिबोधाधायिनि स्मृतौ (स्मरणानुगुणः) यः प्रतिबोधः (संस्कारोद्बोधः) तदाधायिनि (तज्जनके) । अत्रायं सारः, यादृशं वस्तु एकदा अनुभूयते, तादृशमेव तत् अन्यदा स्मर्य्यते इति

Digitized by Google

यथा वा,

करजुअगहिअ-जसोआ-त्थणमुह-विणिवेसिआहर ,उडस्स ।
समरिअ-पञ्चजस्स णमह कण्हस्स रोमञ्चम्(१८०)॥

**भ्रान्तिमान् अन्य-संवित्तत्तुल्यदर्शने ॥८६॥**

तदिति (१८१) अन्यत् अप्राकरणिकं निर्दिश्यते, तेन समानम् (अर्थादिह) प्राकरणिकम् (आश्रीयते), तस्य तथाविधस्य दृष्टौ सत्यां यत्, अप्राकरणिकतया संवेदनम्, स

---

नियमात् स्मृतौ अनुभवः कारणम्। अनुभवस्तु न स्वतएव कारणम्, (अन्य-मनस्कस्य पथि दृष्टतृणादेरस्मरणात्) किन्तु संस्कारद्वारा (ततश्च तत्रोपेक्षया तृणादेर्दर्शनात् न संस्कार इति न स्मृतिः), संस्कारोऽपि उद्‌बुद्धएव स्मृतिं जनयति, न त्वनुद्‌बुद्धः (अन्यथा संस्कारस्य सर्व्वदा सत्त्वेन सर्व्वदा स्मृति-प्रसङ्गः)। उद्बोधकाश्च सम्बन्धिज्ञानादिरूपा नाना, यथा हस्तिदर्शनात् संस्कारोद्बोधद्वारा हस्तिपकस्य स्मरणमिति स्मृतिप्रणाली। एवञ्च सादृश्य-सम्बन्धमूलकमेव सम्बन्धिनः स्मरणम् स्मरणालङ्कार इति प्रकाशाभिप्रायः। वस्तुतः वैचित्र्यजनकं स्मरणमात्रमेव स्मरणालङ्कार इति युक्तम्।

(१८०) करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य। स्मृतपाञ्च-जन्यस्य नमत कृष्णस्य रोमाञ्चम् इति सं०।

(१८१) 'तत्तुल्यदर्शने' इत्यत्र तत्पदेन पूर्व्वोक्तम् अन्यपदबोध्यमप्राकर-णिकमेव परामृश्यते इत्यर्थः। तेन अप्राकरणिकेन। तस्य प्राकरणिकस्य। तथाविधस्य अप्राकरणिकसमानस्य। दृष्टौ दृष्टिपथपतने। अप्राकरणिकतया अप्राकरणिकस्वरूपेण। संवेदनम् अवधारणम्। तथाच सादृश्यमूलः प्रकृते-ऽप्रकृतार्थभ्रमो भ्रान्तिमानिति फलितम्। वस्तुतः, वस्तुस्वभावसिद्ध-रज्जु-रजतादिभ्रमविलक्षणं चमत्कृतिमत्भ्रममात्रमेव तथेति युक्तम्।

भ्रान्तिमान्, नचैष रूपकं प्रथमातिशयोक्तिर्वा (१८२), तत्र वस्तुतो भ्रमस्याभावात् इह च (अर्थानुगमनेन संज्ञायाः प्रवृत्तेः) तस्य स्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम्,

कपाले मार्जारः पय इति करान् लेढि शशिनः,
तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति ।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति,
प्रभामत्तश्चन्द्रो जगदिदमहो ! विभ्रमयति ।।

**आक्षेप उपमानस्य, प्रतीपमुपमेयता ।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम्।।४७।।**

अस्य (१८३) धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यत् उपमानमाक्षिप्यते, यदपि, तस्यैवोपमानतया प्रसिद्धस्योपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तत् (उपमेयस्योपमानप्रतिकूलवर्त्तित्वात्) उभयरूपं प्रतीपम् । क्रमेणोदाहरणम्,

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनाम्,
देव ! त्वय्यवनीभर-क्षम-भुजे निष्पादिते वेधसा ।

---

(१८२) प्रथमातिशयोक्तिः निगीर्य्याध्यवसानरूपा । अर्थानुगमेन भ्रम-सम्बन्धरूपार्थानुसन्धानेन (स च सम्बन्धः अभेदो घटकत्वं वा बोध्यम्), संज्ञायाः भ्रान्तिमदिति नाम्नः । तस्य भ्रमस्य ।

(१८३) अस्य उपमानस्य । धुरम् प्रयोजनम् । प्रौढं समर्थम् । कैमर्थ्येन किमर्थमिदमिति न्यायेन प्रयोजनविरहेण वा । आक्षिप्यते निन्द्यते ।

Digitized by Google

इन्दुः किं घटितः, किमेष विहितः पूषा, किमुत्पादितं
चिन्तारत्नमहो, मुधैव किममी सृष्टाः कुलक्ष्माभृतः(१८४)।। [आ०]

ए! एहि दाव सुंदरि! कस्रं दाऊण सुणसु वअणिज्जं।
तुम्ह मुहेण किसोअरि! चंदो उअमिज्जइ जणेण(१८५)।। [अनि०]

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् उपमित्यनिष्पत्त्या वअणिज्जमितिवचनीयपदाभिव्यङ्ग्यस्तिरस्कारः (१८६)। क्वचित्तु निष्पन्नैवोपमितिक्रिया अनादरनिबन्धनम्। यथा,

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे!।
सन्तीदृशानि दिशि-दिशि सरःसु ननु नील-नलिनानि।। [नि०]

---

उपमेयसत्त्वे उपमानस्य वैफल्येन निन्दा एकं प्रतीपमित्यर्थः। तस्य उपमानस्य। उपमानान्तरमत्र वर्णनीयम् उपमेयमेव। उपमाननिन्दार्थम् उपमानस्य उपमेयेन उपमाकल्पनम् अपरं प्रतीपमिति फलितम्। उपमानतिरस्कारश्च क्वचित् कल्पिताया उपमाया अनिष्पत्तिद्वारा, क्वचिच्च निष्पन्नया उपमयैवेति उदाहरणेनैतत् स्फुटीभविष्यति।

(१८४) चिन्तारत्नम् चिन्तामणिनामा मणिः। अत्र यथासंख्यमप्यस्ति।

(१८५) अयि एहि तावत् सुन्दरि! कर्णं दत्त्वा शृणुष्व वचनीयम्। तव मुखेन कृशोदरि! चन्द्र उपमीयते जनेनेति सं०। वचनीयम् निन्दाम्। तवेति उभयत्र (वचनीयमिति मुखेनेत्यत्र) अन्वेति।

(१८६) वअणिज्जमित्यनेन उपमित्यनिष्पत्तिः, तया च शशिनः स्वल्पगुणत्वरूपस्तिरस्कार इति तात्पर्य्यार्थः।

Digitized by Google

इत्थोपमेयीकरणमेवोत्पलानामनादरः(१८७)। अनयैव रीत्या यत्(१८८),असामान्यगुणयोगात्, न, उपमानभावमपि अनुभूतपूर्वं सहते, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम्। यथा,

अहमेव गुरुः सुदारुणानाम्
-इति हालाहल! तात! मा स्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम्॥

अत्र, हालाहलस्योपमानत्वमसम्भाव्यम्(१८९)एवोपनिबद्धम्।

**प्रस्तुतस्य यदन्येन (१९०) गुणसाम्यविवक्षया।**

---

(१८७) न्यूनगुणस्यैव उपमेयत्वात्।

(१८८) यत् असामान्यगुणयोगात् (असाधारणगुणसम्बन्धात् कथितात् अभिहितात्) अनुभूतपूर्व्वमपि उपमानभावं न सहते इत्यन्वयः। उपमानत्वेन प्रसिद्धस्यापि (असाधारण्यप्रतीतिवीजम्) असाधारणगुणसम्बन्धमभिधाय उपमानत्वकल्पनं (उपमेयस्यापि तादृशगुणसम्बन्धं ख्यापयत् तस्यासाधारण्यं व्याहन्तीति) उपमानप्रतिकूलतया प्रतीपमिति तात्पर्य्यम्। तथाच सूत्रे 'उपमेयता' -इत्युपलक्षणम् उपमानतापि बोध्या।

(१८९) (पूर्व्वम् अहमेवेत्यादिना असाधारण्याभिधानेन) सम्भावनानर्हम्।

(१९०) अन्येन अप्रस्तुतेन। ऐकात्म्यम् ऐकरूपम्। बध्यते प्रतिपाद्यते। योगात् सम्बन्धात्। तुल्यतया विवक्षितयोर्वस्तुनोर्मेलनात् तयोरुभयोरेव एकतया प्रतीतौ सामान्यमिति फलितार्थः। मीलिते तु एकस्यैव प्रतीतिरन्यस्य तु तिरोधानमिति ततो भेदः। रूपकातिशयोक्त्योश्च उपमेयस्य उपमानतया प्रतीतिरत्र तु न तथेति ततोऽपि भेद इति उद्योतः।

Digitized by Google

ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम्॥४८॥

अताद्दशमपि(१६१) ताद्दशतया विवक्षितं यत्, अप्रस्तुतार्थेन संघक्तमपरित्यक्तनिजगुणमेव (१६२) तदेकात्मतया निबध्यते, तत् (समानगुणनिबन्धनात्) सामान्यम्। उदाहरणम्,

मलयज-रस-विलिप्त-तनवो नव-हार-लता-विभूषिताः
सिततर-दन्तपत्र-कृत-वक्त्र-रुचो रुचिरामलांशुकाः।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥

अत्र प्रस्तुततदन्ययोः(१६३) अन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः, अत एव पृथग्भावेन न तयोः उपलक्षणम्। यथा वा(१६४),

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि।
भृङ्गाः सहेलं यदि नापतिष्यन् को वेदयिष्यन्नवचम्पकानि॥

अत्र निमित्तान्तरजनितापि (१६५) नानात्वप्रतीतिः

(१६१) अताद्दशमपि वस्तुतोऽप्रस्तुतार्थासमानमपि।

(१६२) तेन वक्ष्यमाणात् तद्गुणालङ्कारात् भेदः।

(१६३) प्रस्तुताप्रस्तुतयोरभिसारिकाचन्द्रिकयोः। उपलक्षणम् प्रतीतिः।

(१६४) उत्तरकालं भेदप्रतीत्या पूर्व्वकालिकाया ऐक्यप्रतीतेर्बाध्यमानत्वे अपि एतत् सम्भवतीत्याह यथा वेति।

(१६५) निमित्तान्तरं भृङ्गपतनम्। प्रतीतेरित्यस्य उत्पन्नाया इति आदिः। अयं भावः, व्याघोटनुत्पादः उत्पन्नायास्तु नानुत्पादः सम्भवतीति पूर्व्वम् उत्पन्नया ऐक्यप्रतीत्या एव सामान्यालङ्कारस्य सम्भव इति।



Digitized by Google

प्रथमप्रतिपन्नमभेदं न बुद्दसितुमुत्सहते, प्रतीतत्वात्तस्य, प्रतीतेश्च बाधायोगात् ।

विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः(१९६) ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥४९॥
अन्यत्प्रकुर्व्वतः कार्य्यमशक्यान्यस्य वस्तुनः ।
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥५०॥

प्रसिद्धाधारपरिहारेण यत्, आधेयस्य विशिष्टा स्थितिः अभिधीयते, स प्रथमो विशेषः । उदाहरणम्,

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥

एकमपि वस्तु यत् एकेनैव स्वभावेन युगपदनेकत्र वर्त्तते, स द्वितीयः । उदाहरणम्,

सा वसइ तुम्ह हिअए, सा चेअ अच्छीसु, सा अ वअणेसु ।
अम्हारिसाणं सुन्दर ! ओआसो णत्थि पावाणं (१९७) ॥

---

(१९६) आधारान्तरगतत्वेनाधेयवर्णनेऽप्ययं, यथा, गतेऽपि सूर्य्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः इति उद्योतः । एकात्मेति एक आत्मा स्वभावो यस्याः सा, तेन यथासङ्ख्यात् भेदः, युगपदिति पर्य्यायनिवारणाय । तथैवेति धुनोति चासिं तनुते च कीर्त्तिमित्यादिसमुच्चयव्यावर्त्तनायेति प्रदीपः ।

(१९७) सा वसति तव हृदये सा चैवाक्षिषु सा च वचनेषु ।
अस्मादृशानां सुन्दर ! अवकाशो नास्ति पापानामिति सं० ।

यदपि किञ्चिद्रूपेनारभमाणस्तेनैव यत्नेनाशक्यमपि कार्य्यान्तरमारभते, सोऽपरो विशेषः। उदाहरणम्,

स्फुरदद्भुतरूपमुत्प्रताप-ज्वलनं त्वां सृजताऽनवद्यविद्यम्।
विधिना ससृजे नवो मनोभू-र्भुवि सत्यं सविता वृहस्पतिश्च॥

यथा वा,

गृहिणी सचिवः सखी मिथः, प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किन्न मे हृतम्॥

सर्वत्र (१६८) एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेन अवतिष्ठते, तां विना प्रायेणालङ्कारत्वायोगात्. अत एवोक्तं,

सैषा सर्वत्र वक्रोक्तिः, अनयाऽर्थो विभाव्यते (१६६)।
यत्नोऽस्यां कविना कार्य्यः, कोऽलङ्कारोऽनया विना-इति॥

स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।

---

(१६८) ननु आधारं विना आधेयस्यावस्थानम्, एकस्य एकदा अनेकत्रावस्थानम्, एकेन यत्नेन कार्य्यद्वयकरणञ्च वस्तुतो नोपपन्नमिति कथमेतेषामलङ्कारत्वमिति पूर्व्वपक्षे उत्तरम् सर्व्वत्रेति। अयमत्र उत्तराभिप्रायः, वास्तविकानामेतेषामनुपपद्यमानत्वमस्तु, वैचित्र्यविशेषप्रतिपत्तये प्रतिभाकल्पितानामेतेषामलङ्कारत्वे का हानिः, कविर्हि गिरां वास्तविको नाधारः, किन्तु आधारतया कविसमयसिद्ध इति तादृशाधारं विना आधेयानां गिरामवस्थितिर्नानुपपन्नेति। अतिशयोक्तिः अतिशयेन (वैचित्र्यविशेषप्रतिपत्तये) लोकसीमातिक्रमेण उक्तिः कथनम्। स्वभावोक्त्यादौ अस्या असम्भवात् प्रायेणेति उक्तम्।

(१६६) वक्रोक्तिः वक्रा वैचित्र्याधायिका लोकातिशायिनी उक्तिः कथनम्। विभाव्यते अलङ्क्रियते।

**वस्तु तद्गुणतामेति, भण्यते स तु तद्गुणः ॥५१॥**

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसम्पदोपरक्तं तत्प्रतिभासमेव (२००) यत्समासादयति, स तद्गुणः, (तस्य अप्रकृतस्य गुणोऽत्रास्तीति)। उदाहरणम्,

विभिन्नवर्णा गरुडाग्रजेन सूर्य्यस्य रथ्याः परितस्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता (२०१) ॥

**तद्रूपाननुहारश्चेदस्य, तत् स्यादतद्गुणः ।**

यदि तु तदीयं (२०२) वर्णं सम्भवन्त्यामपि योग्यतायाम् इदं न्यूनगुणं न गृह्णीयात्, तदा भवेदतद्गुणो नाम। उदाहरणम्,

धवलोऽसि जइवि सुंदर! तइवि तुए मज्झ रंजिअं हिअअं ।

---

(२००) तत्प्रतिभासं तद्रूपताम् । मीलिते धर्म्मिणोऽपि तिरस्कारः, सामान्ये अपरित्यक्तनिजगुणस्यापृथक्प्रतिभासः, इह तु गुणमात्रस्यैव तिरस्कारः, धर्म्मिणश्च पृथगवभास इति भेद इति उद्योतः ।

(२०१) तथाचात्र गरुडाग्रजवर्णस्याश्विः, नीलरत्नवर्णस्याश्विश्चेति तद्गुणद्वयं बोध्यम् ।

(२०२) तदीयं प्रस्तुतसम्बन्धि। योग्यतायां तद्वर्णग्रहणोपाये । इदम् अप्रस्तुतम् कर्तृ। गुणाग्रहणरूपविच्छित्तिविशेषाश्रयणात् विशेषोक्तेर्भेद इति दर्पणः ।

रागभरिए वि हिअए सुहअ ! णिहितो ण रत्तोऽसि(२०३)।।

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः ।

किञ्च तदिति अप्रकृतम्, अस्येति च प्रकृतमत्र निर्दिश्यते, तेन यत्, अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् न अनुविधीयते, सोऽतद्गुण इत्यपि प्रतिपत्तव्यम् (२०४)। यथा,

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ।।

**यद्यथा साधितं केनाप्यपरेण तदन्यथा ।।५२।।**
**तथैव यद्विधीयेत, स व्याघात इति स्मृतः ।**

येनोपायेन यत् एकेनोपकल्पितं, तस्यान्येन जिगीषुतया तदुपायकमेव यत् अन्यथाकरणं, स (स्वसाधितवस्तुव्याहति-हेतुत्वात्(२०५)व्याघातः । उदाहरणम्,

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ।।

**सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ।।५३।।**

---

(२०३) धवलोऽसि यद्यपि सुन्दर ! तथापि त्वया रञ्जितं मम हृदयम्। रागभरितेऽपि हृदये सुभग ! निहितो न रक्तोऽसीति सं०। उत्तरार्द्धमेवोदाहरणम्। तत्र स्वहृदयज्ञापनमेवाभिप्रेतमिति हृदयं प्रकृतम् । श्लेषोऽत्र मूलम् ।

(२०४) तथा च कारिकायां तद्रूपेत्यत्र तत्पदम्, अस्येत्यत्र चेदम्पदं प्रस्तुताप्रस्तुतोभयपरम् बोध्यम् ।

(२०५) स्वेन उपायेन । हेतुत्वादिति उपायस्येति शेषः ।

Digitized by Google

एतेषां (समनन्तरमेवोक्तस्वरूपाणां) यथासम्भवमन्योन्य-निरपेक्षतया यत् एकत्र (शब्दभाग एव, अर्थविषय एव, उभयत्रापि वा) अवस्थानं, सा (एकार्थ(२०६)-समवाय-स्वभावा) संसृष्टिः । तत्र शब्दालङ्कारसंसृष्टिः यथा,

वदनसौरभ-लोभ-परिभ्रमद्भ्रमर-सम्भ्रम-सम्भृत-शोभया ।
चलितया विदधे कल-मेखला-कलकलोऽलकलोलदृशाऽन्यया ॥

अर्थालङ्कारसंसृष्टिस्तु,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । [उत्०]
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ [उप०]

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः; उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दार्थालङ्कारयोस्तु संसृष्टिः,

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णं ।
तरुणाणं हिअअलुडिं परिसक्कन्तीं णिवारेइ(२०७) ॥

अत्रानुप्रासो रूपकञ्चान्योन्यानपेक्षे, संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

---

(२०६) एकस्मिन् अर्थे (वाक्ये श्लोकरूपे छन्दसि वा) समवायः (शब्दार्थालङ्कारयोः सम्बन्धः) एव स्वभावः (स्वरूपं) यस्याः सा, संसृष्टिरलङ्कार इत्यर्थः । लौकिकानां कटककुण्डलादीनां समवधानं न चमत्कारान्तरं जनयतीति तत् अलङ्कारान्तरं माऽस्तु, अलौकिकानां पुनः काव्यालङ्काराणां समवधानं चमत्कारान्तरमादधदलङ्कारान्तरमेव इत्यभिप्रायः ।

(२०७) सो नास्त्यत्र ग्रामे य एनां महमहीयमानलावण्याम् । तरुणानां

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः ।

एते एव (२०८) यत्रात्मनि अनासादितस्वतन्त्रभावाः परस्परम् अनुग्राह्यानुग्राहकतां दधति, स (एषां सङ्कीर्य्यमाणस्वरूपत्वात्, सङ्करः । उदाहरणम्,

आत्ते सीमन्तरत्ने मरकतिनि, हृते हेमताटङ्कपत्रे,
लुप्तायां मेखलायां, झटिति मणि-तुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या, त्वदरिमृगदृशामित्वरीणामरण्ये,
राजन्! गुञ्जाफलानां स्रज इति शवरा नैव हारं हरन्ति ।। [द्वयोः]

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं, तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः(२०९) । यथा वा,

---

हृदयलुण्ठाकीं परिष्वङ्क्ष्यमाणाम् निवारयतीति सं० । महमहीयमानम् उत्सवोत्त्वायमानम् । परिष्वङ्क्ष्यमाणां सङ्क्रन्तीम् । निवारयति उपभोगेच्छात इति शेषः । हृदयलुण्ठाकीमित्यत्र रूपकम् ।

(२०८) एते अलङ्काराः । स्वतन्त्रभाव इतरानपेक्षिता । अनुग्राह्यानुग्राहकता स्वतःप्रवृत्तानां यथाकथञ्चिदुपकार्य्योपकारकभावः, तेन यत्र एकस्य निष्पत्त्यर्थमेवापरः प्रवृत्तस्तत्र नायं सङ्करः, यथा, सद्वंशमुक्तामणिरित्यादौ रूपकनिष्पत्त्यर्थमेव श्लेषस्य प्रवृत्तेर्न श्लेषरूपकयोः सङ्करः, किन्तु रूपकमेव । स्वतःप्रवृत्तानामलङ्काराणां यथाकथञ्चित् परस्परमुपकार्य्योपकारकभावः सङ्कर इति फलितम् ।

(२०९) बिम्बोष्ठकान्त्या शोणामिति तद्गुणः स्वकतवैचित्र्यविशेषप्रतिपत्तये स्वत एव प्रवृत्तः, गुञ्जाफलानां स्रज इतिभ्रान्तिमत्त्वम् स्वरूपनिष्पत्तावनुरुणद्धि, भ्रान्तिमत्साहाय्येन च तद्गुणस्य चारुत्वातिशय इत्यभिप्रायः ।

Digitized by Google

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकर-कपालाङ्कित-तले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति(२१०) ॥ [शङ्क०]

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते (२११)। कलङ्क एवाक्षवलयमिति-

(२१०) भाभिरुपलक्षितः । करः किरणाः हस्तश्च । वियोगी विरही (वियोक्तुं शीलमस्येति) विषयश्च । व्यापत्तिर्विनाशः । वैराग्यम् विगतरक्तता विषयस्पृहाराहित्यञ्च। विशदः शुभ्रः शुद्धश्च। पितृवनम् श्मशानम् । अत्र योगिधर्मसमारोपात् स्थितापि समासोक्तिरतिस्फुटत्वात् प्रकाशकृता नोक्तेति प्रदीपः । वस्तुतः व्योम्नीति भाभिरिति च विशेषणम् योगिनि न सम्भवतीति नात्र समासोक्तिरिति । पितृवन इव व्योम्नीति आधारयोरुपमासत्त्वात् तारापरिकरकपालेत्यत्रापि आधेययोरुपमैव न तु रूपकम् ।

(२११) चन्द्रे योगिधर्मसमारोपाय स्वकृतचारुताप्रतीतये च स्वतःप्रवृत्तः कलितवैराग्यविशद इति श्लेषः, वियोगिव्यापत्तेरिवेत्युत्प्रेक्षामुपकरोति, उक्तश्लेषसमधिगतविषयनिस्पृहत्वरूपद्वितीयार्थमवलम्ब्यैव उत्प्रेक्षायाः प्रवृत्तेः । तया च उत्प्रेक्षया स श्लेष उपक्रियते, तया द्वितीयार्थानुसन्धानवशेन तस्य स्फुटं प्रतीयमानत्वात् । एवं जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति च उपमा, करधृतकलङ्काक्षवलय इति रूपकञ्च तं श्लेषमुपकरोति ; स च श्लेषः ते उपमे तत् रूपकञ्च उपकरोति, यतः उपमादिवशागतं जटादिमत्त्वं श्लेषवशागतस्य वैराग्यस्योपकरणम्, जटादिधारणस्य च वैराग्येणैव सम्भव इति। यदि च पितृवन इव व्योम्नीत्युपमानिष्पत्त्यर्थमेव तारापरिकरकपालेत्युपमा नोपात्ता, किन्तु स्वतश्चमत्कारितया इति विभाव्यते, तदा अनयोरुपमयोरपि परस्परमनुग्राह्यानुग्राहकत्वमेवेति अत्रापि सङ्कर इति ।

रूपकपरिग्रहे(२१२)करस्थतत्वमेव साधकप्रमाणतां प्रतिपद्यते, अस्य हि रूपकत्वे तिरोहितकलङ्करूपम् अक्षवलयमेव मुख्यतयाऽवगम्यते, तस्यैव च करग्रहणयोग्यतायां सार्व्वत्रिकी प्रसिद्धिः; श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव

(२१२) कलङ्कएवाक्षवलयमिति कलङ्कोऽक्षवलयमिवेति चोभयरूपस्यापि समासस्य सम्भवेन किम् करस्थतकलङ्काक्षवलयमित्यत्रांशे वक्ष्यमाणोऽनयोः सन्देहसङ्करः उत रूपकमेवेति संशयं निराकरोति कलङ्क इति । इदमत्र निराकरणम्, अलङ्काराणामेकतरसाधकबाधकप्रमाणाभावे एव सन्देहसङ्करो भवति, न चात्र तथा, करस्थतेतिविशेषणस्यैव रूपकसाधकत्वात्, तथा हि उपमायाम् (चन्द्रसदृशं मुखम् इति रीत्या) सादृश्यांशे उपमानं विशेषणीकृत्य उपमेयमेव प्राधान्येन निर्दिश्यते इति उपमेये मुख्यतया सम्भवदेव विशेषणमुपादीयते, रूपके तु (चन्द्र एव मुखमितिरीत्या) उपमेयं तिरोधाय उपमानमेव प्राधान्येन निर्दिश्यते इति उपमाने मुख्यतया अन्वययोग्यमेव विशेषणमुपादीयते, तच्च विशेषणम् उपमेये कथञ्चिदुपचर्य्यते इति नियमः, एवञ्च प्रकृते करस्थतत्वविशेषणम् उपमानीभूतेऽक्षवलय एव मुख्यतया सम्भवत् रूपकमेव ग्राहयति । कलङ्कस्य मण्डलात्मकमूर्त्यैव धारणात् कलङ्के करस्थतत्वमसदेव, तथापि करशब्दश्लेषवशादुपस्थितस्य किरणस्य कलङ्काधारमण्डलसान्निध्यसम्बन्धेन कलङ्काधारत्वमुपचारेण परिकल्प्य उपमेये कलङ्के करस्थतत्वं सम्बोध्यते । यद्यत्र उपमा स्यात्, तदा कलङ्क एव मुख्यतया उपस्थीयेत, तथा सति च मुख्यतया उपस्थितेऽपि तस्मिन् करस्थतत्वविशेषणम् गौणतयैवान्वियात्, नच तद्युक्तम्, मुख्येन मुख्यान्वयसम्भवे गौणान्वयस्यान्याय्यत्वादिति। श्लेषच्छायेति, किरणात्मकरूपद्वितीयार्थस्य असद्रूपतया प्ररोहाभावात् वास्तविको नात्र श्लेष इति श्लेषच्छायेत्युक्तम् । प्रत्यासत्त्या कलङ्काधारमण्डलस्य सान्निध्यसम्बन्धेन । उत्कटतया मुख्यतया ।



Digitized by Google

प्रत्यासत्त्या उपचर्य्य योज्यते, शशाङ्केन केवलं कलङ्कस्य मूर्त्त्यैव उद्वहनात्; कलङ्कोऽन्यवलयमिवेति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः, नचास्य करस्थतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्। एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि परिदृश्यते। यथा,

राजति तटीयमभिहत-दानव-रासाऽतिपाति-सारावनदा ।
गजता च यूथमविरत-दान-वरा साऽतिपाति सारा वनदा (२१३) ॥

अत्र यमकमनुलोमप्रतिलोमश्च (२१४) चित्रभेदः पादद्वयगते परस्परापेक्षे ॥

---

(२१३) अभिहतोऽभिघातं प्राप्तः दानवानां रासः सिंहनादशब्दो यस्याम् सा अभिहतदानवरासा। अतिपाती शीघ्रगामी सारावश्च (आरावेण शब्देन सहितः) नदो यस्याम् सा अतिपातिसारावनदा। सा गजता (गजसमूहः) यूथम् (स्वकुलम्) अतिपाति (अतिशयम् रक्षति) चेत्यन्वयः। अविरतेन दानेन (मदजलेन) वरा (श्रेष्ठा) अविरतदानवरा। सारा बलिष्ठा। वनदा (वनं द्यति खण्डयति) वनखण्डिका।

(२१४) अत्र द्वितीयचतुर्थपादयोः प्रथमाक्षरमारभ्य अनुलोमेन (अनुक्रमेण) पठने यादृक्, तयोरन्त्याक्षरमादाय प्रतिलोमेन (व्युत्क्रमेण) पाठेऽपि तादृगेवायातीति। पादद्वयगतञ्च पादद्वयगतश्चेतिरीत्या एकशेषे 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' (१।२।६९ पा॰सू॰) इत्यनेन क्लीबमेव शिष्यते, अतः पादद्वयगते इति नपुंसकतोपपत्तिः, एवं परत्र। पादयमकानुलोमप्रतिलोमयोः प्रत्येकमेव दुष्करतया विदग्धमनोऽनुरञ्जकम्, तयोः साहित्यन्तु अतिदुष्करतया अतिशयेन विदग्धमनोऽनुरञ्जकमिति परस्परचारुत्वातिशये परस्परमपेक्षेते इत्यभिप्रायः।

Digitized by Google

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥५४॥**

द्वयोर्बहूनां वा अलङ्काराणाम् एकत्र समावेशेऽपि विरोधात् न(२१५) यत्र युगपदवस्थानं, नचैकतरस्य परिग्रहे साधकं, तदितरस्य परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः सङ्करः, समुच्चयेन सङ्करस्यैवाक्षेपात् । उदाहरणम्,

जह गहिरो जह रअणणिब्भरो
जह अ णिम्मलच्छाओ ।
तह किं विहिणा एसो
सरसवाणिओ जहणिही ण किओ(२१६) ॥

अत्र, समुद्रे प्रस्तुते (विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः, किमसौ समासोक्तिः, किम् (अब्धेरप्रस्तुतस्य सुखेन, कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेः) इयमप्रस्तुतप्रशंसा :-इति सन्देहः । यथा वा,

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुना विनिरुद्धाशमविशीर्णमिदन्तमः ॥

---

(२१५) विरोधात् अहिनकुलयोरिव एकत्रावस्थानासहनस्वभावत्वात् । समुच्चयेन 'एकस्य च' इति चकारेण । आक्षेपात् पूर्व्वकारिकातोऽनुवृत्तेः ।

(२१६) यथा गभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः । तथा किं विधिना एषः सरसपानीयो जलनिधिर्न कृतः ? इति सं० । पुरुषपक्षे सरसपानीयशब्देन परोपभोग्यवस्तुमत्त्वम् लक्ष्यते इति महेश्वरः ।

अत्र किं (कामस्योद्दीपकः कालो वर्त्तते इतिभङ्ग्यन्तरेण अभिधानात्) पर्य्यायोक्तम्, उत, (वदनस्येन्दुविम्बतया अध्यवसानात्) अतिशयोक्तिः, किंवा (एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशात्) रूपकं, अथवा (तयोः समुच्चयविवक्षायां(२१७) दीपकम्, अथ वा तुल्ययोगिता, किमु (प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ) समासोक्तिः, आहोस्वित् मुखनैर्मल्यप्रस्तावात्) अप्रस्तुतप्रशंसा :-इति बहूनां सन्देहादयमेव सङ्करः । यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्र एकतरस्य निश्चयात् न संशयः । न्यायश्च साधकत्वम् (अनुकूलता) दोषोऽपि बाधकत्वं (प्रतिकूलता) । तत्र

सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः

-इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिर्वक्त्र एवानुकूल्यं भजते इत्युपमायाः साधकं, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्य अबाधकता(२१८) ।

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः

---

(२१७) समुच्चयार्थकचकारादिकल्पनया विम्बं प्रसीदति, एतदक्त्रञ्च प्रसीदतीति विवक्षायाम् एकतरस्यैव प्रकृतत्वे दीपकम्, उभयोरेव प्रकृतत्वे तुल्ययोगितेत्यर्थः। प्रदोषसमये वर्णनीये इति शेषः। विम्बपक्षे आशा दिक् । तमोऽन्धकारः । वक्त्रपक्षे आशा अभिलाषः, तमो विरहजन्यमूढ़ता ।

(२१८) वक्त्रे वक्त्रस्य प्राधान्येनोपस्थितौ, एवं परत्रापि । तथा आनुकूल्यानुरूपा । प्रतिकूलेति हासपदस्योपचारात् विकाशेऽपि बहुशः प्रयोगादिति शेषः ।

Digitized by Google

-इत्यत्रापरत्वमिन्दोरनुगुणं (२१९) न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम्।

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्।

-इत्यत्र पुनरालिङ्गनमुपमां निरस्यति, सदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गनस्यासम्भवात्।

पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः।

-इत्यत्र मञ्जीरशिञ्जितम् अम्बुजे प्रतिकूलम्, असम्भवादिति रूपकस्य बाधकं, न तु(२२०), पादेऽनुकूलमित्युपमायाः साधकमभिधीयते, विघ्नुपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः। एवमन्यत्रापि सुधीभिः परीक्ष्यम्।

**स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम्।**

---

(२१९) यतो निर्विशेषणस्यापरशब्दस्य स्वविशेष्यीभूतपदार्थापेक्षया अपरत्वबोधकतानियमः, यथा अयमपरः पण्डित इत्यत्र पण्डितान्तरापेक्षयैवापरत्वं प्रतीयते, तथा अपरः शीतांशुरित्यत्रापि शीतांश्वपेक्षयैवापरत्वप्रतीतिरुचितेति। प्रतिकूलमिति सामान्यशब्दस्य विशेषपरत्वमभ्युपगम्य अपरशब्दस्य वक्त्रापेक्षया अपर इति समुदितस्यार्थस्यापि कल्पनसम्भवात्।

(२२०) ननु मञ्जीरशिञ्जितं यथा अम्बुजप्रतिकूलत्वेन बाधकतया व्यपदिश्यते, तथा पादेऽनुकूलत्वेन साधकतयापि कथं न व्यपदिश्यते इति शङ्कां निराकरोति न त्विति। इदं निराकरणम्, प्राधान्यं हि व्यपदेशनियामकं, प्राधान्येन व्यपदेशा भवन्तीति नियमात्, प्राधान्यञ्च बलवत्त्वम्, तच्च प्रकृते

Digitized by Google

व्यवस्थितञ्च

अभिन्न एव पदे स्फुटतया यत् उभावपि शब्दार्थालङ्कारौ (२२१) व्यवस्थां समासादयतः सोऽप्यपरः सङ्करः। उदाहरणम्,

स्पष्टोल्लसत्किरण-केसर-सूर्य्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम्
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि सञ्चुकोच ॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ।

तेनासौ त्रिरूपः परिकीर्त्तितः ॥५५॥

तदयमनुग्राह्यानुग्राहकतया, सन्देहेन, एकपदप्रतिपाद्यतया च व्यवस्थितत्वात्त्रिप्रकारएव सङ्करो व्याकृतः। प्रकारान्तरेण तु (२२२) न शक्यो व्याकर्त्तुम्, आनन्त्यात्तत्प्रभेदाना-

---

(स्वपक्षरक्षकसैन्यात् परपक्षनिराकर्त्तुः सैन्यस्येव) उपमासाधकात् रूपकबाधकस्यैव बलीयस्त्वमिति बाधकतयैव व्यपदेशो युक्त इति। विधेः परपक्षविधानस्य (प्रकृते रूपकविधानस्य)। उपमर्द्दिनः निराकर्त्तुः। उत्कटत्वेन बलीयस्तया।

(२२१) शब्दार्थालङ्काराविति‍उपलक्षणम्, कलकलोटलकलोलदशाटव्येत्यादौ शब्दालङ्कारयोरनुप्रासयमकयोः, वक्त्रारविन्दमधुलुब्धमधुव्रतास्य धावन्त्यमी वकुलवञ्जुलकुञ्जमध्ये इत्यादावर्थालङ्कारयोः रूपकातिशयोक्त्योस्तथायमेव सङ्करोऽवधेयः।

(२२२) "संसृष्टिरिति विज्ञेया सर्व्वालङ्कारसङ्करः। सा तु व्यक्ता

Digitized by Google

मिति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषो-ऽलङ्काराः।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशय-हेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य कश्चिच्चोभयस्य? -इति चेत्। उक्तम् [२४१पृ०] अत्र, यथा काव्ये दोषगुणा-लङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेका-वेव प्रभवतः, निमित्तान्तरस्याभावात्, ततश्च योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते, स तदलङ्कारो व्यवस्थाप्यते- इति, एवञ्च यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयो-र्भावाभावानुविधायितया उभयालङ्कारौ, तथा शब्दहेतु-कार्थान्तरन्यासप्रभृतयोऽपि (२२३) द्रष्टव्याः, अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते इति वाच्यालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः। 'योऽलङ्कारो यदाश्रितः। स तदलङ्कार इत्यपि कल्पनायाम् (२२४) अन्वयव्यतिरेकावेव समाश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयि-

---

तथाऽव्यक्ता व्यक्ताव्यक्तेति च त्रिधा। तिलतण्डुलवद्व्यक्ता छायादर्शवदेव च अव्यक्ता क्षीरजलवत् पांशुपानीयवच्च सा। व्यक्ताव्यक्ता च संसृष्टि-र्नरसिंहवदिष्यते। चित्रवर्णवदन्यस्मिन् नानालङ्कारसङ्करे" इति भोज-राजोक्तप्रकारेण।

(२२३) "उत्पादयति लोकस्य प्रीतिं मलयमारुतः। ननु दाक्षिण्य-सम्पन्नः सर्व्वस्य भवति प्रियः" इति दाक्षिण्यशब्दमूलोऽर्थान्तरन्यासः। प्रभृतिपदात् सकलकलं पुरमेतत् जातमित्युपमादीनां सङ्ग्रहः।

(२२४) अलङ्कारसर्व्वस्वकाराद्यभिमतायाम्। तत् पूर्व्वोक्तम्। आश्रयणाम्

भावस्याभावादित्यलङ्काराणां यथोक्तनिमित्त एव परस्पर-व्यतिरेको ज्यायान्॥

**एषां दोषा यथायोगं सम्भवन्तोऽपि केचन।**
**उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः॥५६॥**

तथा हि अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधः (२२५) इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धताम्, अपुष्टार्थत्वं, प्रतिकूलवर्णताञ्च यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात्। क्रमेणोदाहरणम्,

चक्री चक्रारपङ्क्तिं, हरिरपि च हरीन्, धूर्जटिर्धूर्ध्वजान्तान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः, कूवराग्रं कुवेरः।
रंहः सङ्घः सुराणां, जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः(२२६)॥

अत्र कर्तृकर्मप्रतिनियमेन (२२७) स्तुतिः अनुप्रासानुरोधेनैव कृता, न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः॥

---

अन्वयव्यतिरेकरूपम्। विशिष्टस्य आधाराधेयत्वरूपविशेषवत्तः। रूभावादिति सम्भावनादिरूपस्य उत्प्रेक्षादेरात्मादिगतत्वेनार्थाश्रितत्वविरहात्।

(२२५) वृत्तेः उपनागरिकादेः (२२८ पृ०), विरोधः प्रतिकूलता।

(२२६) अत्र आर-धुर्-अक्ष-कूवर-रंहःशब्दाः क्रमेण कीलक-यानमुख-चक्र-युगन्धर-वेगार्थकाः। हरिरिन्द्रः। हरीन् रूश्वान्।

(२२७) चक्री चक्रारपङ्क्तिं स्तौतीतिरीत्या।

भण तरुणि ! रमणमन्दिरम् आनन्दस्यन्दिसुन्दरेन्दुमुखि !
यदि सल्लीलोल्लापिनि ! गच्छसि तत् किं त्वदीयं मे ॥
अनणुरणन्मणिमेखलम् अविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते(२२८) ॥

अत्र वाच्यस्य विचिन्त्यमानं न किञ्चिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम्(२२९) ।

अकुण्ठोत्कण्ठयेति [१५३पृ०११प०], अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या (२३०) विरुध्यते इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ॥

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा,
भुजङ्गमस्येव मणिः सदम्भाः, ग्राहावकीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः(२३१) ॥

---

(२२८) भर्तृगृहगमनाय कृतावधारणां प्रति उपनायकस्योक्तिरियम् । युग्मम् (श्लोकद्वयात्मकम्) इदम् । हे तरुणि ! यदि रमणमन्दिरं गच्छसि, तत् (तदा) त्वदीयं परिसरणम् (गमनम्) मे (मम) अकारणं (निमित्तं विना) रणरणकम् (उत्कण्ठाम्) किम् (कुतः) कुरुते, (तत्) भण (वद) इत्यन्वय इति चन्द्रिका ।

(२२९) अत्र परिसरणविशेषणानि, 'त्वदीयं परिसरणमकारणं रणरणकं कुरुते-इति-वाच्यार्थस्य, तेन व्यङ्ग्यस्य भाविविरहस्य च न किञ्चिदुपकारे वर्त्तन्ते, केवलमनुप्रासार्थमेव तान्युपात्तानीति भावः ।

(२३०) अष्टमोल्लासे गुणविवेचनप्रस्तावानुसारेण ।

(२३१) सदम्भा इति पदत्रयस्य यथाक्रममिदमर्थत्रयम्, तेजोविशेषसहितः, समीचीनजला, दुष्टाभिसन्धानयुक्ताश्चेति ।

उपमायाम्, उपमानस्य जाति-प्रमाण-गतन्यूनत्वम्, अधिकता वा तादृशी अनुचितार्थत्वं दोषः ; धर्म्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वञ्च न व्यभिचरतः। क्रमेणोदाहरणम्,

चाण्डालैरिव युष्माभिः साहसं परमं कृतम् । [जा०न्यू०]
वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।। [प्र०न्यू०]
अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः।। [जा०अ०]
पातालमिव ते नाभिः ; स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ।। [प्र०अ०]

अत्र चाण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थितः(२३२) इत्यनुचितार्थता ।।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ।। [ध०न्यू०]

अत्रोपमानस्य मौञ्जीस्थानीयस्तड़िल्लक्षणो धर्म्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

स पीतवासाः प्रगृहीतशार्ङ्गो
मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां
संसृज्यमानः शशिनेव मेघः ।। [ध०अ०]

---

(२३२) निन्दोपहासादिप्रतीतेरिति प्रदीपः ।

Digitized by Google

अत्रोपमेयस्य(२३३)शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते-इत्यधिकपदत्वम् ॥

लिङ्गवचनभेदोऽपि (२३४) उपमानोपमेययोः साधारणं चेत् धर्म्ममन्यरूपं कुर्य्यात्, तदा एकतरस्यैव तद्धर्म्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्म्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम्। यथा,

चिन्तारत्नमिव च्युतोऽपि करतो धिक् मन्दभाग्यस्य मे। [लि॰भे॰]

शक्तवो भक्षिता देव शुद्धाः कुलवधूरिव। [व॰भे॰]

यत्र तु नानात्वेऽपि लिङ्गवचनयोः, सामान्याभिधायिपदं

---

(२३३) उपमेयस्य श्रीकण्ठस्य।

(२३४) साधारणधर्मवाचकपदस्य, विभिन्नलिङ्गवचनयोरुपमानोपमेययोरेकतरानुसारिलिङ्गवचनत्वे, भिन्नलिङ्गं भिन्नवचनञ्चेति दोषद्वयं भोजराजादिसम्मतम्, तद्बीजन्तु, यल्लिङ्गवचनानुसारि साधर्म्यं स्यात्, तेनैव तस्यान्वयः स्यात्, न तूभाभ्यामपि; विशेषणविशेष्यभावान्वये समानलिङ्गवचनयोस्तन्त्रत्वात्, उभयत्र (उपमानोपमेययोः) अन्वयाभावे च तस्य साधर्म्यत्वमेव व्याहन्येत, तत्स्वरूपत्वात् तस्य, तदभावे च कथमुपमा? उपात्तस्य साधारणधर्मस्य एकत्र (उपमेये उपमाने वा) अन्वयबलेन, अपरत्र प्रतीतिबलेन सम्बन्धमङ्गीकृत्य उपमानिर्व्वाहस्तु न सम्यक्, सर्व्वत्र झटिति प्रतीत्यनुदयादिति। एतच्च दोषद्वयं भग्नप्रक्रमतायामेवान्तर्भवति, उक्तरीत्या उपमाने प्रतीयमानतया वाच्यतया वा उपक्रान्तस्य साधर्म्यस्य उपमेये तदन्यथा (वाच्यतया प्रतीयमानतया वा) उपसंहारादिति प्रकाशकृत्सम्मतम् इति तात्पर्य्यार्थः।

Digitized by Google

स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथापि अस्य अनुगमक्षमस्वभावत्वात्(२३५)। यथा,

गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः ।
तद्देशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः(२३६) ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥

कालपुरुषविध्यादिभेदेऽपि न तथा(२३७)प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः। यथा,

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमात् यामिनीयामात् प्रसादमिव चेतना ॥

---

(२३५) भोजराजादयस्तु, पर्य्यायान्तराभावे लिङ्गवचनभेदो न दोषाय इत्याहुः, यथा, यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च। स लोहकारभस्त्रेव श्वसन्नपि न जीवति। अत्र भस्त्रायाः पर्य्यायान्तराभावादिति। दण्डिनापि "न लिङ्गवचने भिन्ने न हीनाधिकतापि वा। उपमादूषणायालं यत्रोद्वेगो न धीमताम्। प्राणा इव प्रियोऽयं मे, विद्या धनमिवार्ज्जिता। भवानिव महीपाल ! देवराजो विराजते। अलमंशुमतः कक्षामारोढुं तेजसा नृपः" इत्यनेनैषोऽर्थोऽङ्गीकृतः।

(२३६) मधुरतया भृतः पूरितः, पक्षे मधुरतां धारयन्ति ये, ते मधुरताभृतः। दधते इति दध-धाञ-धात्वोरेकवचनबहुवचननिष्पन्नम्।

(२३७) कालो भूतभविष्यद्वर्त्तमानरूपः। पुरुषः प्रथममध्यमोत्तमरूपः। विधिः प्रवर्त्तनारूपः लिङादिप्रत्ययार्थः। तथा कालादीनामैक्यस्थल इव। अस्खलितरूपतया अपरिवर्त्तितस्वरूपेण। विश्रान्तिं परिसमाप्तिम्। प्रथमं यथा उपमानं प्रतीयते, चरमं तथा नोपमेयं प्रतीयते इति सूत्रार्थः।

Digitized by Google

अत्र चेतना प्रसादमाप्नोति, न पुरा आपेति कालभेदः।

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ।।

अत्र, लता विभ्राजते नतु विभ्राजसे इति सम्बोध्यमान-निष्ठस्य परभागस्य(२३८)असम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्त्तिरित्यादौ च गङ्गा प्रवहति न तु प्रवहतु-इति अप्रवृत्तप्रवर्त्तनात्मनो विधेः। एवञ्जातीयकस्य चान्यस्यार्थस्य(२३९) उपमानगतस्यासम्भवाद्विध्यादिभेदः ।।

"ननु समानम् उच्चारितं प्रतीयमानं धर्म्मान्तरम् उपादाय पर्य्यवसितायाम् उपमायाम् उपमेयस्य प्रकृतधर्म्माभिसम्बन्धान्न कश्चित्कालभेदोऽस्ति (२४०)।

---

(२३८) परभागस्य भ्राजसे इति क्रियाशेषांशभूतस्य से-प्रत्ययस्य व्यत्यासात् परिवर्त्तनात् ।

(२३९) 'चिरं जीवतु ते पुत्रो मार्कण्डेयमुनिर्यथा' इत्याशीर्वादादिरूपस्य।

(२४०) काम इव सुन्दरः सः रराज इत्यादौ, काम इव स रराजे-त्यादौ च यथाक्रमं उच्चारितं प्रतीयमानञ्च सौन्दर्य्यरूपं धर्म्मान्तरमवलम्ब्य उपमा प्रतीयते, रराजेति क्रिया च उपमेये तस्मिन्नेव अन्वेति, न तूपमानीभूते कामेऽपीति समुदायार्थः ।

Digitized by Google

यत्राप्युपात्तेनैव(२४१)सामान्यधर्म्मेण उपमा अवगम्यते, यथा, युधिष्ठिर इवायं सत्यं वदतीति, तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति च न पौनरुक्त्यम् आशङ्कनीयम्, रैपोषं पुष्णातीतिवत्(२४२) युधिष्ठिरइव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्(२४३)"। सत्यमेवैतत्, किंतु स्थितेषु प्रयोगेषु समर्थनमिदं नतु सर्व्वथा निरवद्यम्, प्रस्तुतवस्तुप्रतीतिविघातात्(२४४) इति, सचेतस एवात्र प्रमाणम् ।

असादृश्यासम्भवावप्युपमायाम् अनुचितार्थतायामेव पर्य्यवस्यतः । यथा,

ग्रथ्नाति काव्यशशिनं विततार्थरश्मिम्, [असा०]

-अत्र काव्यस्य शशिना, अर्थानाञ्च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

---

(२४१) यत्र साधारणधर्म्मान्तरासत्त्वस्थले। उपात्तेन भिन्नकालादितया उच्चारितशब्दप्रतिपाद्येन ।

(२४२) तथा च सत्यं वदतीति न साधारणधर्म्मवाचकम्, किन्तु प्रतीयमानं सत्यवादित्वमेव साधारणधर्म्मः ।

(२४३) रैपोषं पुष्णातीत्यत्र यथा (काशिकान्यासकारादिमते) धनकरणकपोषणाभिन्ना पुष्टिरिति रीत्या धात्वर्थस्य सामान्यविशेषभावेन विशेषणविशेष्यभावान्न पौनरुक्त्यम्, तथात्रापीति। एवमेव निदर्शनम्। अत्र युधिष्ठिर इवेत्यनेन सत्यवदनस्वभावत्वं प्रतीयते ।

(२४४) प्रस्तुतस्य प्राकरणिकस्य वस्तुनः उपमारूपस्य। साधर्म्यस्य झटिति प्रतीत्यनुदयेन प्रतीतेर्विलम्बरूपो विघातः ।

Digitized by Google

निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा
दिनार्द्धभाजः परिवेषिणोऽर्कात् ।। [अस०]

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्य्यमण्डलात् निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।।

उत्प्रेक्षायामपि, सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न यथाशब्दोऽपि, केवलस्य (२४५) अस्य साधर्म्यमेव प्रतिपादयितुं पर्य्याप्तत्वात्, तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा,

उद्ययौ दीर्घिकागर्भात् मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्य्यशङ्कासङ्कुचितं यथा ।।

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यं(२४६), तत्समर्थनाय यदर्थान्तरन्यासोपादानं, तत् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्व्विषयत्वमेतस्य, अनुचितार्थतैव दोषः । यथा,

---

(२४५) केवलस्य पदान्तरेणासमस्तस्य, समस्तस्य तु यथोचितयथार्थादिषु अन्यार्थत्वमस्त्येवेति महेश्वरः ।

(२४६) निरुपाख्यम् अलीकम् गगनकुसुमादि, तत्प्रख्यं तत्तुल्यम् । निर्व्विषयत्वम् (अनन्तरोक्तस्वरूपम्) निर्व्विषयत्वनाम दूषणम् । एतस्य अर्थान्तरन्यासस्य ।

Digitized by Google

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥

अत्राचेतनस्य तमसो दिवाकरात्त्रास एव न सम्भवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणं, सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः (२४७) । साधारणविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत्, तत् अपुष्टार्थत्वं पुनरुक्तता वा (२४८) दोषः । यथा,

स्पृशति तिग्मरुचौ ककुभः करै-
र्दयितयेव विजृम्भिततापया ।
अ-तनु-मान-परिग्रहया स्थितम्
रुचिरया चिरयापि दिनश्रिया ॥

अत्र तिग्मरुचेः ककुभाञ्च यथा सदृशविशेषणवशेन व्यक्तिः

---

(२४७) अनुपपत्तिनिवारणार्थं हि अर्थान्तरमुपन्यस्यते, न चात्रानुपपत्तिः अनवधारितस्वरूपत्वात् । निश्चितस्वरूपस्यैव हि उपपादनं सम्भवति । यत्र तु अतात्त्विकमपि कविप्रौढोक्त्या निश्चितस्वरूपम्, तत्र सुसितवसनालङ्कारायामित्यादौ अतात्त्विकस्यापि समर्थनं न दोषायेति बोध्यम् ।

(२४८) प्रतीतस्यापि पुनरुपादानं न प्रस्तुतार्थं पुष्णातीत्यपुष्टार्थत्वम् । "यदि अर्थतः प्रतीतस्यापि उपादाने पुनरुक्तिस्तदा अर्थपुनरुक्तत्वं दोषः" इति प्रदीपः ।

Digitized by Google

विशेषपरिग्रहेण(२४९) च नायकतया नायिकात्वेन व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वं भविष्यतीति किं दयितयेति स्वशब्दोपादानेन। श्लेषोपमायास्तु(२५०) स विषयः, यत्र उपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः, यथा,

स्वयञ्च पल्लवाताम्रभास्वत्करविराजिता।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा॥ -इति।

अप्रस्तुतप्रशंसायामपि उपमेयम् अनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयम्। यथा,

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते,
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम्(२५१)॥

अत्र, अचेतनस्य प्रभोरप्रस्तुत-विशिष्ट-सामान्य-द्वारेण(२५२)

---

(२४९) व्यक्तिविशेषः पुंस्त्रीलिङ्गविशेषः। व्यक्तिः प्रतीतिः।

(२५०) नन्वत्र श्लेषोपमैव स्यादित्यत आह श्लेषेति। साधारण-विशेषणबलात् कुत्र तथा उपमाप्रतीतिः कुत्र नेत्यत्र सहृदय एव प्रमाणम्।

(२५१) तृणमणिः काचादिमणिः प्रबालं वा। इवेत्यस्य सामान्य-मित्यनेनान्वयः मध्ये वा धुरि वेति क्वचित् पाठः।

(२५२) अप्रस्तुतं यद् विशिष्टम् (आहूतेष्वित्यादिविशेषणयुक्तम्) सामान्यं, तद्द्वारेण तन्मुखेन ; धिक् सामान्यमित्यनेनैवेत्यर्थः।

अभिव्यक्तौ न युक्तमेव पुनःकथनम्। तदेतेऽलङ्कारदोषाः यथासम्भविनोऽन्येऽप्येवञ्जातीयकाः (२५३) पूर्व्वोक्तयैव दोषजात्या अन्तर्भाविताः, न पृथक् प्रतिपादनमर्हन्तीति

सम्पूर्णमिदं काव्यलक्षणम् ।

इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम

दशम उल्लासः ।

।। समाप्तश्चायं श्रीमम्मटभट्टकृतः काव्यप्रकाशः ।।

---

(२५३) समासोक्तौ नपुंसके नायकव्यवहारसमारोपः, उपमायां उपमाविरुद्धोक्तिः, एवं विरोधे भिन्नाधरयोर्व्विरोधवर्णनमित्येवञ्जातीयकाः । एतेऽनुचितार्थत्वादौ अन्तर्भावमर्हन्ति । इत्यास्तां विस्तरः ।

अत्रैव शिवम्

॥ सम्पूर्णमिदं श्रीमद्धेमचन्द्रन्यायरत्नसङ्कलिततात्पर्य्यविवरणम् ॥

कलिकातासंस्कृतविद्यालयः

संवत् १९२२ । खृ० अब्दः १८६६ ।

Digitized by Google

# शुद्धिपत्रम्।



| अशुद्धम् | शुद्धम् | पृष्ठायाः | पङ्क्तौ |
|---|---|---|---|
| एमेश्र | एश्रमेव्य | ८ | ४ |
| दूषिव्यासि | दूष्मिव्यासि | ८ | ७ |
| सदृशं | सदृशकं | ८ | १६ |
| यदृच्छाय | यदृच्छया | ११ | १६ |
| परार्थं | परार्थम् | १३ | ६ |
| वाह्लिकादिः | वाह्लीकादिः (एवं सर्वत्र) | १६ | १२ |
| अतथ्याः तथ्याः | अतथ्या तथ्या | १६ | ७ |
| शुमव्जद | खिमव्जद (एवं परत्र) | ३२ | १६ |
| शुभ्रू | श्वभ्रू | ३२ | २१ |
| अविवक्षित | विवक्षित | ३७ | १२ |
| नूतनाङ्कुर | नूतनाङ्कुर | ५१ | १८ |
| प्रितयमे | प्रियतमे | ५४ | १२ |
| उच्छनत्व-स्तम्भ उरु | उच्छूनत्व-स्तम्भ-ऊरु | ५६ | १७ |
| रूपा | रूपः | ६४ | १३ |
| द्वादशाकत्मः | द्वादशात्मकः | ६६ | १० |
| व्यक्तव्यात्मिका | वक्तव्यात्मिका | ७७ | २० |
| तेनासितम् ॥ | ते नासितम् ॥ [ ६ ] | ७६ | १८ |
| मद्योत्थं | मदद्योत्थं | ८० | ६ |
| मुद्रसामलाङ्गो धम्मिल्लो | सामलाङ्गो | ८२ | ७ |

Digitized by Google

| अशुद्धम् | शुद्धम् | पृष्ठायाः | पङ्क्तौ |
|---|---|---|---|
| कलिअ | धम्मिल्लो कलिअ | ८२ | ८ |
| बलं गहिअ | बलं | ८२ | ९ |
| सरो | गहिअ सरो | ८२ | १० |
| मोदणी | रीदणी | ८६ | ६ |
| प्रम्नः | प्रम्नाः (एवं टीकायां) | ९० | ७ |
| वृहन्नला | वृहन्नला | १०० | १४ |
| विन्नंसनः | विस्रंसनः | १०२ | २ |
| व्यथ्यते | न व्यथ्यते | १०६ | १९ |
| बुध्येत | बोधेत | १११ | ३ |
| इत्यन्वयः | इति शेषः | १११ | १६ |
| तात्पर्थ्यंवृत्त्या | न तात्पर्य्यंवृत्त्या | ११२ | १६ |
| मपेचन्ती | मपेचमाना | ११९ | १३ |
| गुमज्जहिसि | णिमज्जहिसि | १२३ | १० |
| भीरोरपि | भीरुरपि | १२६ | ६ |
| रसः | दोषः | १३० | ५ |
| लग्ना | नग्ना (एवं टीकायां) | १४१ | ७ |
| पादान्तको | पादान्तगो | १५७ | १८ |
| कोदण्डाः | कोदण्डः | १६३ | ११ |
| अस्थानस्य | अस्थानस्य | १६५ | १० |
| स्थातुं | स्थातुं | १६६ | ६ |
| समुदास्य | समुदायस्य | ये | १९ |
| अनुप्रयुक्ते | अनुपयुक्ते | १८१ | १७ |
| विवरौषिणाः | विवरैषिणः | १८४ | १ |
| सुत्वामानं | सूत्रामानं | १८७ | ४ |

Digitized by Google

| अशुद्धम् | शुद्धम् | पृष्ठायाः | पङ्क्तौ |
|---|---|---|---|
| सोथवान् | शोथवान् | १६० | १६ |
| [ २०३ ] | [ २०२ ] | १६७ | १५ |
| सर्म्यो | सर्ग्यो | २०६ | ७ |
| प्रथतो | प्रथमतो | ,, | १६ |
| तरणी | तरुणी | २१२ | २० |
| वक्रोक्त्यर्थान्तरन्यासौ | वक्रोक्तिरथानुप्रासो | २२५ | ६ |
| परिस्पन्द | परिस्पन्द (एवं टीकायां) | २२३ | १० |
| असमासगतत्वेन | समासासमासगतत्वेन | २२६ | १६ |
| न प्रत्येकमेकादशविधत्वेन द्वाविंशतिविधत्वापत्तिः | नैकपद्याद्यादिभागस्य अन्यपद्यादिभागे यमनेन सङ्ख्याधिक्यम् | ३२२ | १३ |
| [ अद्व० आ० ] | [ द्वि०पा०आ० ] | २३३ | ८ |
| न वा | नवा | २३५ | १६ |
| अवश्येयं | अवश्येयं | २३७ | १ |
| अवसमासक्रम् | अव समासक्रम् | २३८ | १२ |
| स एव प्रधानः | तदेव प्रधानं | २४७ | १४ |
| वन्दो | बन्धो (एवं परत्र) | २५० | १७ |
| ससन्देहे | ससन्देहो | २५७ | ४ |
| अनुपयोगिना | अनुयोगिना | २५८ | ४ |
| वाचकात् यत्- | वाचकयत्- | २६८ | ८ |
| चक्षु | चुक्षु | २६६ | १० |
| क्रियया | क्रिया | २७१ | २२ |
| संशयान्तरं | संशयोत्तरं (एवं १८ पंक्तौ) | २७८ | १३ |
| एकदेवविवर्त्ति | एकदेशविवर्त्ति | २८० | १४ |

Digitized by Google

| अशुद्धम् | शुद्धम् | पृष्ठायाः | पङ्क्तौ |
|---|---|---|---|
| प्रग्भाव | प्राग्भावः | २८४ | ४ |
| वैदिश्च | वैदिश्च | २८४ | ५ |
| मार्गणमेव | अमार्गणमेव | २८४ | ७ |
| रशना | रसना (एवं परत्र) | २८६ | ८ |
| शूक | शुक | २६२ | १० |
| यत्र | यत्तु | २६८ | २ |
| एवन्यत्रापि | एवमन्यत्रापि | २६८ | १० |
| पुरः | पुनः | २६६ | १ |
| अप्राकरणिनामेव | अप्राकरणिकाणामेव | ३०१ | ६ |
| यत्र | यत्तु | ३०८ | ८ |
| क्षुरेण | खुरेण | ३१२ | ११ |
| वस्तनः | वस्तुनः | ३१८ | ४ |
| त्वन्या | त्वन्यो | ३२१ | १ |
| मुपमान | मुपमेय | ३२५ | २१ |
| स्वभावोपन्न | स्वभावोत्पन्न | ३३२ | ६ |
| अवसिस्यत | अवसितस्य | ३३६ | १ |
| यत्र | यत्तु | ३३६ | ५ |
| भ्रमस्य | भ्रमस्या | ३४२ | २ |
| व्यक्तिः | व्यक्ति- | ३६८ | १२ |

यासामशुद्धिशुद्धीनामवलोकनमात्रादेवावगतिर्भवति तासां प्रदर्शनमनर्थम् ।

Digitized by Google

